अथ शुद्धसर्गनिरूपणमुखेन परस्य ब्रह्मणः पारमैश्वरस्वभावविशेषो निरूप्यते– प्रागुक्तौ द्वावपि सर्गावशुद्धौ, गुणमयप्रवाहरूपत्वेन संसारसागरप्रवेशैकहेतुत्वात् । अयं तु परब्रह्मणः प्रादुर्भावविशेषलक्षणे निःश्रेयसैकान्तः पन्थाः । उक्तात् द्विविधात् सर्गात्परतरोऽयम् । तथा च वचनम्– 'शुद्धसर्गमहं देव वेत्तुमिच्छामि तत्त्वतः । सर्गद्वयस्य चैवास्य यः परत्वेन वर्तते ।' (प. २७) इति । अयमत्र शुद्धसर्गप्रकारः—आनन्दमयं परं ब्रह्म वासुदेवाख्यं प्रथममच्युतात्मना ततः सत्यात्मना ततः पुरुषात्मना च क्रमादाविर्भवति । वासुदेवादच्युतः, ततः सत्यः, ततः पुमान्, इति, अयमेवानन्त इत्यप्युच्यते । एवं क्रमादाविर्भूतानामेषां यथाविर्भावं स्वस्वपूर्वस्वरूपेणाभेदः, परा प्रतिष्ठितिश्च वासुदेवे । तथा चात्र वचनानि—'यत् सर्वव्यापकं देवं परमं ब्रह्म शाश्वतम् । चित्सामान्यं जगत्यस्मिन् परमानन्दलक्षणम् । ....... स वासुदेवो भगवान् ........ अच्युतं चासृजत् द्विज । सोऽच्युतोऽच्युततेजाश्च ........ सत्यं भास्वरविग्रहम् । उत्पादयामास........। स चिन्मयप्रकाशश्च........ पुरुषाख्यमनन्तं च........ । स च सत्यादभिन्नस्तु तस्मात् सत्यं तथैव हि । द्वाभ्यामेकात्मरूपं यत्तदभिन्नमथाच्युतात् । आश्रितः संस्थितस्ताभ्यामभेदेन तथैव हि। पुमान् सत्योऽच्युतश्चैव चिद्रूपं त्रितयं तु यत्। शान्तसंवित्स्वरूपे च वासुदेवेऽवतिष्ठते ।' (प. २७–२८) तत्र पुरुषस्य सर्वान्तर्यामितयाऽवस्थितिः अच्युतस्य सर्वावतारप्रभवत्वं च निरूपितम्–तथा च वचनम्–'स च वै सर्वदेवानामाश्रयः परमेश्वरः । अन्तर्यामी च तेषां वै ........ । ये स्विदाद्यावताराश्च लोकत्राणाधिकारिणः । सर्वान् विद्धि मदंशांस्तान् सर्वेऽशाः सत्यजाः स्मृताः । (प. २८) इति । यच्च परस्य ब्रह्मणः सर्गस्थितिसंहारव्यापारैकान्तं रूपं तत् स्थूलमुच्यते, यच्च सर्वहृदयगुहान्तस्थितिलक्षणं रूपं तत् सूक्ष्ममुच्यते, यत्तु आनन्दमयं स्वरूपं तत्परमुच्यते । एवं परस्य ब्रह्मणः स्थूलादिरूपो बोध्यः । तथाचोच्यते 'पालयिता चाह'मित्यादिना 'व्यापकेनामलेन चे'त्यन्तेन । (२९) या च मन्त्रमूर्तिर्भगवतः सा च सकलनिष्कलभेदेन द्विधा । इयमेव मन्त्रमूर्तिरुपासकानां बन्धविमोचनाय प्रभवति । तथाचोच्यते–' योगवीर्येणे ' त्यादिना 'बन्धपरिक्षय'मित्यन्तेन । एवं परस्य ब्रह्मण उपास्यस्य स्वरूपनिरूपणप्रसङ्गेनैतावदुदाहृतम् ।

अथ मोक्षस्य स्वरूपमुच्यते–' अनादि वासनायुक्तो यो जीव इति कथ्यते । तस्य ब्रह्मसमापत्तिर्याऽपुनर्भवता च सा ' (प. ३२) इति ।

अपुनर्भवो मोक्षः, सा च ब्रह्मसंपत्तिरित्युक्तं भवति । श्रूयते चायमर्थः 'अथ य एष संप्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' इति । सेयं संपत्तिः सरितां समुद्र इवेति निदर्शनोदाहरणेन विशदीक्रियते च–' सरित्सङ्घाद्यथा तोयं संप्रविष्टं महोदधौ । अलक्ष्यश्चोदके भेदः परस्मिन् योगिनां तथा ।' (प. ३७) इति । अनेन 'यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय' इति श्रुतिर्व्याख्याता । एतेन ब्रह्मसम्पत्तिर्ब्राह्मस्वभावापत्तिरित्यपि व्याख्यातं भवति । 'ब्रह्मण्येकात्मतां याति कर्मवर्गे क्षयं गते' (प. २७) इति येयमेकात्मतापत्तिरुच्यते, साऽप्येकस्वभावापत्तिरेव ।

तस्यास्यापवर्गस्य साधनभूतं ज्ञानमिदमत्र निरूप्यते–' ज्ञानेन तदभिन्नेन परिज्ञातेन नारद । जायते ब्रह्मसंपत्तिस्तस्मात् ज्ञानं समभ्यसेत् ।' (प.३०) अनेन ब्रह्माभिन्नज्ञानं साधनमित्युक्तं भवति, किं तत् ब्रह्माभिन्नं ज्ञानं तदेव विशदीक्रियते उत्तरत्र 'यत् सम्यक् ब्रह्मवेत्तृत्वं मनाग्या चैव भिन्नता । ईषद्ब्रह्मसमापत्तिस्तदभिन्नं तु वै स्मृतम् ।' इति । (प. ३२) तथा नारदः– 'ब्रह्माभिन्नं ततो ज्ञानं श्रोतुमिच्छामि तत्त्वतः ........ । सर्वोपाधिविनिर्मुक्तं ज्ञानमेकान्तनिर्मलम् । उत्पद्यते हि युक्तस्य योगाभ्यासात्क्रमेण तत् । तेन तत्प्राप्यते विप्र अन्यथा दुर्लभं भवेत् ।' (प. ३८) इति च । अयं भावः– इदं तु सम्यक् ब्रह्मवेत्तृत्वम्, येन ब्रह्मवेदनेन अयमहमस्मीति ब्रह्मक्षत्रादिभेदावलम्बिनी व्यवहारपथैकान्ता बुद्धिर्नानुवर्तेत, तच्च ब्रह्मापरोक्षलक्षणम्, परोक्षेण हि शास्त्रजन्येन ब्रह्मज्ञानेन न निरुद्ध्यते सुखदुःखादिवैचित्र्यव्यवहारः, तज्जातमपि तन्न सम्यक् जातम् । अतः सम्यग्वेत्तृत्वमपरोक्षमुच्यते, तदानीं मनागेव भेदः, यदयमात्मानं तदा ब्रह्मात्मकमेव पश्यति, योऽयमात्यन्तिको भेदः शरीरलक्षणपिण्डोपाधिकदेवमानुषादिलक्षणः स ह्यस्तंगतः, यदयं न तथाऽऽत्मानं पश्यति, किन्तु ब्रह्माहमस्मीति, अहमर्थानपायान्मनागस्ति तु भेदः, उपास्यं ब्रह्म उपासकं चात्मानमेषोऽहमस्मीति पश्यति, ब्रह्माहमस्मीत्यपरोक्षावभासेन ब्रह्म संपन्नो नाम, मोक्षेऽपि ह्ययमेवानुभवः, अथापि न परिपूर्णा ब्रह्मसंपत्तिः, परं ज्योतिरुपसद्य हि स्वेन रूपेण निष्पत्स्यते, इदानीं हि साधनदशा, प्रारब्धफलभूतं शरीरं तु नापगतम् । अशरीरं वा व सन्तं न प्रियाप्रिये स्पृशतः, यावच्छरीरपातं तयोः प्रसङ्गसंभावना ह्यनपाया, श्रूयते चैवम् 'तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये'

इति । तस्मादीषत् ब्रह्मसमापत्तिस्तदा । इदं चापरोक्षविज्ञानं योगाभ्यास-साध्यम्, न तु शास्त्राश्रवणमात्रसाध्यमित्येतत् ज्ञाप्यते 'उत्पद्यते हि युक्तस्य-योगाभ्यासात् क्रमेण वै ।' इत्यनेन । इदं चापवर्गसाधनमौपनिषदादपवर्ग-साधनादनतिरिक्तम् । ब्रह्मात्मकस्वात्मापरोक्षरूपतया ब्रह्माभिन्नं ज्ञानमिति निर्देशः । इदं च ब्रह्माभिन्नं ज्ञानं सत्ताख्यात् ज्ञानात्, तच्च सत्ताख्यं ज्ञानं क्रियात्मकात् ज्ञानादुद्भवतीत्युच्यते-'ज्ञानं तु द्विविधं विद्धि सत्ताख्यं च क्रियात्मकम् । सत्ताख्यस्य क्रियाख्येन अभ्यस्तेन भवेद्धृतिः ।.......। एवं क्रियाख्यात् सत्ताख्यं ज्ञानं प्राप्नोति मानवः । ब्रह्मण्यभिन्नं सत्ताख्यात् ज्ञानात् ज्ञानं ततो भवेत् । ब्रह्माभिन्नात्ततो ज्ञानात् ब्रह्म संपद्यते परम्' (प. ३१) इति । ननु कथमेतत् क्रियात्मकं ज्ञानमिति, कथं वा सत्तात्मकं ज्ञानं तस्मादिति । उच्यते-यथा गीतायां 'अमानित्वमदंभित्वमहिंसा क्षान्तिरार्जवम् ।.......। एतत् ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा ।' इति ज्ञानस्वरूपं निरूपितम्, तथेहापि ज्ञेयस्य ज्ञाने यत् साधनं तदखिलं ज्ञानमित्युच्यते, तच्च कायिकवाचिकमानसिकाक्रियारूपमिति इज्यादिरूपं ध्यानरूपमपि भवितुमर्हति । अत एव गीतायामपि विविक्तदेशसेवित्वमिति कायिकाक्रिया लक्षणं तत्त्वज्ञानार्थदर्शनमिति मानसिकक्रियालक्षणं ज्ञानं चाविशेषेण गृह्यते । इहापि-'शुचिरिज्या तपश्चैवे'ति कायिकस्य 'हृद्गतं न त्यजेद्ध्यान'मिति मानसिकस्य च क्रियाविशेषस्याविशेषेण ग्रहणम् । अनेन च सत्ताख्यं ज्ञानम्, तच्चेन्द्रियनिरपेक्षमात्मनो ज्ञानज्योतिर्मयस्य यत्प्रभाभूतं ज्ञानं स्वतः सर्वार्थग्रहणसमर्थं सत् प्रसरति, तदुच्यते, तच्च पूर्वोक्तैर्ज्ञानैरभ्यस्तैर्भवति । तथाभूते प्रसरति सत्ताख्ये ज्ञाने देवाद्यौपाधिकभेदरहितशुद्धप्रत्यगात्माऽवभासते, अत एव तदा सर्वैः समरसत्वं प्रकाशते, औपाधिकवैषम्यानवभासेन सर्वात्मनां ज्ञानैकरसतैवावभासते, सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि पश्यति । एवं साक्षात्कृतसमरसत्वस्य ब्रह्मणा सहापि समरसत्वमाविर्भवति । अपहतपाप्मत्वादिभिः स्वभावैः समरसो ह्ययं परब्रह्मणा, तत् सत्ताख्यात् ज्ञानात् ब्रह्माभिन्नज्ञानं निष्पद्यते । ततश्च ब्रह्मसंपत्तिः । पाद्मसंहितायामप्यस्मिन्नेव प्रकरणे वचनमीदृशं वर्तते । परं सत्ताख्यमित्यत्र सत्त्वाख्यमिति पाठः सत्ताख्यादित्यत्र सत्वाख्यादिति पाठो वर्तते, स्यादपि स्खालित्यम्, संशोध्य भावस्त्वयमेव ग्राह्यः । नातिरिच्यते च तावता भावतः ।

ननु विना ध्याननिष्ठां न तन्निष्पत्तिः, परं ब्रह्म च नोपासनापदमर्हति । करणानामभूमित्वात् । अत्रोच्यते । मन्त्रमालंबनविशेषमवलंब्य तदुपा-

सनेन तन्निष्पत्तिः स्यादेव, मन्त्राश्च तस्यैवांशाः। तथा च वचनानि—सर्वोपमानरहितं वागतीतं स्ववेदनम्। अस्तीति परमं वस्तु निरालंबमतीन्द्रियम्। आत्मन्यानन्दसंस्थस्य व्यज्यते करणैर्विना। करणाः प्राकृताः सर्वे चित्तजाश्च विशेषतः। उपायमत्र मन्त्रौघाः' (प ४०)। मन्त्राराधनसक्तस्तु तत्सिद्धीनामलोलुपः। भक्तस्तद्ध्याननिष्ठश्च तत्क्रियापरमो महान् (प.३९) इति। (अत्र ध्यानक्रियाशब्दाभ्यां बाह्यमानसयागावुपलक्ष्येते) 'एते भगवदंशाश्च शब्दा भास्वरविग्रहाः। कारणं सर्वमन्त्राणां भगवच्छक्तिबृंहिताः। परस्पराङ्गभावेन मन्त्रोत्पत्तिं व्रजन्ति हि।' (प. ४५) इति च। परस्य ब्रह्मणो मूर्तिः कापि मन्त्रमयी, तथा च वचनानि–'तच्छरीरं हि मे मान्त्रं परं परफलप्रदम्। ........ एष वर्णमयः पिण्डः परो मे मन्त्रविग्रहः। (प. ५७) 'ततो मन्त्रमयं रूपं कृत्वा शक्त्यात्मकं महत्।' (प. २४) इति। तन्मन्त्रमूर्तेः परस्य ब्रह्मण उपासनेन समरसत्वाधायकं ज्ञानं सिद्ध्यति। तथा चेदं शास्त्रं मन्त्रतदाराधननिरूपणप्रधानमिति सिद्धम्। तत्र मन्त्राणामाविर्भावक्रमः, मन्त्रभेदाश्चात्र षष्ठे सप्तमे पटले निरूपिताः। तेषु मन्त्रेषु प्रायः प्राधान्येन कतिचन मन्त्राः। समुद्धृत्य मन्त्रसूच्यामस्माभिः प्रदर्शितास्ते ततो बोध्याः। मन्त्राणामाविर्भावः 'योऽविकारः परः शुद्धः स्थितः संवेदनात्परे। स कथं व्यापकं ब्रह्म मन्त्रमूर्तित्वमागतः।....... तस्यैकां परमां शक्तिं विद्धि तद्धर्मचारिणीम्। ययोपचर्यते विप्र सृष्टिकृत्परमेश्वरः।........। शक्त्यात्मकः स भगवान् सर्वशक्त्युपबृंहितः। (प.५८) इत्यादिना उपपादितः। इदमुक्तं भवति–यद्यपि परं ब्रह्माविकारि नित्यशुद्धं नित्योदितानन्दस्वरूपं संविल्लक्षणम्। अथाप्यनन्यसामान्यया स्वाविनाभूतया कयाऽपि शक्त्या विशिष्टमिति सर्वप्रभवत्वम्, स्वयं सर्वशक्त्युपबृंहितत्वात् अविकृतं सदेव विविधारंभसमर्थं च भवति। तत्तत्कार्यारंभजननसमर्थास्तास्ताः शक्तयोऽप्यस्यैव। धर्मधर्मिभेदाच्च स्वरूपस्य नोपमर्दः। चिन्तामणिदृष्टान्तेनैतदुपपादनं त्वत्रानुरूपमिति प्रतिभाति। निदर्शनं चेदमत्रैवान्यत्र प्रकरणे श्रूयते–' चिन्तामणौ यथा सर्वममूर्तं संव्यवस्थितम्' (प. ३३) इति। तथाविधात् सर्वशक्त्युपबृंहितात् अकारादिविसर्गान्तः स्वरवर्गः अग्नीषोमात्मकः, कादिमान्तो व्यञ्जनवर्गः क्रमात् क्ष्मादिपुरुषान्ततत्त्वात्मना परमेश्वरेणाधिष्ठितः, यादिवान्तो वर्णः क्रमात् जाग्रदाद्यवस्थात्मनाऽधिष्ठितः शादिक्षान्तस्तुर्यातीतेनाधिष्ठितः प्रादुर्भवति। विस्तारेणैतदहिर्बुध्न्यसंहितायां निरूपितम्, इह तु दिङ्मात्रमुपदर्शितम् ' अग्नीषोमात्मकत्वेन तुल्यकालं हि मूर्च्छति ' (प. ५८) इत्या-

दिना । 'गमयेत् स्थूलरूपं वा सूक्ष्मं वा शक्तिवेष्टितम् । द्वयमेतत् समाश्रित्य लोकानुग्रहकृद्भवेत् । संप्रयच्छति मोक्षं च भोगं राज्यादिकं तु वा । यस्मात्तस्मादुपास्यो वै स्थूलसूक्ष्मोभयात्मकः ।' (प. ५८) इत्यनेन वर्णप्रादुर्भावक्रमेण ततः स्थूलसूक्ष्मभेदेन द्विविधस्य मन्त्रराशेः प्रादुर्भावोऽवबोध्यते । 'गमयेत् स्थूलरूपं वा सूक्ष्मं वे'ति वचने स्थूलसूक्ष्मशब्दाभ्यां मन्त्रा एव तु विवक्षिताः, पूर्वापरप्रकरणपर्यालोचनेनैतत्स्पष्टमवगम्येत । यदुक्तं स्वरादीनामग्नीषोमाद्यात्मत्वं तत् 'षोडशाक्षर आद्यस्तु अकाराद्यो द्विजोत्तम । विसर्गान्तः स्थितस्तस्मिन् अग्नीषोमात्मकः प्रभुः ।' (प. ४२) इत्यादिना 'स्वरूपमेतत् कथितं तुर्यातीतात्मनो विभोः ।' (प. ४२) इत्यन्तेन ग्रन्थेन प्रतिपाद्यते । तथा च सर्ववर्णप्रभवत्वं सर्वमन्त्रप्रभवत्वं एतद्द्वारकं च सर्वलोकाश्रयत्वं संविन्मयस्य परस्य ब्रह्मणः सिद्धम्, तथा च वचनम्— 'ग्राह्यग्राहकनिर्मुक्तं संविदानन्दलक्षणम् ।.... .. ...। यतः परः प्रभवति ............मन्त्रराट् ।.... .......। यत्र वै वर्णरूपेण सर्वे लोकाः प्रतिष्ठिताः ।' (प. ५७) इति ।

## अत्रेयं वर्णविभागसूची.

**अग्नीषोमात्मकं.**

| | | | | |
|---|---|---|---|---|
| | | क—क्ष्मा | ट—उपस्थम् | प—मनः |
| अ | आ | ख—आपः | ठ—पायुः | फ—अहङ्कारः |
| इ | ई | ग—तेजः | ड—पादः | ब—महान् |
| उ | ऊ | घ—वायुः | ढ—पाणिः | भ—प्रकृतिः |
| ऋ | ॠ | ङ—आकाशम् | ण—वाक् | म—पुरुषः |
| ऌ | ॡ | च—गन्धतन्मात्रं | त—घ्राणं | य—जाग्रत् |
| ए | ऐ | छ—रसतन्मात्रं | थ—रसना | र—स्वाप्नः |
| ओ | औ | ज—रूपतन्मात्रं | द—चक्षुः | ल—सुषुप्तः |
| अं | अः | झ—स्पर्शतन्मात्रं | ध—त्वक् | व—तुर्यः |
| | | ञ—शब्दतन्मात्रं | न—श्रोत्रम् | श, ष, स, ह, क्ष } तुर्यातीताः |

षोडशे पटले–' त्रित्रिकावस्थरूपेण त्रयं कृत्वा त्रिधा स्वयम्। राशीनां भगवान् विष्णुर्लोकानुग्रहकृत् स्थितः।' (प. १५६) इत्यादिना मन्त्राणां स्थूलसूक्ष्मपरभेदेन त्रेधाऽवस्थितानां प्रत्येकं स्थूलमध्यपरभेदेन त्रैविध्यं निरूपितम्। तथा च मन्त्रराशेर्नवविधत्वं सिद्धयति।

## तत्प्रकारश्चायम्

(स्थूल राशिः)
स्थूलस्थूलः २३–२२–२१ अङ्कुशादिगरुडान्तः
स्थूलमध्यः २०–१९–१८ गदादिशङ्खान्तः
स्थूलपरः १७–१६–१५ पद्मादिकौस्तुभान्तः
(सूक्ष्मराशिः)
सूक्ष्मस्थूलः १४–१३–१२ वराहादिसिंहान्तः
सूक्ष्ममध्यः ११–१०–९–८–७–६ अस्त्रादिहृदन्तः
सूक्ष्मपरः ५–४–३–२ मायादिलक्ष्म्यन्तः
(परराशिः)
परस्थूलः १ मूर्तिमन्त्रो मूलमन्त्रसहितः
परमध्यः २८–२७–२६–२५–२४ अनिरुद्धादिसत्यान्तः
परपरः २९ व्यापकमन्त्रः सप्तार्णः

(अत्र निर्दिष्टा अङ्का मन्त्रप्रत्यभिज्ञापका मन्त्रसूचीतो बोध्याः) मुख्यमन्त्राणामेष विभागः। उपकरणमन्त्राश्चान्ये सप्तमे पटले निरूपिताः।

तथाच सिद्धमेतत्—
यत् ब्रह्मणः श्रुतिशिरःप्रथितं स्वरूपं
निःश्रेयसं तदुपसंपदनं यदेतत्।
यद्वेदनं तदुपसंपदने निदानं
प्राधान्यतस्तदिदमेव निरूप्यतेऽत्र। इति।
विनोपासनया तस्य नापरोक्षं प्रसिद्धयति।
परोक्षाद्वेदनात्तस्य नोपसंपदनं भवेत्॥
तदवश्यमपेक्ष्यन्ते नियतास्तदुपासनाः।
नामरूपगुणादीनां भेदतस्तदुपासनाः॥

विकल्पतः समादेया विहिताः श्रुतिमूर्धसु ।
उपलक्षकमात्रास्ता नाधिकप्रतिरोधिकाः ॥
आनन्त्यान्नामरूपादेरन्यथा ताश्च वा कथम् ।
शब्दरूपधरस्यास्य मन्त्रमूर्तित्वभावना ॥
सुतरामुपपन्नैव सेयमत्र विधीयते ।
अन्तरादित्यविद्यायामुन्नाम्नोपासनं ननु ॥
विहितं सर्वपाप्मभ्य उदितत्वेन हेतुना ।
तत्तन्निमित्तपौष्कल्याद्वासुदेवादिनामभिः ॥
इह तावद्विधीयन्ते विविधास्तदुपासनाः ।
क्रियाविशेषा विहिता जपहोमादिलक्षणाः ॥
वासुदेवोपासनायामन्तरङ्गतयाऽन्विताः ।
उपास्यैकान्तसंन्बधात्तेषां तत्रान्तरङ्गता ॥
इह तावद्विधीयन्ते तन्मया निखिलाः क्रियाः ।
याभिस्तन्मयतां यायाद्वासुदेवपरायणः ।

अथ यदिदं प्रधानप्रतिपाद्यं परस्य ब्रह्मणो वासुदेवस्याराधनं तदेतत् मानसयागबाह्ययागभेदेन द्विविधं द्वादशे त्रयोदशे च पटले निरूपितम् । तत्र बाह्ययागस्थानतयाऽभिमेतेषु मण्डलकुम्भपुष्पमण्डलस्थण्डिलप्रतिमाद्येषु स्थानेषु मण्डले यागोपपादनाय मण्डलविन्यासक्रमः, तत्र मन्त्रन्यासक्रमश्च निरूपितः । इदमेव मण्डलमस्माभिः सूच्यां चित्ररूपेण प्रदर्शितम् । अनेन द्विविधेन यागेनानादिवासनोद्भूतचित्तदोषोपशमनेन भगवन्मयमात्मानं भावयतो विशुद्धप्रत्यगात्मसाक्षात्कारः परमात्मनि परमानन्दमये विलयश्च स्यात् । तस्यास्य यागस्याङ्गतया स्नानभूतशुद्धिमन्त्रन्यासादिविधयो नवमादिषु पटलेषु निरूपिताः। तत्तन्मन्त्राणां मुद्राविशेषा अष्टमे निरूपिताः । बाह्ययागशेषतया जपविधानं होमविधानं तदुपयुक्ताग्निकार्यविधानं च चतुर्दशे पञ्चदशे च निरूपितम् । मन्त्राराधनाङ्गभूतदीक्षाविधिः, तत्राधिकारिभेदेन तद्भेदाश्च षोडशे पटले निरूपिताः । अयं च तत्र निरूपितोऽधिभूतगणाधिदैवगणाध्यात्मगणवि[illegible]गः—

| | | ( अधिभूतगणः ) | | ( अधिदैवगणः ) | | ( अध्यात्मगणः ) |
|---|---|---|---|---|---|---|
| ( ईश्वरादिगणः ) | १ | ईश्वरः | १ | म | १ | सप्ताक्षरः |
| | २ | प्रधानम् | २ | भ | २ | सत्यादिपञ्चकम् |
| | ३ | बुद्धिः | ३ | ब | ३ | मूर्तिमन्त्रः |
| | ४ | अहङ्कारः | ४ | फ | ४ | लक्ष्मीमन्त्रः |
| | ५ | मनः | ५ | प | ५ | कीर्तिमन्त्रः |
| ( ज्ञानेन्द्रियगणः ) | ६ | श्रोत्रम् | ६ | न | ६ | जयामन्त्रः |
| | ७ | त्वक् | ७ | ध | ७ | मायामन्त्रः |
| | ८ | चक्षुः | ८ | द | ८ | हृदयमन्त्रः |
| | ९ | जिह्वा | ९ | थ | ९ | शिरोमन्त्रः |
| | १० | घ्राणम् | १० | त | १० | शिखामन्त्रः |
| ( कर्मेन्द्रियगणः ) | ११ | वाक् | ११ | ण | ११ | कवचमन्त्रः |
| | १२ | पाणिः | १२ | ढ | १२ | नेत्रमन्त्रः |
| | १३ | पादः | १३ | ड | १३ | अस्त्रमन्त्रः |
| | १४ | पायुः | १४ | ठ | १४ | सिंहमन्त्रः |
| | १५ | उपस्थम् | १५ | ट | १५ | कपिलमन्त्रः |
| ( तन्मात्रागणः ) | १६ | शब्दः | १६ | ञ | १६ | वराहमन्त्रः |
| | १७ | स्पर्शः | १७ | झ | १७ | कौस्तुभमन्त्रः |
| | १८ | रूपम् | १८ | ज | १८ | मालामन्त्रः |
| | १९ | रसः | १९ | छ | १९ | पद्ममन्त्रः |
| | २० | गन्धः | २० | च | २० | शङ्खमन्त्रः |
| ( महाभूतगणः ) | २१ | आकाशः | २१ | ङ | २१ | चक्रमन्त्रः |
| | २२ | वायुः | २२ | घ | २२ | गदामन्त्रः |
| | २३ | तेजः | २३ | ग | २३ | गरुडमन्त्रः |
| | २४ | आपः | २४ | ख | २४ | पाशमन्त्रः |
| | २५ | पृथिवी | २५ | क | २५ | अङ्कुशमन्त्रः |

अत्र प्रदर्शितस्याधिभूतगणस्य ईश्वरादेः मकारादिरधिदैवगणः सप्ताक्षरादिरध्यात्मगणश्च क्रमाद्यथासङ्ख्यं बोध्यौ ।

समयज्ञपुत्रकसाधकाचार्याणां लक्षणानि तेषामभिषेकप्रकारः, अभिषिक्तस्य मन्त्राराधनतत्सिद्धिप्रकारश्चेत्येतत् सप्तदशादिषु पटलेषु निरूपितम्। अथ बाह्ययागस्थानभूतार्चाप्रतिष्ठाविधिः, तच्छेषभूतबिंबप्रासादकल्पनाप्रकारादिकं च विंशे निरूपितम्। एकविंशे पवित्रोत्सवविधिर्निरूपितः। द्वाविंशे वैष्णवभेदस्तल्लक्षणं पञ्चकालभेदश्च निरूप्यते। अन्यच्च प्रासङ्गिकं श्राद्धविधानं संस्कारविधानं चोत्तरत्र निरूप्यते। अथ प्रायश्चित्तविधिर्निरूप्यते पञ्चविंशे। अभ्युदयमिच्छतां मन्त्रसाधनप्रकारो निरूप्यते षड्विंशादिषु। अन्ते योगसाधनविधिर्निरूप्यते। अवान्तरास्तत्र तत्र विषया सन्त्यनेकशः। अनुक्रमण्यां सर्वे ते समुद्धृत्य प्रदर्शिताः। तत्र केचिद्विचार्यांशाः सन्ति तेषां निरूपणे। स्याद्ग्रन्थविस्तरो भूयान् न तं प्रस्तावनाऽर्हति। प्रस्तावनाप्रवृत्तिर्हि प्रधानार्थ प्रदर्शने यथामति प्रधानार्थाः संगृह्यात्र निरूपिताः। अन्तः प्रविश्य सारार्थान् विमृशन्तु विपश्चितः।

## इदमद्य निवेद्यते।

अस्यां संहितायां षष्ठे सप्तमे च पटले ये निरूपिता मुख्यमन्त्रा उपकरणमन्त्राश्च, ये चान्ये दशमे निरूपिताः, सर्वे ते मन्त्राराधनपरस्य प्राधान्येनात्यन्तोपयुक्ताः समुद्धृत्य मन्त्रसूच्यां प्रदर्शिताः सन्ति। अन्ये तु पवित्रमन्त्रप्रभृतयः समयविशेषे समपेक्षिता नेह प्रकाशिताः। यद्यपि मन्त्रोद्धरणं लेशतोऽक्षरव्यत्ययेऽप्यत्यन्तविपरीतमनर्थदम्। यन्मन्त्रशरीरं मन्त्रनिष्ठैः सदाचार्यपरम्परया समधिगतं सुरक्षितं श्रेयःपदमिदानीमस्तप्रचारम्। वचनतोऽक्षरसंज्ञाकोशमवलम्ब्याधिगत्यानुपूर्वीविशेषं यथामतिबलं प्रकाशितं नामात्र। स्यान्नाम स्खालित्यस्याप्यवसरः। नैकमप्यस्मिन् समये शुद्धं पुस्तकमुपलभ्यते। बहोः कालात् संहिताप्रचारस्यात्यन्तलुप्ततया सुतरामशुद्धसंवलितान्येवैतानि पुस्तकानि। अथापि मन्त्रोद्धरणप्रसङ्गे विशेषतः संपाद्यावधानं समुद्धृता नाम मन्त्राः।

अथ च बाह्ययागोपयुक्तं यन्मण्डलं नवनाभमण्डलं नवपद्ममण्डलमिति वा नाम्ना ख्यातं चित्रात्मना कृतविन्यासं प्रदर्शितं नाम। तद्विन्यासोऽपि यथावचनं विरचितो नाम। अत्र कर्णोपकर्णरचनायां संहितान्तरावलोकने इयं रीतिरन्यथैव प्रतिभाति, परं तु—'तस्मिन भागद्वयेनैव कर्णं कुर्याद्विजोत्तम। चतुर्भिरुपकर्णं तु' इत्यस्मिन् वचने भागद्वयेन कर्णस्य भागचतुष्टयेनो-

पकर्णस्य च रचना प्रोच्यते । एतदनुरोधेनास्माभिरीदृशी रीतिराश्रिता । भागत्रयेणैवेति चेत् पाठस्तदा कोणं कोणमन्तःश्रेण्यामेकं बहिःश्रेण्यामेकं च प्रतिदिशं सिद्ध्येत् । तथा अन्तःश्रेण्यां पदद्वयं बहिःश्रेण्यां पदमेकमादाया-हृत्य भागत्रयेण कर्णरचना, अन्तश्रेण्यां पदमेकं बहिःश्रेण्यां पदत्रयं चादा-याहृत्य भागचतुष्टयेनोपकर्णरचना सिद्ध्येत् । उपलब्धेषु सर्वेषु पुस्तकेषु भागद्वयेनेत्येव पाठो दृश्यते । अतो यथापाठमस्माभिरियं रीतिरत्राश्रिता । किञ्च कर्णोपकर्णयोर्निवेश्यो वर्णविशेषश्च न प्रतिपादितः, पीतेन पीठको-णादी' त्यादिशब्देन सङ्ग्रहं संभाव्य वर्णविशेषः कर्णोपकर्णव्यत्ययाधायको विन्यस्तः । तदत्र विषये यथासंप्रदायं निर्णयः कार्यः ।

अस्मिन् संशोधनकर्मणि मन्त्रोद्धरणमण्डलविन्यासांशे मन्त्राराधन-परायणसत्कुलप्रसूताः काञ्च्यां विराजमानस्य भगवतो हस्त्यद्रिनाथस्य समाराधकाःश्रीराजगोपालभट्टाचार्याः साहाय्यं बहुकुर्वन्, श्रीमतस्तान् सरल-हृदयान्महाशयानस्मिन्प्रसङ्गे वयं साभिनन्दनं सबहुमानं मुहुरनुस्मरामः ।

वडोदरानगरस्थराजकीयसंस्कृतपुस्तकालयस्थं तालपत्रात्मकमेकम् C. L इत्येतत्संज्ञकम् अपरं च परमहंसपरिव्राजकाचार्यश्रीयदुगिरियति-राजसंपत्कुमारस्वामिनां तालपत्रात्मकं पुस्तकम् Y इत्येतत्संज्ञकं, तृतीयं श्रीरङ्गक्षेत्रस्थश्रीभाष्यभट्टार्यस्य तालपत्रात्मकं पुस्तकं S इत्येत्संज्ञकं, अपरं च अडयारपुस्तकालयस्य पत्रात्मकम् (A) एतत्संज्ञकम् । इत्येतत्पुस्त कचतुष्टयमवलम्ब्यास्याः संहितायाः संशोधनं कृतम् । एतेषु नैकमप्यत्यन्त-शुद्धम् । प्रायः अशुद्धावेकरूपम्, कचिदशुद्धिपरिहरणे मिथः समुपकारकं चैतत्पुस्तकचतुष्टयमभूत् । प्रामादिकं च प्रस्खलनं शुद्धिपत्रे परिहृतम् । तद-वलोक्यैव पाठो बोध्यः ।

अथापि स्यादशुद्धं चेत् सोढव्यं विबुधैरिदम् ।
निगूढा संहिता सेयमुन्नीता हि कथञ्चन ॥

एंबार् कृष्णमाचार्यः ( श्रीरङ्गम् )

संस्कृतपाठशालाप्रधानपण्डितः

वडताल्

# Articles and Books of reference for Studies in Pañcarātra.


| | | |
|---|---|---|
| 1. | Besnagar (pillar) inscription. | B. B. R. A. S. XXIII p. 104 (Lake). |
| 2. | " | J. R. A. S. 1909 p. 1053 (Marshall). |
| 3. | " | " p. 1089 (Fleet). |
| 4. | " | " " (Barnett). |
| 5. | " | " 1910 p. 817 (Fleet). |
| 6. | " | Ind. Antiquary 1911, p. 13 (Bhandarkar). |
| 7. | Ghosundi inscription | Proceedings of the Asiatic Society of Bengal vol. VI p. 77; Journal A. S. B. 56 (1887-88) (Kaviraj Samaldas and Dr. Hoernle). |
| 8. | Nanaghat inscription of Queen Nayanika | Buhler's discussion in the Arch. Survey of Western India vol. V. p. 74. |
| 9. | Vasudevic cult (Barnett) | Transactions of the third Congress of the History of Religions, vol. II, p. 48. |
| 10. | Monotheistic religion of Ancient India (Grierson) | " reported in the Asiatic Quarterly review for July 1909. |
| 11. | Gleanings from Bhaktamālā (Grierson) | J. R. A. S. 1910 pp. 108 & 270. |
| 12. | Note on Vāsudeva (Govindacarya) | Ind. Antiquary 1910 p. 319. |
| 13. | Pāñcartāra or Bhagavat Śāstra (Govindacarya) | J. R. A. S. 1911 p. 935. |

14. Orion ( Tilak )

15. Age of the Veda and Tilak's Orion (Jacobi) — Ind. Anti. XXIII, p. 248, 1894.

16. Incarnation Indian (Jacobi) — E. R. E. vol. 7.

17. Geschichte des Buddhismus (Kern) — Vol. I p. 17.

18. Notes on Tulsi Das (Grierson) — Ind. Anti. XXII p. 266 (1893).

19. Nārāyaṇīya ( translated by Grierson ) — Ind. Anti. vol. XXXVII (1908).

20. Nārāyaṇīya and the Bhāgavatas (Grierson) — Ind. Anti. XXXVII, p. 253.

21. Report in search of Sanskrit MSS. during 1883-84 (Collected works of R. G. Bhandarkar.)

22. Vaiṣṇavism, Śaivism and other minor religions of India ( Ditto ).

23. Divine Vāsudeva different from Kṣatriya Vāsudeva ( K. B. Pathak) B. B. R. A. S. XXIII p. 96.

24. Introduction to Pāñcarātra (Schrader) Adyar Library ed.

25. Das Sastitantra (Ditto) Z. D. M. G. 68.

26. Tato Jayam Udirayet (Sylvain Levi) Bhandarkar Commemoration volume.

27. Māthara Vṛtti (Belvalker) Ditto.

28. Sāttvatas or an interesting folk-movement and the light it throws on Indian culture ( Dr. S. K. Ayyengar ). Proceedings of the Second Oriental Conference, Calcutta.

30. The traditional author of the Vedānta Sūtras–Bādarāyaṇa or Kṛṣṇa Dvaipāyana (Mirashi V.V.). Ditto.

31. Notes on the Moksadharma section of the Śāntiparvan of the M.B. (Utgikar N. B.). Proceedings of the Fourth Oriental Conference.

32. The Kṛṣṇa Problem ( Tadpatrikar ) Annals of the B.O. R.I. Vol. X.

33. Development of early Hindu Iconography ( Macdonell ) J.R.A.S. 1916.

34. Early History of the Spread of Vaisṇavism in South India ( Dr. S. K. Aiyengar ).
35. History of the Tamils (P.T. Srinivasa Aiyengar).
36 Alwārgal Kālanilai (Tamil) by M. Raghava Aiyengar.
37. Materials for the Study of the Early History of the Vaisnava Sect (Hemcandra Ray Chaudhari) Calc. Univ.
38. Vaikhānasa Dharma Sūtra—Text and introduction (Rangacari) Ramanujacarya Oriental Institute, Madras.
39. Kashmir Saivism (J. C. Chatterjee) Kaṣhmir Series.
40. Indian Philosophy (Das Gupta) Vol. I
41. „ (Radhakrishnan) 2 Vols.
42. History of Sanskrit Literature ( Winternitz ) Vol. I.
43. „ ( Vaidya ) Vol. I.
44 Some Problems in Sanskrit Literature (Winternitz).
45. Comparative Studies in Vedantism (Mahendranath Sircar) Oxf. Univ. Press.
46 Upanisads like Mahānārāyaṇa, Brahmabindu, Mukti, Jābāla, Kausītaki, Vāsudeva etc. etc.
47. Mahabhārata-Mokshadharma-Nārāyanīya.
48. „ Āśvamedhikaparvan.
49. Agnipurāna.
50. Viṣṇupurāṇa.
51. Varāhapurāṇa.
52. Śrī-Bhāgavata.
53. Āgamaprāmānya (Yāmunācārya).
54. Tantrasāra (Ānandateertha)
55. Nyāya-siddhanjana (Vedantadesika).
56. Nyāya-pariśuddhi ( Do. )
57. Pāñcarātrarakṣā ( Do. )
58. Tantraśuddhākhyam Prakaraṇam ( Bhattāraka Vedottama Triv. Series).

# 1. A List of the Published Samhitas.

## मुद्रितसंहिताग्रन्थानां सूची

1. *अहिर्बुध्न्यसंहिता (Nāgarī) Adyar Library, Madras, 1916 (in 3 volumes).
2. ईश्वरसंहिता (Telugu) Sadvidyā Press, Mysore, 1890.
3. „ (Nāgarī) Sudarśana Press, Conjeevaram, 1923.
4. कपिञ्जलसंहिता (Telugu) Kalyāṇakumāravilāsa Press, Tirukkovalur, no year (rest as in 2).
5. जयाख्यसंहिता (Nāgarī) Oriental Institute, Baroda, 1931.
6. पराशरसंहिता (Telugu) Vāgīśvarī Mudrākṣaraśālā Press, Bangalore, 1898.
7. पाद्मतन्त्र ( „ ) 1891; rest as in 2.
8. „ ( „ ) ed. Yadugiri Yatirāja Sampatkumāra Muni, Melkot (2 vols.), 1924.
9. बृहद्ब्रह्मसंहिता ( „ ) Śrī Venkeśvaranilaya Press, Tiruppati, 1909.
10. „ (Nāgarī) Ānandāśram Press, Poona, 1912.
11. भारद्वाजसंहिता-सपरिशिष्ट (Telugu) no year, rest as in 2.
12. लक्ष्मीतन्त्र ( „ ) 1888; rest as in 2.
13. विष्णुतिलक ( „ ) Bangalore, 1896.
14. विष्णुसंहिता (Nāgarī) Travancore Govt., Trivandrum, 1926.
15. श्रीप्रश्नसंहिता (Grantha) Maṅgalavilāsa Press, Kumbakonam, 1904.
16. सात्वतसंहिता (Nāgarī) 1902, rest as in 3.

---

*A portion of the Ahirbudhnya was first printed in Telugu; but it is not worth description.

# 2. A List* of the Unpublished Saṁhitās Preserved chiefly in S. Indian Libraries.

## हस्तलिखितग्रंथसंग्रहस्थ-अमुद्रितसंहितासूची

1. अगस्त्यसंहिता (अगस्त्यसुतीक्ष्णसंवादः) A. L. II p. 180 (a); M. G. L. 5189, 5190; O. I. 5137, 6654 (c), 7991.
2. „ (अगस्त्यनारदसंवादः) M. G. L. 5192.
3. „ M. G. L. 5191 (in patalas).
4. अनन्त see शेष.
5. अनिरुद्धसंहिता A. L. II. p. 180 (a); Trien. II. I. C. 1673 ; O. I. 6638, 6645, 7959.
6. उपेन्द्रसंहिता (उपेन्द्रकण्वसंवादः) M. G. L. 5209. Probably a later work than the one mentioned in the Pādma S.
7. काश्यपसंहिता A. L. II. p. 180 (a); O. I. 6639 (b), 6654 (a).
8. काश्यपोत्तरसंहिता M. G. L. 5215 to 5218 ; not mentioned in the Agnipurāna and the Samhitā lists.
9. नारदीयसंहिता A. L. II. p. 180 (b); Trien. III. I. B. 2503.
10. परमसंहिता A. L. II. p. 180 (b), M. G. L. 5273.

---

* This list cannot claim to be exhaustive, as the South Indian Libraries are mainly taken into consideration owing to the reason that the Saṁhitā MSS. of Pāñcarātra are but few in number in the other Libraries in India and Europe and are represented mostly in one of the chief South Indian Libraries.

*Abbreviations.—*

A. L. Catalogue of Sanskrit manuscripts in the Adyar Library, Parts I, II. 1926,'28.

Burnell. Classified Index of Sanskrit Manuscripts in the Palace at Tanjore, 1880.

Mysore. Catalogue of Sanskrit Manuscripts in the Mysore Govt. Oriental Library, Pts. 1, 2 (1900, 1910)

M. G. L. Descriptive Catalogue of Sanskrit Manuscripts in the Madras Govt. Oriental MSS. Library, Vol. XI, 1911.

M. G. L. Triennial Catalogues of Sanskrit MSS. acquired for the Library 1913-'28.

O. I. Oriental Institute Baroda.

C. S. Calcutta Sanskrit College Des. Catalogue of MSS.

I. O. India Office Catalogue.

Notices : Notices of MSS. published under the orders of the Govt of Bengal by R. L. Mitra.

11. पारमेश्वरसंहिता A. L. II. p. 180 (b); Burnell p. 205 (a); M G. L. 5297; Mysore II p. 191; M.G.L. 5297; Trien. II. I. C. 1657; O. I. 6641, 6648, 13209, 13214.
12. पौष्करसंहिता A. L. II. p. 181 (a); O. I. 11484; C. S. v. 39; I. O. iv. p. 846 or No. 2531.
13. प्रकाशसंहिता A. L. II. p. 181 (a); M. G. L. 5300. Also known as परमतत्त्वनिर्णयप्रकाशसहिता. This is not mentioned in the Agnipurāṇa and Saṁhitā lists.
14. प्रद्युम्नसहिता Trien. iv. I. C. 3959 (b).
15. ब्रह्मसंहिता M. G. L. 5321; Trien. iv. I. A. 3050 (c); Mysore II p. 191, where the title is ऋषिरात्रं ब्रह्मसंहिता.
16. भार्गवसंहिता Trien. II. I. C. 1733 (a).
17. महासनत्कुमारसंहिता A. L II. p. 181 (a); Trien. iv. I. B. 3456: The title in the latter is पाञ्चरात्र (सनत्कुमारोक्त).
18. मार्कण्डेयसंहिता A. L. II. p. 181 (a); Trien. iv. I. a. 2936.
19. लक्ष्मीनारायणसंहिता O. I. 13301.
20. वसिष्ठसंहिता A. L. II. p. 181 (a); M. G. L. 5360 to 5362; O. I. 7965.
21. वासुदेवसंहिता Trien. iv. I. C. 3959 (c)
22. विश्वामित्रसंहिता A. L. II. p. 181 (a); O. I. 6640; Trien. II. I. C. 1601, iv. I. a. 2953, iv. I. C. 3960-'61; M. G. L. (Supplementary) XXV. 14169, according to which it forms part of Jayottarasaṁhitā.
23. विष्णुतत्त्वसंहिता A. L II. p. 181 (a); O. I. 7958.
24. विष्णुतन्त्र (ब्रह्मविष्णुसंवाद) O. I. 7960.
25. विष्णुसंहिता (व्यासशौनकसंवादः) A. L. II. p. 181 (a); contains the Saṁhitā list.
25. विष्णुसंहिता (वसिष्ठजाबालिसंवादः) M. G. L. 5366.
26. विष्णुरहस्य (पाञ्चरात्र?) Burnell 205 (b).
27. विष्वक्सेनसंहिता Trien. iv. I. C. 3702.
28. विहगेन्द्रसंहिता A. L. II. p. 181 (b); Burnell 205 (b); Trien. iv. I. C. 3957; O. I. 6406, 6610.
29. वैखानसतन्त्र Burnell 205 (b).
30. शेषसंहिता (or अनन्तसंहिता) A. L. II. p. 181 (b); M. G. L. 5377. Later than the Anantākhya mentioned in the Pādma list. This may be the Ananta of the Kapiñjala and Viṣṇu lists.

31 सनत्कुमारसंहिता A. L. II p. 181 (b); O. I. 6639 (a), 6654 (d), 9813 (a); Trien. II. I. A. 1327 (a), (अमृतनारायणकल्प).

32 सुदर्शनसंहिता A. L. II. p. 181 (b); O. I. 9330, 5732, 8438. Not mentioned in the Agnipurāṇa and Saṁhitā lists.

33. हयशीर्षसंहिता A. L. II p. 181 b; I. O. iv. 2611; Notices VI, p. 61.

34. हिरण्यगर्भसंहिता Trien. III. 1. B. 2614. Probably of Pāñcarātra Āgama.

## 3. A List of Important Prayoga Works and Commentaries Based on the Saṁhitās.

## पाञ्चरात्रप्रयोगग्रन्थानां व्याख्याग्रन्थानां च सूची ।

1. अङ्कुरार्पणविधिः M. G. L. 5188.
2. „ O. I. 9879 (a).
3. अर्चनातिलक (नरसिंहयज्वा) O. I. 9818 (b).
4. अर्चनोत्सवादिविधिः Trien. I. 1. B. 370*
5. अर्चादीज्याप्रभावः M. G. L. 5193.
6. अर्चाविधिः etc. O. I. 6609.
7. आगमप्रयोगविषयः M. G. L. 5204.
8. आराधनकारिका „ 5205.
9. आराधनोत्सवसङ्ग्रहः „ 5206.
10. ईश्वरसंहिताव्याख्या (अलशिङ्गभट्ट) Adyar II. p. 180 (a); Mysore II. p. 191; O. I. 13207.
11. उत्सवविधिः O. I. 6405.
12. „ „ 6647.
13. उत्सवसङ्ग्रहः „ 6607.
14. „ „ 6608.
15. „ Trien. IV. I. C. 3286†, 3962.
16. „ With Telugu Commentary Trien. IV.I.C. 3421.

* Contains extracts from Atri, Kāśyapa, Paramapuruṣa, Nārada, Viṣṇutantra, Pratiṣṭhātantra and Pādmasāra.

† This codex contains extracts from the following unpublished Saṁhitās—Pārameśvara, Vāsudeva, Vasiṣṭha and Brahma S.

17. उत्सवादिप्रयोगसङ्ग्रहः ( कपिञ्जलानुसारी ) Mysore I. p. 301.
18. „ „
19. „ „
20. उद्वासनप्रबन्धः „
21. क्रियाकैरवचन्द्रिका (नृसिंहयज्वा) „
22. „ (वरददेशिक) Trien. iv. 1. B. 3204 (a). Based on Pādma S.
23. „ (वराहगुरु) O. I. 6656, 6409.
24. क्रियाप्रदीपः M. G. L. 5233.
25. गृहार्चाप्रतिष्ठाविधिः „ 5236.
26. „ (परमसंहितायां) M. G. L. 5237.
27. „ (acc. to शौनकपाञ्चरात्र) „ 5238-'39.
28. „ ( „ पराशरसंहिता) „ 5240-'41.
29. „ „ 5242.
30. गृहार्चासम्प्रोक्षणविधिः „ 5243-'46.
31. „ (acc. to शौनकपाञ्चरात्र) „ 5247.
32. जीर्णोद्धारः „ 5249.
33. तन्त्राधिकारः Burnell 207 (b).
34. तन्त्राधिकारनिर्णयः ( भट्टोजिभट्ट) I. O. IV. 2534.
35. ध्वजलक्षणम् M. G. L. 5262.
36. पञ्चकालानुष्ठानक्रमः Trien. IV. I. C. 4093 (d). For a similar work see no. 38.
37. परार्थयजनाधिकारनिर्वाहः (सुन्दरवीरराघव) Trien. II. 1. C. 1679.
38. पवित्रारोपणाद्युत्सवप्रयोगः Mysore I. p. 301.
39. पाञ्चकालिकपद्धतिः M. G. L. 5278. Similar to 35.
40. पाञ्चरात्रकण्टकोद्धारः ( वाधूलवरदाचार्य ) M. G. L. 5279. In support of आगमप्रामाण्य.
41. पाञ्चरात्रनिबन्धः Mysore I. p. 302. On Subjects like Prāyaścitta, Pratiṣṭhā and Pūjā.
42. पाञ्चरात्रवचनसागरः Trien. I. 1. C 776.
43. पाञ्चरात्रसंहिताः Trien. I. 1. B. 352.*
44. पाञ्चरात्रसारसङ्ग्रह. Trien. I. 1. C 762.

* Contains extracts from the following unpublished Saṁhitās—Vyāsa, Vāyu, Agastya, Viṣṇutantra, Pādmatantra, Visvaksena, Aniruddha, Viṣṇutattva, Paramapuruṣa, Prahlāda, Viṣṇutantra and Vṛddhapādma,

45. पाञ्चरात्रागम M. G. L. 5287; O. I. 10002.
46. „ Trien. III. 1. B. 2678.
47. „ Trien. IV. 1. B. 3257.*
48. „ with प्रदीपिका alias मंत्रदीपिका a Telugu commentary by Peddanārya. M. G. L. 5284. Mostly on Pādma.
49. „ (मुद्राविधिः) „ 5286.†
50. पाञ्चरात्रागमसङ्ग्रहः „ 5289.
51. पाद्मप्रयोग „ 5295.
52. पाद्मसहितातन्त्रम् M G L. 5296. Different from Nos. 5290-'94 containing पाद्मतन्त्र.
53. पाद्म-ज्ञानपादव्याख्या O. I. 7407.
54 पारमेश्वरविवृति. (नृसिंहयज्वा) Trien. II. 1. C. 1658, IV. 1. C. 3959 (a); Adyar II. p. 180 (b).
55 पूजापद्धतिः (पाञ्चरात्रे) Mysore I. p. 302.
56. „ „
57 पूजासङ्ग्रहः Trien. III. 1. C. 2856 ‡
58. „ O. I. 6401.
59. प्रतिष्ठापद्धतिः Mysore II. p. 191.
60. प्रतिष्ठापाञ्चरात्रम् O. I. 215
61. प्रतिष्ठाप्रयोगः (वरद्) M. G. L. 5302 on the lines of Pādma.
62. बहुबिम्बपूजाविधिः „ 5320.
63. ब्रह्मोत्सवादिप्रयोग Mysore II. p. 191.
64. भगवदाराधनसङ्ग्रह. Mysore I. p. 302.
65. भगवद्विग्रहप्रतिष्ठाविधिः (शौनकोक्ता) M. G. L. 5328.
66. „ (वसिष्ठोक्ता) Trien. II. 1. B. 1343 (i); titled भगवत्प्रतिष्ठाविधि.
67. „ Trien. II. 1. B. 1343 (a). Titled भगवत्प्रतिष्ठाविधि

* Has extracts from Visvāmitra, Aniruddha, Visvaksena, Mārkandeya, Khagendra, Visnu, Vasistha, Rsirātra, Agastya, Visnutantra, Nāradîya Samhitâs and from Mantradevatāprakāsikā.

† Colophons read as पाद्मे तन्त्रे विश्वामित्रसंहितायां, also as मन्त्रदेवताप्रकाशिकायाम्. Contains a collection of extracts from ancient works.

‡ Has extracts from Paramapurusa, Visnurahasya, Visvaksena, Nârâyana, Agastya, Brahma, Nārada, Jayottara, Pauskara and Kasyapa Samhitās.

68. भरद्वाजसंहिताव्याख्या M. G. L. 5332–'33; Adyar II. 181 a; O. I. 11611.
69. भार्गवतन्त्रप्रयोगः Trien. II. 1. C. 1733 (b). Based on भार्गवसंहिता.
70. भूपरीक्षादि M. G. L. 5334.
71. मन्त्रदेवताप्रकाशिका ( विष्णुदेव ) Burnell 208 (a). 2 copies.
72. लक्ष्मीशसमाराधनसङ्ग्रहः ( वात्स्यवरदार्य ) M. G. L. 5357.
73. विष्णुसहिताव्याख्या 'तत्त्वप्रदीपिका' (नागस्वामि ?) O. I. 6643.
74. विष्ण्वादिप्रतिष्ठाविधिः O. I. 11006, acc. to हयग्रीवसंहिता
75. सम्प्रोक्षणविधिः Mysore I. p. 302.
76. ,, M. G. L 5400
77. सात्त्वतविवरणम् Adyar p 181 (b).
78. सात्त्वतसहिताव्याख्या (अलशिङ्गभट्ट ) Adyar II. p 181 (b); Mysore II. p. 191, Trien. III. 1. a. 2275.
79. सात्त्वतामृत (योगानन्दभट्ट) Trien. I. 1. C. 784 (a)
80 सात्त्वतामृतसार ( ,, ) ,, 784 (b).
81. सुदर्शनकल्पसारसमुच्चयः Trien I 1. a. 79.

# विषयानुक्रमणी.

विषयाः पत्रसङ्ख्या

## पटलः ( १ ).



## पटलः ( २ ).

## पटलः ( ६ ).

## पटलः (७).

## पटलः (८).

## पटलः ( ११ )



## पटलः ( १२ ).

**पटलः ( १३ ).**

**पटलः ( १७ )**

## पटलः ( १८ )



## पटलः ( १९ )

## पटलः (२१).

## पटलः ( २२ )

## पटलः ( २५ )

## पटलः ( २५ )

## पटलः ( २६ ).

## पटलः ( २७ ).

विषयाः पत्रसङ्ख्या

**पटलः ( ३० ).**



**पटलः ( ३१ ).**



**पटलः ( ३२ ).**



**पटलः ( ३३ ).**





## षष्ठादिषु पटलेषु *समुद्धृतानां मन्त्राणां सूची

### मुख्यमन्त्रवर्गः

१ ओं क्ष्मीं क्षिः नमः, नारायणाय विश्वात्मने ह्रीं स्वाहा ( मूलमन्त्रो मूर्तिमन्त्रसहितः ) प. ४५

**( शक्तिचतुष्कमन्त्राः प. ४८–४९ ).**

२ ओं लां लक्ष्म्यै नमः, परमलक्ष्मावस्थितायै ला श्रीं ह्रीं स्वाहा ( **लक्ष्मीमन्त्रः** )

३ ओं कां कीर्त्यै नमः, सदोदितानन्दविग्रहायै ह्रीं श्रीं स्वाहा ( **कीर्तिमन्त्रः** )

४ ओं जां जयायै नमः, अजितधामावस्थितायै जा श्रीं स्वाहा ( **जयामन्त्रः** )

५ ओं मां मायायै नमः, मोहातीतपदाश्रितायै मा श्रीं स्वाहा ( **मायामन्त्रः** )

**( अङ्गषट्कम् प. ४९–५१ ).**

६ ओं ह्र नमः, ओं हंसः शुचिषदे हृदयाय नमः ( **हृन्मन्त्रः** )

७ ओं हां नमः, परब्रह्मशिरसे स्वाहा ( **शिरोमन्त्रः** )

८ ओं ह्रीं नमः, प्रद्योतनिशिखायै वषट् ( **शिखामन्त्रः** )

९ ओं ह्रुं नमः, शाश्वतशरण्यकवचाय हुम् ( **कवचमन्त्रः** )

१० ओं ह्रौं नमः, प्रकाशप्रज्वलनेत्राय वौषट् ( **नेत्रमन्त्रः** )

११ ओं हः नमः, [1]दीप्तोदप्तप्रभ अस्त्राय फट् (?) ( **अस्त्रमन्त्रः** )

**( आस्यत्रयम् प. ५१–५२ ).**

१२ ओं ट्र्ज्रौं [2]ट्र्ज्रौं नमः, ज्वलनायुतदीप्तये नृसिंहाय स्वाहा ( **नृसिंहमन्त्रः** )

१३ ओं ट्र्घ्रौं [3]ट्र्घ्रौं नमः, अनन्तभासाय कपिलाय स्वाहा ( **कपिलमन्त्रः** )

१४ ओं ट्स्व्रौं [4]ट्स्वौं नमः, कृष्णपिङ्गलाय वराहाय स्वाहा ( **वराहमन्त्रः** )

---

* इदमत्र ज्ञाप्यते–इह निरूप्यमाणाया मन्त्रानुपूर्व्या विमर्शसमये मन्त्रोद्धरणप्रकारप्रतिपादकश्लोकेषु शुद्धिपत्र पाठान्तरं चानुसृत्य दृष्टिर्देया ।

१ दीप्तिमत्प्रभायास्त्रायेति संप्रदायतः श्रूयते ।

२ टकारजकारझकाररेफसमुदायात्मकं ऊकारौकारानुस्वारात्मकस्वरत्रयोपेतं पिण्डाक्षरविशेषात्मकं बीजाक्षरम् ।

३ टकाररेफघकाररेफसमुदायः ऊकारौकारानुस्वारसंयुतो बोध्यः ।

४ टकारसकारवकारसमुदायः ऊकारौकारानुस्वारसयुतो बोध्यः ।

( **भूषणायुधपरिवारोपायुधमंत्रा अथवा लाञ्छनमंत्राः** प. ९३–९४ ).

१५ ओं ठं ह्रूं ठ नमः प्रभात्मने कौस्तुभाय स्वाहा ( **कौस्तुभमन्त्रः** )

१६ ओं ल्स्वीं नमः, स्थलजलोद्भूतभूषिते वनमाले स्वाहा ( **वनमालामन्त्रः** )

१७ ओं ब्सु नमः श्रीनिवासपद्माय स्वाहा ( **पद्ममन्त्रः** )

१८ ओं ह्रूं ह्रू ह्रूं नमः महाशङ्खाय स्वाहा ( **शङ्खमन्त्रः** )

१९ ओं ज्रः क्रः फट् ह्रू नमः फट्फट्फड्विष्णुचक्राय स्वाहा ( **चक्रमन्त्रः** )

२० ओं ग्म्लें जूं नमः सहस्राश्रिगदे स्वाहा ( **गदामन्त्रः** )

२१ ओ क्ष्रूौं ख्रौंः नमः अनन्तगतये गरुडाय स्वाहा ( **गरुडमन्त्रः** )

२२ ओ र्णां कह्व कह्व ठठ वरपाशाय स्वाहा ( **पाशमन्त्रः** )

२३ ओं ल्द क्रूं निशितघोणाय अङ्कुशाय स्वाहा ( **अङ्कुशमन्त्रः** )

( **सत्याद्युपाङ्गपञ्चकम्** प. ९५–९६ )

२४ ओं क्षौं ओं ( **सत्यबीजमन्त्रः** )

२५ ओ ह्रूं[1] ओं ( **वासुदेवबीजम्** )

२६ ओ सू ओ ( **सङ्कर्षणबीजम्** )

२७ ओं षीं ओ ( **प्रद्युम्नबीजम्** )

२८ ओं शां ओं ( **अनिरुद्धबीजम्** )

२९ ह्स्ष्म्ल्रं[2] ( **परव्यापक [मन्त्रः]** ) प. ९७

**उपकरणमन्त्रवर्गः**

( **पीठदेवतामंत्राः—आधारषट्कम्** प. ६०–६१ ).

३० ओं ह्रीं [ आधारशक्त्यै ] नमः ( **आधारशक्तिमन्त्रः** )

३१ ओं ह्रूं [ कूर्मकालाग्नये ] नमः ( **कूर्ममन्त्रः** )

३२ ओं हां [ अनन्ताय ] नमः ( **अनन्तमन्त्रः** )

३३ ओं क्ष्म्लां [ धरायै ] नमः ( **धरामन्त्रः** )

३४ ओं स्वां [ क्षीरोदाय ] नमः ( **क्षीरोदमन्त्रः** )

३५ ओं पुं आधारपद्माय नमः ( **आधारपद्ममन्त्रः** )

---

१ हे इति सम्प्रदायतः श्रूयते ।

२ हकारसकारषकारमकारलकाररेफसमुदायात्मकोऽनुस्वारोपेतो बोध्य ।

( पीठदेवतामंत्राः । आसनषट्कम् प. ६१-६२ ).

३६ ( १ ) ओं ध्लृं धर्माय नमः ( **आधाराद्यासनमन्त्रः** )
( २ ) ओं ध्लृं ज्ञानाय नमः
( ३ ) ओं धॄं वैराग्याय नमः
( ४ ) ओं धृं ऐश्वर्याय नमः
( ५ ) ओं जृं अधर्माय नमः
( ६ ) ओं जॄं अज्ञानाय नमः
( ७ ) ओं ज्लृं अवैराग्याय नमः
( ८ ) ओं ज्लृं अनैश्वर्याय नमः
( ९ ) ओं ब्लृं ऋग्वेदाय नमः
( १० ) ओं ब्लृं यजुर्वेदाय नमः
( ११ ) ओं वॄं सामवेदाय नमः
( १२ ) ओं वृं अथर्ववेदाय नमः
( १३ ) ओं लृ कृतयुगाय नमः
( १४ ) ओ लृं त्रेतायुगाय नमः
( १५ ) ओं ल्लृ द्वापराय नमः
( १६ ) ओं ल्लृं कलियुगाय नमः

३७ ओं ब्सुं सितपद्माय नमः ( **अव्यक्तपद्ममन्त्रः** )

( **धामत्रयमन्त्राः** )

३८ ( १ ) ओं हं [ सूर्यमण्डलाय ] नमः
( २ ) ओं स [ सोममण्डलाय ] नमः
( ३ ) ओं रं [ अग्निमण्डलाय ] नमः

३९ ओं अहं सः, यद्वा—ओं ओं ओं ( **भावासनमन्त्रः** )

( **द्वारदेवतामंत्राः** प. ६२ ).

४० ओं क्ष्म्रां क्षेत्रपालाय नमः ( **क्षेत्रपालमन्त्रः** )

४१ ( १ ) ओं श्रां श्रियै नमः ( **श्रियः** )
( २ ) ओ त्रों चण्डाय नमः ( **चण्डस्य** )
( ३ ) ओं प्रों प्रचण्डाय नमः ( **प्रचण्डस्य** )

( ४ ) ओं ज्रो जयाय नमः ( **जयस्य** )
( ५ ) ओं व्रो विजयाय नमः ( **विजयस्य** )
( ६ ) ओं ग्रीं गङ्गायै नमः ( **गङ्गायाः** )
( ७ ) ओं य्रीं यमुनायै नमः ( **यमुनायाः** )
( ८ ) ओं श्रूं शङ्खनिधये नमः ( **शङ्खनिधेः** )
( ९ ) ओं प्रूं पद्मनिधये नमः ( **पद्मनिधेः** )

( **गुरुपङ्क्तिमन्त्राः** प. ६३--६९ ).

४२ ओं गूं गणाधिपतये नमः ( **गणेशमन्त्रः** )

( **गणेशस्याङ्गषट्कम्** )

[ ओं ] गां हृदयाय नमः
[ ओं ] गीं शिरसे स्वाहा
[ ओं ] गूं शिखायै वौषट्
[ ओं ] गैं कवचाय हुम्
[ ओं ] गौं नेत्राय वषट्
[ ओं ] गः अस्त्राय फट्

४३ ओं क्ष्रीं ह्रीं स्र्या स्र्यौं अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ ए ऐ ओ औ अं अः क ख ग घ ङ च छ ज झ ञ ट ठ ड ढ ण त थ द ध न प फ ब भ म य र ल व श ष स ह क्ष वागीश्वर्यै नमः ( **वागीश्वरीमन्त्रः** ).

( **वागीश्वर्या अङ्गषट्कम्** )

ओं स्रां हृदयाय नमः
ओं स्रीं शिरसे नमः
ओं स्रूं शिखायै नमः
ओं स्रैं कवचाय नमः
ओं स्रौं नेत्राय नमः
ओं स्रः अस्त्राय नमः

४४ ओं ओं गुरवे नमः ( **गुरुमन्त्रः** )
४५ ओं ओं ओं पं परमगुरवे नमः ( **गुरोर्गुरुमन्त्रः** )
४६ ओं ओं ओं ओं पां परमेष्ठिने नमः ( **तद्गुरोर्मन्त्रः** )
४७ ओं ओं ओं ओं ओं ट्ह्स्रूं स्वधा पितृभ्यो नमः ( **पितृमन्त्रः** )
४८ ओं ओं ओं ओं ओं ओं आदिसिद्धेभ्यो नमः ( **आदिसिद्धमन्त्रः** )

## लोकपालमन्त्राः, तत्तदायुधमंत्राश्च ( प. ६५-६६. )

४९ ओं ह्लां इन्द्राय नमः ( **इन्द्रमन्त्रः** )
५० ओं ह्रां अग्नये नमः ( **शिखिमन्त्रः** )
५१ ओं ह्मां यमाय नमः ( **अन्तकमन्त्रः** )
५२ ओ न्लं नैर्ऋतये नमः ( **निर्ऋतिमन्त्रः** )
५३ ओं ह्वा वरुणाय नमः ( **वरुणमन्त्रः** )
५४ ओं ह्यां वायवे नमः ( **वायुमन्त्रः** )
५५ ओं ष्वां सोमाय नमः ( **सोममन्त्रः** )
५६ ओं ह्टूं ईशानाय नमः ( **ईशानमन्त्रः** )
५७ ओ ह्लां नागेश्वराय नमः ( **नागेशमन्त्रः** )
५८ ओं ह्खां ब्रह्मणे नमः ( **ब्रह्ममन्त्रः** )
५९ ओ ज्म्रूः वज्राय नमः ( **इन्द्रस्यायुधमन्त्रः** )
६० ओ ज्म्रीः शक्त्यै नमः ( **शिखिन आयुधमन्त्रः** )
६१ ओं ड्मूः दण्डाय नमः ( **यमस्यायुधमन्त्रः** )
६२ ओं ट्मूः खड्गाय नमः ( **निर्ऋतेरायुधमन्त्रः** )
६३ ओं ट्शाः पाशाय नमः ( **वरुणस्यायुधमन्त्रः** )
६४ ओं ज्वाः ध्वजाय नमः ( **वायोरायुधमन्त्रः** )
६५ ओं हुंः मुद्गराय नमः ( **सोमस्यायुधमन्त्रः** )
६६ ओं त्रुः शूलाय नमः ( **ईशानस्यायुधमन्त्रः** )
६७ ओं क्रोंः सीराय नमः ( **नागेशस्यायुधमन्त्रः** )
६८ ओं न्वाः पद्माय नमः ( **ब्रह्मण आयुधमन्त्रः** )
६९ ओं ह्रूं वौं विष्वक्सेनाय नमः ( **विष्वक्सेनमन्त्रः** ) प. ६६

## ( विष्वक्सेनस्य अङ्गषट्कम् )

ओं ह्रां हृदयाय नमः
ओं ह्रीं शिरसे स्वाहा
ओ ह्रूं शिखायै वौषट्
ओं ह्रैं कवचाय हुं
ओं ह्रौं नेत्राय वषट्
ओं ह्रः अस्त्राय फट्

( औपचारिकपञ्चकमंत्राः प. ६७–६८ ).

७० ओं ओं परमधामावस्थितमदनुग्रहकाम्ययोद्यतावतरेहाभिमतसिद्धिदमन्त्रशरीरों नमो नमः

( आवाहनमन्त्रः )

७१ ओं ह ह ह इदमिदमिदं [ अर्घ्यं ] गृहाण स्वाहा ( अर्घ्यादिमन्त्रः )
७२ ओं विश्वरूपाय विद्महे विश्वातीताय धीमहि तन्नो विष्णुः प्रचोदयात् (विष्णुगायत्री)
७३ ओं ईं ह्रीं ईं हसपर परमेश प्रसीद ओं नमः ( प्रसादनमन्त्रः )
७४ ओं भगवन्मन्त्रमूर्ते स्वपदमासादय क्षमस्व क्षमस्व ओं नमो नमः ( विसर्जन-मन्त्रः )
७५ ओं स्वीं सुरभ्यै नमः ( सुरभिमंत्रः अथवा आप्यायनमंत्रः प. ६९ ).

( भूतशुद्धिमन्त्रः प. ८६. )

७६ ओं श्लां पृथिव्यै हुं फट् ( पृथिव्याः )
ओं ब्वा अद्भ्यः हु फट् ( जलस्य )
ओं स्रां तेजसे हुं फट् ( तेजसः )
ओं ह्यां वायवे हुं फट् ( वायोः )
ओं क्ष्मां आकाशाय हु फट् ( आकाशस्य )

७७ ओं यूँ नमः ( इच्छाग्निमन्त्रः प. ९१ ).
७८ ओं व्यं नमः ( शान्ताग्निमन्त्रः प. ९१ ).
७९ ओं ल्सं नमः ( आप्लावनमन्त्रः प. ९१ ).
८० ओं रॅंट्स आत्मने नमः ( ? ) ( जीवात्ममन्त्रः प. ९२ ).
८१ ओं हां अनन्ताय कालाग्निरूपाय जगद्धूमसुगन्धिने सर्वगन्धवहाय नमः स्वाहा

( धूपपात्रमन्त्रः प. १२१ ).

८२ ओं क्ष्रीं जगद्ध्वनिमन्त्रमात्रे स्वाहा ट्र्हौं ( ? ) ( घण्टामन्त्रः प. १२३ ).
८३ ओं ठां अक्षसूत्राय नमः ( अक्षसूत्रमन्त्रः प. १२७ )
८४ ओं श्रूँ ल्रीं व्रीं श्रीं ष्रीं स्त्रीं ह्रीं क्ष्रीं तेजसे सप्तार्चिषे स्वाहा (अग्निमन्त्रः प. १३८).

---

१ आत्ममन्त्रे रेफटकारसकाराणां पौर्वापर्यं सम्प्रदायतो ज्ञेयम् ।

## मण्डलचित्रे प्रदर्शितैः सङ्ख्याङ्कैर्ज्ञातव्यानां मण्डलावयवानां सूची

| | |
|---|---|
| १–प्रधानपद्मम् | १०–( वीथ्याः ) पूर्वा दिक् |
| २–पूर्वदिक्पद्मम् | ११–आग्नेयी दिक् |
| ३–दक्षिणदिक्पद्मम् | १२–दक्षिणा दिक् |
| ४–पश्चिमदिक्पद्मम् | १३–नैर्ऋती दिक् |
| ५–उत्तरदिक्पद्मम् | १४–पश्चिमा दिक् |
| ६–आग्नेयपद्मम् | १५–वायव्या दिक् |
| ७–ईशान्यपद्मम् | १६–उत्तरा दिक् |
| ८–नैर्ऋत्यपद्मम् | १७–ईशान्या दिक् |
| ९–वायव्यपद्मम् | १८–द्वाराणि |

प्रधानपद्मादिषु १–९ प्रथमाङ्कतः नवमाङ्कपर्यन्तै. सङ्ख्याङ्कैश्चिह्नितेषु नवसु पद्मेषु चित्रितेषु कर्णिकादितत्तत्स्थाने निदर्शितैः सङ्ख्याङ्कैर्मन्त्रसङ्ख्याप्रत्यभिज्ञापकैर्यथासङ्ख्यं तत्तत्स्थाने ते ते मन्त्रा मन्त्रसूचीत. समालोच्य विनियोज्याः ।

मण्डलावयवभूतपूर्वदिगादिषु १०–१८ दशमाङ्कत अष्टादशाङ्कपर्यन्तै. सङ्ख्याङ्कैश्चिह्नितेषु विनियोज्यानां मन्त्राणां योजनप्रकारः अनेन पथा बोध्यः ।

| | |
|---|---|
| ( १० ) पूर्वस्यां दिशि ... ... ... ... | ४९,५९ ( मन्त्रौ ) |
| ( ११ ) आग्नेय्यां ... ... ... ... | ५०,६० ( मन्त्रौ ) |
| ( १२ ) दक्षिणस्यां ... ... ... ... | ५१,६१ ( मन्त्रौ ) |
| ( १३ ) नैर्ऋत्यां ... ... ... ... | ५२,६२ ( मन्त्रौ ) |
| ( १४ ) प्रतीच्यां ... ... ... ... | ५३,६३ ( मन्त्रौ ) |
| ( १५ ) वायव्यां ... ... ... ... | ५४,६४ ( मन्त्रौ ) |
| ( १६ ) उदीच्यां ... ... ... ... | ५५,६५ ( मन्त्रौ ) |
| ( १७ ) ऐशान्यां ... ... ... ... | ५६,६६ ( मन्त्रौ ) |
| ( १८ ) द्वारेषु ... ... ... ... | २१ ( मन्त्रः ) |

——:o:——

( १ )




पद्मान्तर्निर्दिष्टाः संख्याङ्का मन्त्राणां बोध्याः ।

( २ )




पद्मान्तर्निर्दिष्टाः संख्याङ्का मन्त्राणां बोध्याः ।

( ३ )




पद्मान्तर्निर्दिष्टाः संख्याङ्का मन्त्राणां बोध्याः ।

( ४ )




पद्मान्तर्निर्दिष्टाः संख्याङ्का मन्त्राणां बोध्याः ।

( ९ )




पद्मान्तर्निर्दिष्टाः संख्याङ्का मन्त्राणां बोध्याः ।

( ६ )




पद्मान्तर्निर्दिष्टाः संख्याङ्का मन्त्राणां बोध्याः ।

( ७ )




पद्मान्तर्निर्दिष्टाः संख्याङ्का मन्त्राणां बोध्याः ।

( ८ )




पद्मान्तर्निर्दिष्टाः संख्याङ्का मन्त्राणां बोध्याः ।



# श्रीपाञ्चरात्रे जयाख्यसंहिता.

शास्त्रारम्भप्रयोजनं नाम प्रथमः पटलः ।

नमः सकलकल्याणदायिने चक्रपाणये ।
विषयार्णवमग्नानां [1]समुद्धरणहेतवे ॥ १ ॥

[ शास्त्रावतरणम्. ]

सुसिद्ध[2]पूजिते स्थाने देवब्रह्मर्षिसेविते ।
तपस्विजनसङ्कीर्णे पुण्यकृद्भिर्निषेविते ॥ २ ॥

तीर्थोत्तमे प्रभासे वै[3] यत्र सन्निहितः सदा ।
विश्वात्मा भगवान् विष्णुर्लोकानुग्रहकृत्प्रभुः ॥ ३ ॥

तत्र शुश्रूषणपरः पित्रादिगुरुसन्ततेः ।
नित्यमेवापवर्गार्थी विरागी वीतमत्सरः ॥ ४ ॥

संवर्तकः कान्तिनिधिर्दृष्ट्वा मग्नं स्वकं वपुः ।
प्राञ्जलिः प्रणतो भूत्वा और्वं पितरमब्रवीत् ॥ ५ ॥

सवर्तकः—

संसारार्णवमग्नस्य ममोपायो हि[4] कथ्यताम् ।
यं ज्ञात्वा न पुनर्जन्म स्यान्ममान्यस्य कस्यचित् ॥ ६ ॥

और्वः—

पुरा कृतयुगे वत्स मत्पूर्वैः संयमस्थितैः ।
वेदवेदाङ्गपारज्ञैः ऋषिभिश्च तपोधनैः ॥ ७ ॥

केनापि चात्मभावेन एतदालोचितं तु वै ।
बहून्यब्दसहस्राणि तपस्तप्त्वा सुदारुणम् ॥ ८ ॥

---

1 सद्यस्तरण. A
2 सुसिद्धे. A
3 प्रभासे च. A
4 योऽभि. A

( सन्तोषनियमाढ्यं च व्रतचर्यासमन्वितम् )

[ निःश्रेयसालाभान्महर्षीणां निर्वेदः ]

कालेन तपसोऽन्ते वै[1] वयं सद्धर्ममास्थिताः ।
सिद्धिगोचरमप्राप्ताः [2]प्रोच्छ्वसन्तः पुनः पुनः ॥ ९ ॥
न विद्मः किं भविष्यामो ह्यद्यापि गहने भवे
न स्थितिः शाश्वती स्वस्थे न च बन्धपरिक्षयः ॥ १० ॥
न चैवेह स्थिरा भोगाः किं कुर्यामोऽत्र [3]वैशसे
इत्येवं गहने प्राप्ते तपसश्चानवस्थितेः ॥ ११ ॥
संप्राप्ताः स्म ततो मोहं तदा वाणी महत्यभूत् ।
भगवद्धर्मजिज्ञासैर्ध्यानासक्तैः प्रचोदिता ॥ १२ ॥

[ परतत्त्वज्ञानस्य निःश्रेयसहेतुत्वम् ]

न यज्ञवेदाधिगमैर्नच दानैस्तु केवलैः
क्रियाभिर्न त्वनेकाभिर्व्रतैश्चान्द्रायणादिकैः ॥ १३ ॥
स्वर्गे [4]वै न भवेत् स्थैर्यं बन्धमोक्षश्च वै कुतः ।
अज्ञाते परतत्त्वे तु शाश्वते चाक्षयेऽच्युते ॥ १४ ॥
व्यापके तु जगन्नाथे नित्यतृप्ते निरञ्जने ।
इच्छारूपधरे नित्ये शुद्धे बुद्धे सुनिर्मले ॥ १५ ॥
एवमाद्यः परो देवो ज्ञातो यावन्न वै द्विजाः ।
तावदेवापवर्गस्तु दुर्लभो युगकोटिभिः ॥ १६ ॥
तस्माद्यतध्वं येनाशु हृदावासो [5]जगद्गुरुः ।
केवलं चित्स्वरूपश्च [6]गुणगुण्यश्च निर्गुणः ॥ १७ ॥
प्रसादमेति वै क्षिप्रमनाथानामसंशयः ।
अभूतपूर्वं श्रुत्वैवं स्थितास्ते हृष्टमानसाः ॥ १८ ॥
तस्मिन्नेव क्षणे पुण्ये श्रुतमात्रेण पुत्रक ।
किमेतत्केन कथितं किं तद्ब्रह्म ह्यनामकम् ॥ १९ ॥
ज्ञास्यामस्तत्कथं सम्यगेवमूचुः परस्परम् ।

1 तु A. 2 प्रोच्छ्वसाना S. 3 वेधसे S 4 वा C L. 5 त्प्रभु CL. 6 गुह्य. CL

संशयेऽभिनिविष्टास्तु दीर्घकालं यदा तदा ॥ २० ॥
पुनरेवोत्थिता वाणी गगनादमृतोपमा ।

[ परतत्त्वविवेचनम् ]

यत्तदक्षरमक्षोभ्यं परं ब्रह्म सनातनम् ॥ २१ ॥
परा गतिर्या सर्वेषामच्युतं वित्त तद्द्विजाः ।
मुनयो ब्रह्मनिष्णाता यमाश्रित्य भवोदधिम् ॥ २२ ॥
तरन्ति पुण्डरीकाक्षो[1] देवो नारायणस्तु सः ।
शङ्खचक्रधरं विष्णुमानन्दस्यन्दनिर्भरम् ॥ २३ ॥
ये संश्रयन्ति तं भक्त्या सूक्ष्ममध्यात्मचिन्तकाः ।
ते यान्ति वै पदं विष्णोर्जरामरणवर्जिताः ॥ २४ ॥
इत्युक्त्वा च [2]ततो भूयः सा वागस्तमिता यदा ।
तदा वयं हृष्टतुष्टाः प्रायशो विगतज्वराः ॥ २५ ॥
श्रीवत्साङ्कवपुर्देवस्त्राता [3]शास्ति जगत्त्रये ।
चेतसोऽवस्थितिं कृत्वा ऋषिभिश्च तपोधनैः ॥ २६ ॥
चिन्तितं च [4]तदा भूयो ज्ञास्यामस्तं कथं विभुम् ।

[ परतत्त्वाधिगमोपायजिज्ञासया शाण्डिल्य प्रत्यभिगमनम् ]

को वेत्ता देवदेवस्य त्रैलोक्येऽस्मिन् [5]यथार्थतः ॥ २७ ॥
प्रसन्नः कस्य भगवान् परमात्माऽप्यधोक्षजः ।
प्रभावात्तपसः सर्वं चिन्तितं मनसा तदा ॥ २८ ॥
यथावद्विदितं पश्चात्सर्वेषां भावितात्मनाम् ।
कृतकृत्यो जगत्यस्मिन् शाण्डिल्यः श्रूयते भुवि॥ २९ ॥
ते चैवं स्वाश्रमात्सर्वे फलपुष्पकरोद्यताः ।
प्रयाताः स मुनिर्यत्र कृतकृत्योऽवतिष्ठते ॥ ३० ॥
सुखासीनो द्विजैः सार्धं योगैश्वर्यसमन्वितः ।
तपसा तेजसा युक्तः पर्वते गन्धमादने ॥ ३१ ॥
नानाश्चर्यसमायुक्ते नानापुष्पोपशोभिते ।
फलद्रुमसमाकीर्णे नानाधातुविचित्रिते ॥ ३२ ॥
सिद्धैरध्यासिते रम्ये देवजुष्टे मनोरमे ।
तपश्शीलैस्सुदान्तैश्च योगव्रतपरायणैः ॥ ३३ ॥

---

1 काक्ष. A  2 तथा S  3 चास्मिन् A  4 तथा A  5 यथास्थितिम् A

सच्छिष्यैर्ज्ञानसंपूर्णैर्वृतश्चन्द्र इव ग्रहैः ।
दृष्ट्वा(ष्टो ?) ज्ञानक्रियाढ्योऽसावृषिभिः प्राञ्जलिस्थितैः ॥ ३४ ॥
स चाभिवादितस्सर्वैः क्रमात्तेन च ते तथा ।
पूजिताः फलमूलाद्यैरम्बुना कुसुमैस्सह ॥ ३५ ॥
निवृत्तेऽभ्यागते धर्मे सोत्सुकैर्भगवान्मुनिः ।
पृष्टस्तपोधनैस्सर्वैः शाण्डिल्यस्सुरपूजितः ॥ ३६ ॥

[ भगवत्तत्त्वतदाराधनप्रकारप्रश्नः ]

भगवञ्श्रोतुमिच्छामो विष्णोरद्भुतकर्मणः ।
उपासालक्षणं कर्म कथयस्व प्रसादतः ॥ ३७ ॥
श्रुतमत्यद्भुतं यस्मादस्माभिर्गगनान्तरात् ।
अज्ञाते भगवत्तत्वे दुर्लभा परमा गतिः ॥ ३८ ॥
तथाऽनाराधिते चैव सात्विकेन तु कर्मणा ।
सन्तारणार्थमस्माकमन्येषां [1]भविनां तथा ॥ ३९ ॥
यथार्थं भगवद्धर्मं वक्तुमर्हसि सर्वथा ।

[ अस्य शास्त्रस्य प्रवृत्तिक्रमः ]

शाण्डिल्यः—

शृणुध्वं संयतास्सर्वे विष्णोरद्भुततेजसः ॥ ४० ॥
सारभूतमिदं शास्त्रं ज्ञानोपनिषदं महत् ।
रहस्यमप्रकाश्यं च ब्रह्मगर्भं च शाश्वतम् ॥ ४१ ॥
अनुग्रहार्थं च पुरा कथितं नारदस्य तत् ।
तथाचातिरहस्यत्वाल्लोकेऽस्मिन्न प्रकाशितम् ॥ ४२ ॥
न चापि चोदितं चैव केनचिद्धर्मगौरवात् ।
तथोक्तस्य (तथाऽनेक ?) दिनस्यान्ते अन्तर्धानगतं तु तम्(त् ?) ॥ ४३ ॥
भूयश्चैवावतीर्णेन विष्णुना प्रभविष्णुना ।
मुनेर्वै स्वांशभूतस्य यदुक्तं पुनरेव हि ॥ ४४ ॥
बदर्याश्रमसंस्थेन[2] प्रभुना लोककारिणा ।
धर्ममार्गावतारार्थं व्रतेनानेन सत्तमाः ॥ ४५ ॥
सिद्धानां शृण्वतां चैव तथा गगनचारिणाम् ।

1 भाविनां A 2 सुस्थेन A

देवानां च ऋषीणां च नरादीनां तथैव च ॥ ४६ ॥
मृकण्डुतार्क्ष्यपूर्वाणामादित्यानां महात्मनाम् ।
किन्नराणां च दैत्यानां वसूनां भावितात्मनाम् ॥ ४७ ॥
साङ्ख्यानां योगसिद्धानां ज्ञानविज्ञानवेदिनाम् ।

[ गुरोर्नारदादधिगतस्यास्य शास्त्रस्य मुनीन् प्रति यथाधिगतमुपदेशप्रतिज्ञा ]

तच्छृणुध्वं मुनिश्रेष्ठाः धर्मं संसारतारकम् ॥ ४८ ॥
यादृक्प्राप्तं मया पूर्वं परितुष्टाच्च नारदात् ।
सर्वज्ञानक्रियायुक्तं सर्वसिद्धिप्रसाधनम् ॥ ४९ ॥
संक्षिप्तं च महार्थं यत्तथा सम्यग्विवेकदम् ।
ज्ञात्वैवं सारभूतं च अधीतं हि पुरा मया ॥ ५० ॥
यस्माद्वै धर्मकामार्थमोक्षाणामाशुसिद्धिकृत् ।
अधीत्य च श्रुतं पश्चात् ज्ञानानां ज्ञानमुत्तमम् ॥ ५१ ॥
यत्प्रसादात्तु वै भूयो भवेऽस्मिन्न भवाम्यहम् ।
तद्युष्मभ्यं प्रवक्ष्यामि आम्नायेन यथास्थितम् ॥ ५२ ॥

[ श्रद्धाभक्तिपूर्वकमुपसन्नस्यैव शास्त्रस्यास्योपदेशे पात्रता । ]

रहितं संशयैस्सर्वैर्गुरुशिष्यक्रमेण तु ।
परिज्ञातं क्रमेणैव यस्माच्छास्त्रं फलप्रदम् ॥ ५३ ॥
तस्मान्नयं द्विजाः पूर्वमाश्रयध्वं प्रयत्नतः ।
भक्तिश्रद्धासमेतं तु अस्तित्वे(आस्तिक्ये?)नाप्यलङ्कृतम् ॥ ५४ ॥
सर्वस्वमपि यो दद्यात् भक्तिश्रद्धाविवर्जितः ।
नयाचारविनिर्मुक्तो मानी[1] शास्त्रार्थदूषकः ॥ ५५ ॥
न तस्य शास्त्रं वक्तव्यं ब्रूते वा यस्स यात्यधः ।
समाचारेण यो ब्रूयाच्छृणुयाद्यश्च[2] तावुभौ ॥ ५६ ॥
गच्छेतां तु जगद्योनेः पदं [3]घोरविपर्ययात् ।

[ गुरोर्महिमानुवर्णनगर्भं गुरौ भक्तेः श्रेयःसाधनत्ववर्णनम् ]

शास्त्रायत्ता यतः सर्वे भोगमोक्षादयो द्विजाः ॥ ५७ ॥
वैष्णवं[4] ज्ञानवक्तारं यो विद्याद्विष्णुवद्गुरुम् ।

---

1 रादि A 2 द्वाऽपि A 3 घोरे A 4 वैष्णवज्ञान A

पूजयेद्वाङ्मनःकायैस्स शास्त्रज्ञस्स वैष्णवः ॥ ५८ ॥
श्लोकपादस्य वक्ताऽपि यतः पूज्यस्सदैव हि ।
किं पुनर्भगवद्विष्णोस्स्वरूपं विवृणोति यः ॥ ५९ ॥
शास्त्रस्य चैव वक्ताऽपि तद्भावगतमानसः ।
विभोः शास्त्रस्य च गुरोस्त्रितयस्यास्य पूजनात् ॥ ६० ॥
फलं भवत्यनूनं वै इह लोके परत्र च ।
नारायणः परं ब्रह्म तज्ज्ञानेनाभिगम्यते ॥ ६१ ॥
ज्ञानस्य साधनं शास्त्रं तच्छास्त्रं गुरुवक्त्रगम् ।
ब्रह्मप्राप्तिरतो हेतोर्गुर्वधीना सदैव हि ॥ ६२ ॥
हेतुनाऽनेन वै विप्रा गुरुर्गुरुतमःस्मृतः ।
यस्माद्देवो जगन्नाथः कृत्वा मर्त्यमयीं तनुम् ॥ ६३ ॥
मग्नानुद्धरते लोकान् कारुण्याच्छास्त्रपाणिना ।
तस्माद्भक्तिर्गुरौ कार्या संसारभयभीरुणा ॥ ६४ ॥
शास्त्राञ्जनेन[1] योऽज्ञानतिमिरं विनिपातयेत् ।
शास्त्रं पापहरं पुण्यं पवित्रं भोगमोक्षदम् ॥ ६५ ॥
शान्तिदं च महार्थं च वक्ति यस्स जगद्गुरुः ।

[ अथ तत्त्वशुश्रूषया मुनिभिः स्वीकृतः शिष्यभावः ]

इत्युक्तास्तेन मुनयो मुनिना ब्रह्मवेदिना ॥ ६६ ॥
त्यक्तासनास्ततस्सर्वे बभूवुश्शान्तमानसाः ।
तत्पादमूले पतितास्तच्चित्तास्तत्परायणाः ॥ ६७ ॥

[ अथोपदेशारम्भः ]

दत्तो मूर्ध्नि ततस्तेषां मुनीनां[2] भावितात्मनाम् ।
विष्णुहस्तश्च (?) तुष्टेन मुनिना ब्रह्मवेदिना ॥ ६८ ॥
अथोवाच स विप्रेन्द्रः प्रणिपत्याच्युतं हरिम् ।
क्रमागतं महच्छास्त्रं ज्ञानामृतफलप्रदम् ॥ ६९ ॥

[ अस्य शास्त्रस्यारम्भकाल—प्रवर्तकपुरुषविशेष—आख्याविशेषाणा निरूपणम् ]

कृते युगे प्रवृत्ते तु कस्मिंश्चिन्मुनिसत्तमाः ।

---

1 शास्त्रज्ञानेन. A 2 ऋषीणा. A

पौष्करे[1] ब्रह्मकल्पे तु प्रत्यक्षस्थेऽप्यधोक्षजे ॥ ७० ॥
कामक्रोधविनिर्मुक्ते प्रवृद्धे तु पितामहे ।
स्थिते निष्कण्टके सम्यक्त्रैलोक्ये सचराचरे ॥ ७१ ॥
संप्रवृद्धे तथा धर्मे अधर्मे नाशमागते ।
नारदेन यथा पृष्टो देवः कमललोचनः ॥ ७२ ॥
जयार्थमपि भक्तानां हितार्थमपि चात्मनः ।
अनुष्टुप्छन्दोबद्धेन[2] सारात्सारतरा शुभा ॥ ७३ ॥
प्रोक्ता त्रैलोक्यगुरुणा पृच्छते नारदाय तु ।
सारभूतं समुद्धृत्य संहिताऽमृतगर्भिणी ॥ ७४ ॥
सर्वज्ञत्वगुणेनैव कृत्स्नं ज्ञात्वा च तत्त्वतः ।
सार्धकोटिप्रमाणं तु ज्ञातृज्ञानोपबृंहितम् ॥ ७५ ॥
जयाख्यं [3]निषदं तन्त्रं ब्रह्ममूलाद्विनिस्सृतम् ।
अमूर्ताद्गगनाद्यद्वत् निर्घातो जायते स्वयम् ॥ ७६ ॥
शान्तात्संविन्मयात्तद्वच्छास्त्रं शब्दात्म [4]चोत्थितम् ।
अविकारमसङ्कल्पं यद्रूपं तत्परं विभोः ॥ ७७ ॥
यद्विकारं जगद्धातुश्शब्दब्रह्मेति तत्स्मृतम् ।
ततःप्रभृति कालाच्च लोकेऽस्मिन्मुनिसत्तमाः ॥ ७८ ॥
जयेति विमलं नाम प्रणीतं विश्वकर्मणा ।

---

1. पुष्करे. S.　2 य. A　3 नै A　4 त्मनो. A.

## [ अधिकः पाठः ]

† पञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणः स्वयम् ।
इति सर्वत्र विख्यातं भगवच्छास्त्रगौरवम् ॥ १ ॥
सात्त्वतं पौष्करं चैव जयाख्यं तन्त्रमुत्तमम् ।
रत्नत्रयमिति ख्यातं तद्विशेष इहोच्यते ॥ २ ॥
सारं सात्त्वतशास्त्रस्य रहस्यं प्राज्ञसंमतम् ।
रत्नत्रयमिदं साक्षाद्भगवद्वक्त्रनिःसृतम् ॥ ३ ॥
प्रवर्तितं तथैवेदमन्यूनानधिकत्वतः ।
अन्यान्यानि तु तन्त्राणि भगवन्मुखनिर्गतम् ॥ ४ ॥
सारं समुपजीव्यैव समासव्यासधारणैः ।
व्याख्योपबृंहणन्यायाद्व्यापितानि तथा तथा ॥ ५ ॥
व्याख्यामूलनयेनैषां गौरवं सम्प्रतिष्ठितम् ।
तन्त्रेऽप्यष्टोत्तरशते पारमेश्वरसंहिता ॥ ६ ॥
पौष्करार्थविवृत्यर्था व्याख्यारूपाऽवतारिता ।
सात्त्वतस्य विवृत्यर्थमीश्वरं तन्त्रमुत्तमम् ॥ ७ ॥
जयाख्यस्यास्य तन्त्रस्य व्याख्यानं पाद्ममुच्यते ।
भगवद्व्यक्तिदेशेषु स्वयंव्यक्तेषु भूतले ॥ ८ ॥
अष्टोत्तरशते मुख्यं रत्नभूतं चतुष्टयम् ।
श्रीरङ्गं वेंकटाद्रिश्च हस्तिशैलस्ततः परम् ॥ ९ ॥
ततो नारायणाद्रिश्च दिव्यस्थानचतुष्टयम् ।
वेंकटाद्रिं विनाऽन्येषु देवदेवस्य धामसु ॥ १० ॥
रत्नेषु त्रिषु रत्नानि त्रीणि तन्त्राण्युपासते ।
मूलव्याख्यानरूपत्वादुपजीव्यं परस्परम् ॥ ११ ॥
तन्त्रत्रयमिदं विद्यादेकशास्त्रं तथा बुधः ।
सात्त्वतं यदुशैलेन्द्रे श्रीरङ्गे पौष्करं तथा ॥ १२ ॥
हस्तिशैले जयाख्यं च साम्राज्यमधितिष्ठति ।
पाद्मतन्त्रं हस्तिशैले श्रीरङ्गे पारमेश्वरम् ॥ १३ ॥

---

† अय तु कुण्डलितः पाठः प्राचीनेषु बहुषु कोशेषु नोपलभ्यते, पटलस्यास्यान्ते कैश्चित्प्रक्षिप्तः स्यात्, अथाऽपि ( Adyar Library Ms. ) यथोपलम्भं प्राकट्यं नीतः

ईश्वरं यादवाद्रौ च कार्यकारि प्रचार्यते ।
श्रीरङ्गाद्याद्वाद्रेश्च हस्तिशैलो विशिष्यते ॥ १४ ॥
पद्मरागाच्च वैडूर्याद्यथा वज्रं महागुणम् ।
पुरा कृतयुगे ब्रह्मा साक्षात्कृत्य रमापतिम् ॥ १५ ॥
स्वयं समर्चयित्वाऽथ तदर्चाक्रममुत्तमम् ।
शिष्येभ्यो महनीयेभ्य उपदिश्य कृपावशात् ॥ १६ ॥
तैरेवाराधनं काले कारयत्यब्जसंभवः ।
इत्येवं नारदाच्छ्रुत्वा पुनरेवाहमब्रुवम् ॥ १७ ॥
भगवन् कमलाकान्तः कथं साक्षात्कृतः कदा ।
तदेतद्ब्रूहि मे स्वामिन् हस्त्यद्रेश्चापि वैभवम् ॥ १८ ॥
इति पृष्टो मया प्राह नारदो भगवान् ऋषिः ।
साधु पृष्टोऽस्म्यहं वत्स श्लाघनीयोऽसि मे मतः ॥१९॥
यदद्य करिशैलस्य वक्ष्यामि तव वैभवम् ।
पुरा मयोपसन्नेन भगवान् भूतभावनः ॥ २० ॥
जगत्स्रष्टा सुराधीशोऽनुयुक्तश्चतुराननः ।
हस्तिशैलस्य माहात्म्यं वरदस्य कृपारसम् ॥ २१ ॥
सत्यव्रतस्य क्षेत्रस्य वैभवं चान्ववर्णयत् ।
तत्तेऽहं संप्रवक्ष्यामि संग्रहेणैव सारवत् ॥ २२ ॥
सावधानः शृणु प्रीत्या गुह्यं सारमिदं यतः ।
भगवन्नाभिपाथोजाज्जातो धाताऽब्जसंभवः ॥ २३ ॥
सृष्ट्वा चराचरं विश्वं गर्वं परमुपाययौ ।
आभिजात्यं सदाचारो विद्या चेति मदत्रयम् ॥ २४ ॥
सर्वानेवाभिभवति किमु सर्वाधिके पदे ।
ततोऽसौ मत्तचित्तः सन् देवदेवं रमापतिम् ॥ २५ ॥
साक्षाच्चिकीर्षुर्योगेन परं यत्नमुपागमत् ।
देवदेवस्वरूपादिसाक्षात्कारविरोधिना ॥ २६ ॥
अप्रमेयेन महता दुष्कृतेनैष वारितः ।
पुनः पुनः प्रयत्नेऽपि सुमहत्यप्यनुष्ठिते ॥ २७ ॥
न स सिद्धिमनुप्रापत् समाधेः प्रत्यहन्यत ।
अथ चिन्तापरो दीनश्चिन्तयित्वा मुहुर्मुहुः ॥ २८ ॥

वृथैवाचरितं कष्टमियता मन्दबुद्धिना।
देवावाससमारोहावरोहाभिख्यकेलितः ॥ २९ ॥
निर्मोचनार्थमेकोऽपि क्षणो हन्त न यापितः।
अथालम्ब्य धृतिं धीमान् भूलोकं प्रत्यपद्यत ॥ ३० ॥
गङ्गामध्ये महद्घोरं तपस्तप्तुमुपाक्रमत्।
अङ्गुष्ठाग्रपदात्तिष्ठन्निरुद्धश्वासचेष्टितः ॥ ३१ ॥
ऊर्ध्वबाहुर्निराहारस्तपस्तेपे सुदारुणम्।
कापेयचपलं चित्तं न स्वास्थ्यं प्राप तस्य यत् ॥ ३२ ॥
क्षणमात्रमपि श्रीशं न ध्यातुं प्राभवत्ततः।
अथ दीने कृशे धातर्याकाशादशरीरिणी ॥ ३३ ॥
वाणी प्रादुरभूत्पुण्या बोधयामास पद्मजम्।
अधिकारमहानन्दरसमग्नस्य ते मनः ॥ ३४ ॥
सहस्रेणाश्वमेधानां विना शुद्धिं न गच्छति।
अशुद्धस्येह मनसः स्वास्थ्यं संपाद्यतां कथम् ॥ ३५ ॥
अस्वस्थे मनसि ध्यानं साधु निष्पद्यतां कथम्।
कर्तव्यगौरवात्कालविलम्बाच्च बिभेषि चेत् ॥ ३६ ॥
उपायं सुकरं वक्ष्ये यथावदवधारय।
गङ्गाया दक्षिणे भागे योजनानां शतद्वये ॥ ३७ ॥
पञ्चयोजनविस्तारं पञ्चयोजनमायतम्।
तीरान्तं पूर्ववाराशेः सर्वैः सुमहितं गुणैः ॥ ३८ ॥
सिद्धिक्षेत्रं महापुण्यं श्रीशस्याभिमतं परम्।
सत्यव्रतमिति ख्यातं यथार्थाख्यावभासकम् ॥ ३९ ॥
एकस्तत्र कृतो धर्मो वर्धते हि सहस्रधा।
तत्र त्वमश्वमेधेन यजेरेकेन चेद्धरिम् ॥ ४० ॥
सहस्रस्याश्वमेधानां फलं प्राप्स्यसि निश्चितम्।
तत्र शर्वतरे कल्पे दिग्गजा विष्णुमव्ययम् ॥ ४१ ॥
कस्यचिद्गिरिवर्यस्य शिखरे पर्यपूजयन्।
तेषामाविरभूद्देवः करुणावरुणालयः ॥ ४२ ॥
कमलाकामुकः कान्तविग्रहः कञ्जलोचनः।
ततः प्रभृति शैलेन्द्रो ययौ करिगिरिप्रथाम् ॥ ४३ ॥

तमेव वेदिकां कृत्वा वाजिमेधेन तं यज ।
लक्ष्मीवल्लभकारुण्यवीक्षावैभवतो महान् ॥ ४४ ॥
धन्यः कृतार्थो विमलो भविष्यसि न संशयः ।
इति वाणीं समाकर्ण्य विरिञ्चो हृष्टमानसः ॥ ४५ ॥
क्षेत्रं सत्यव्रतं पुण्यं त्वरितं समुपागमत् ।
त्वष्ट्रा हस्तिगिरेः शृङ्गं टङ्कैः सन्तक्ष्य शोभनाम् ॥ ४६ ॥
यागार्हां यजमानोऽयं यागवेदीमकल्पयत् ।
यथाशास्त्रं च लक्ष्मीशं सर्वकारणकारणम् ॥ ४७ ॥
ईजेऽजो वाजिमेधेन यागानामुत्तमेन सः ।
तत्र सर्वेषु मन्त्रेषु तत्तद्दैवतनामभिः ॥ ४८ ॥
पठ्यमानेषु धाताऽयं देवदेवं रमापतिम् ।
हृदये समनुध्यायंस्तस्मै सर्वं हविर्हुतम् ॥ ४९ ॥
भक्त्या समर्पयन्नेतदलमेकोऽपि वेदितुम् ।
सर्वमेव हविर्देवः पुण्डरीकेक्षणो हरिः ॥ ५० ॥
स्वयमेव समादाय समास्वादयदादरात् ।
स्वान् स्वान् भागान्परीक्लृप्तान्कालेष्वनधिगच्छताम् ॥ ५१ ॥
उन्मुखानां वञ्चितानां देवानां क्षुभितं मनः ।
ब्रह्माणमथ ते सर्वे समागत्यान्वयुञ्जत ॥ ५२ ॥
किमिदं वर्तते मोहः क्षोभिता वञ्चिता वयम् ।
ब्रह्मा तु स्मयमानस्तान् सांत्वपूर्वमबोधयत् ॥ ५३ ॥
देवा मया पुरा सृष्टाः स्रष्टाऽहं भवतां पिता ।
किमेतद्यत्पिता पुत्रानुपास्तां विनयादिति ॥ ५४ ॥
संसारमार्गनिष्णातैस्तत्तत्फलमभीप्सुभिः ।
यूयमाराधनीया हि तदर्थमधिकारिताः ॥ ५५ ॥
सर्वान्तरात्मा सर्वेशो मम चापि पिता हरिः ।
कमलावल्लभो देवस्तमेवोद्दिश्य हूयते ॥ ५६ ॥
इह सर्वं हविर्यज्ञे नाममात्रं तु मन्त्रगम् ।
भवतां तत्तदर्थस्तु भगवान् कमलापतिः ॥ ५७ ॥
इयं मद्यज्ञसारस्य धोरणी सारमाधुरी ।
परमैकान्तिनां नॄणामप्येषैव निबोधत ॥ ५८ ॥

इति संबोधिता देवा गतक्षोभाः प्रजापतिम् ।
सारार्थावगमात्तुष्टाः साधु साध्वित्यपूजयन् ॥ ५९ ॥
श्रेयसां किल कार्याणां प्रत्यूहानां शतं शतम् ।
तथा तत्र महायज्ञे विघ्नानां शतमुत्थितम् ॥ ६० ॥
देवदेवो रमानाथः कृपया परया मुदा ।
सर्वान्प्रशमयामास प्रत्यूहान् समुपस्थितान् ॥ ६१ ॥
अथ काले बहुगुणे वपाहोमोचिते तदा ।
आविरासन्निमित्तानि मनोहारीणि सर्वशः ॥ ६२ ॥
मेषमासे सिते पक्षे चतुर्दशतमे तिथौ ।
शोभने हस्तनक्षत्रे रविवारेण संयुते ॥ ६३ ॥
प्रातः सवनकालीने वपाहोमे समापिते ।
तां वपामधरे गृह्णन्नग्नेराविरभूद्धरिः ॥ ६४ ॥
सूर्यकोटिप्रतीकाशे तप्तकार्त्तस्वरोज्वले ।
विमाने पुण्यकोट्याख्ये श्रीभूमिसहितः प्रभुः ॥ ६५ ॥
पश्चिमाभिमुखो दीप्तकिरीटमकुटोज्ज्वलः ।
ऊर्ध्वपुण्ड्रोल्लसत्फालपट्टो राजीवलोचनः ॥ ६६ ॥
तिलप्रसूनसौभाग्यनासाकल्पलतान्वितः ।
प्रवालखण्डसुषमामोषदक्षाधरोष्ठवान् ॥ ६७ ॥
कम्बुगम्भीरकण्ठान्तर्लम्बिकौस्तुभविभ्रमः ।
श्रीवत्सवक्षा हारश्रीशोभमानभुजान्तरः ॥ ६८ ॥
पञ्चायुधोल्लसद्बाहुचतुष्टयमनोहरः ।
सपद्मेन करेणोच्चैर्वहन्नभयमुद्रिकाम् ॥ ६९ ॥
गदां चापं च वामेन पाणिना परिभूषयन् ।
कटिबन्धे धरन्दिव्यं नंदकं खङ्गमुत्तमम् ॥ ७० ॥
पीताम्बरलसन्नाभिगह्वरोज्वलविह्वलः (ग्रहः ?) ।
कामारामीयकदलीकेळीचोरोरुभास्वरः ॥ ७१ ॥
मुकुराकारजानूत्थलावण्यप्रसराद्भुतः ।
कळाचिकारुचिस्पर्धिजङ्घाद्वितयसुन्दरः ॥ ७२ ॥
पद्मसौभाग्यसर्वस्वहारिपादमनोहरः ।
करुणारसपूर्णाभ्यामीक्षणाभ्यां चतुर्मुखम् ॥ ७३ ॥

आदरादनुगृह्णानः स्मिताञ्चदधरान्तिकः ।
एवं स्वयमुदात्तेन रूपयौवनशोभिना ॥ ७४ ॥
विग्रहेणोदितं देवं रमाकान्तं जगत्पतिम् ।
आसेव्य सर्वे संहृष्टाः कृतार्थनयनोदयाः ॥ ७५ ॥
अहो भाग्यमहो भाग्यमित्युच्चैरुदघोषयन् ।
चतुर्मुखोऽपि नयनैरष्टाभिर्देवमच्युतम् ॥ ७६ ॥
प्रणतार्तिहरं नाथं वरदं समसेवत ।
सहर्षसंभ्रमो नानाचेष्टास्तास्ताः स्वयं चरन् ॥ ७७ ॥
क्रमेण शान्तसंरम्भो देवो नाभिप्रचोदितः ।
वत्स सत्यव्रतक्षेत्रमाहात्म्यं पश्य पद्मज ॥ ७८ ॥
एकेन हयमेधेन सहस्रस्य फलं त्वया ।
कांक्षितं तेन चित्तस्य शुद्धिस्तेन च चेतसः ॥ ७९ ॥
स्थैर्यं तेन च निष्पत्तिर्ध्यानस्येतीप्सितं त्वया ।
अन्ते प्रतीक्षितं यत्ते फलं पर्वक्रमात्किल ॥ ८० ॥
प्रथमे पर्वणि प्राप्तं सुखेनैव प्रजापते ।
प्रसन्नोऽस्मि तवानेन हयमेधेन सुव्रत ॥ ८१ ॥
वपारसोऽयं मधुरो मम हृद्यो मनोऽहरत् ।
पारमैकान्तिसौरभ्यसारामृतमनोहरा ॥ ८२ ॥
वपेयं सर्वभक्ष्येभ्यो मम प्रीतिकरी सदा ।
वरं वरय तस्मात्त्वं यथाऽभिमतमात्मनः ॥ ८३ ॥
सर्वं संपत्स्यते पुंसां मयि दृष्टिपथं गते ।
इति देवेन संदिष्टः प्रहृष्टः परमार्थवित् ॥ ८४ ॥
ब्रह्मा प्रणम्य बहुशः स्तुत्वा च प्रार्थयद्विभुम् ।
वैकुण्ठे तु यथा लोके यथैव क्षीरसागरे ॥ ८५ ॥
तथा सत्यव्रतक्षेत्रे निवासस्ते भवेदिह ।
हस्तिशैलस्य शिखरे सर्वलोकनमस्कृते ॥ ८६ ॥
पुण्यकोटिविमानेऽस्मिन् पश्यन्तु त्वां नरास्सदा ।
इति संप्रार्थितो देवो भगवान् भक्तवत्सलः ॥ ८७ ॥
हिताय सर्वलोकानां तथाऽस्त्वित्यन्वमोदत ।
तस्मिन् कृतयुगे ब्रह्मा देवदेवमधोक्षजम् ॥ ८८ ॥

स्वयं तेनैव रूपेण समाराधयदच्युतम् ।
महाशान्तगजेन्द्रोऽथ त्रेतायां हरिमार्चयत् ॥ ८९ ॥
स्वकराग्रोद्धृतैः पद्मैरथ ग्राहेण पीडितः ।
शरणागतिमाधाय वरदेन विमोचितः ॥ ९० ॥
हरिणा धाम निन्ये स्वं वाहनेन गरुत्मता ।
अथ द्वापरसंज्ञे तु युगे देवगुरुः स्वयम् ॥ ९१ ॥
आराध्य वरदं देवं स्वाभीष्टां सिद्धिमाप्नुत ।
ततः कलियुगस्यादौ ब्रह्माणं वरदोऽब्रवीत् ॥ ९२ ॥
परामृशन् जगत्सर्वं प्रहृष्टेनान्तरात्मना ।
कालोऽयं कलिरायातः सर्वे स्वार्थपरा जनाः ॥ ९३ ॥
न कोऽपि तत्त्वतो भक्तो द्रक्ष्यते कालविप्लवात् ।
अयुते वा परार्धे वा यदि कोऽपि च तादृशः ॥ ९४ ॥
संभाव्यते गुणोत्कृष्टं न तं लोकोऽनुमंस्यते ।
दोषानारोपयेत्कश्चिन्मत्सरात्तस्य मूर्द्धनि ॥ ९५ ॥
तं तथैवेति सर्वेऽन्ये घोषयिष्यन्ति सर्वशः ।
अन्ते तस्यापि नैराश्याच्च्युतिरेव मनोगतेः ॥ ९६ ॥
भविष्यति तथा नाम कालोऽयं कलिरूर्जितः ।
अतो न रोचते वत्स हस्तिशैलस्य मूर्धनि ॥ ९७ ॥
दिव्येनानेन रूपेण वस्तुं काले कलाविह ।
प्रतिज्ञातं च कल्पान्तमवस्थानमिहैव मे ॥ ९८ ॥
अतोऽत्र क्रियतामेवमहं त्वामनुमानये ।
वरदोऽहं विधे भक्तजनानां करुणाकरः ॥ ९९ ॥
अतः स्थलमिदं पुण्यं त्यागमण्टपमुच्यताम् ।
योगमण्टपसंज्ञातु श्रीरङ्गस्य मया कृता ॥ १०० ॥
पुष्पमण्टपमित्याख्या वेङ्कटाद्रेर्विराजताम् ।
अन्यद्यदुगिरिस्थानं विद्यामण्टपमुच्यताम् ॥ १०१ ॥
सर्वोत्तममिदं पुण्यं क्षेत्रं स्थानं च शोभनम् ।
मम प्रीतिकरं दिव्यं मुक्तिक्षेत्रेषु चोत्तमम् ॥ १०२ ॥
नैतस्य सदृशं किञ्चित् क्षेत्रं वा तीर्थमेव वा ।
अतो मदाज्ञया ब्रह्मन् आलयोऽत्र विधीयताम् ॥ १०३ ॥

सर्वमन्त्रस्वरूपत्वात् सर्वेभ्योऽभ्यधिको भुवि ।
संस्थानस्यालयस्यास्य स्वरूपं परमार्थतः ॥ १०४ ॥
न वेत्तुं प्रभवेदन्यो मदीक्षावीक्षितान्नरात् ।
कलिकालोचितां रीतिमाश्रित्य मनसा मया ॥ १०५ ॥
पाञ्चरात्राह्वयं तन्त्रं यथावदवतारितम् ।
तदुक्तेन प्रकारेण मूलकर्मोत्सवाश्रयाः ॥ १०६ ॥
तिस्रो मूर्तीः प्रतिष्ठाप्य पूजनं प्रतिपादय ।
बल्यर्चा च विधानेन सादरं परिकल्प्यताम् ॥ १०७ ॥
रत्नेषु त्रिष्वपि श्रेष्ठं जयाख्यं तन्त्रमुच्यते ।
तदुक्तेन विधानेन प्रतिष्ठादि प्रवर्त्यताम् ॥ १०८ ॥
काण्वीं शाखामधीयानावौपगायनकौशिकौ ।
प्रपत्तिशास्त्रनिष्णातौ स्वनिष्ठानिष्ठितावुभौ ॥ १०९ ॥
जयाख्यतन्त्रमार्गेण दीक्षयित्वाऽब्जमण्डले ।
आचार्यके चाभिषिच्य ताभ्यां पूजां प्रकल्पय ॥ ११० ॥
तद्गोत्रसंभवा एव कल्पान्तं पूजयन्तु माम् ।
जयाख्येनाथ पाद्मेन तन्त्रेण सहितेन वै ॥ १११ ॥
मूलव्याख्यानरूपाभ्यां समर्चयतु मां सदा ।
न तन्त्रसङ्करो दोषस्तन्त्रयोरनयोरिह ॥ ११२ ॥
आचार्यके तथाऽऽर्त्विज्ये पूजने वा ममाब्जज ।
तावेतौ गोत्रिणौ मुख्यौ मम प्रीतिकरौ मतौ ॥ ११३ ॥
परिचर्यासु तत्तासु योग्यान्निर्णीय चेतसा ।
दीक्षयित्वा च ते तत्र नियुज्यन्तां यथाविधि ॥ ११४ ॥
अत्राधिकार उभयोस्तयोरेव कुलीनयोः ।
शाण्डिल्यश्च भरद्वाजो मुनिर्मौञ्जायनस्तथा ॥ ११५ ॥
इमौ च पञ्चगोत्रस्था मुख्याः काण्वीमुपाश्रिताः ।
श्रीपाञ्चरात्रतन्त्रीये सर्वेऽस्मिन् मम कर्मणि ॥ ११६ ॥
इह ताभ्यां चिरं वत्स तोषितोऽस्मि तपोबलात् ।
तयोरयं वरः प्रीत्या प्रादायि प्रार्थितो मया ॥ ११७ ॥
मन्त्रैः कातीयसूत्रेण निर्दिष्टैर्वैदिकैः सह ।
भगवच्छास्त्रसंसिद्धैर्दिव्यैर्मन्त्रैर्विमिश्रितैः ॥ ११८ ॥

गर्भाधानादिकाः सर्वे संस्कारा नित्यकर्म च ।
नैमित्तिकं च श्राद्धादि कर्तव्यं तैरतन्द्रितैः ॥ ११९ ॥
आचारेणैवामुनैवाहं भवामि प्रीतिमानसः ।
शर्करासहितेनेव क्षीरेण कमलासन ॥ १२० ॥
प्रत्यब्दं चैत्रमासे तु स्वेन रूपेण मां विभुम् ।
पूर्णिमायामिहागत्य त्वं मामाराधयानघ ॥ १२१ ॥
प्रत्यहं रात्रिकाले तु शेषः फणभृतां वरः ।
अप्राकृतेन रूपेण मां समाराधयिष्यति ॥ १२२ ॥
इति देवेन संदिष्टः परतन्त्रमना विधिः ।
तथैव तत्स्वयं प्रीत्या निरवर्तयदादरात् ॥ १२३ ॥
देवावतारसमये विमानमतुलप्रभम् ।
सर्वदेवमयं दिव्यमग्निमध्यात् समुत्थितम् ॥ १२४ ॥
तथैव देवदेवस्य वरदस्य निदेशतः ।
भूतले वास्तुविधिना प्रतिष्ठामध्यगम्यत ॥ १२५ ॥
दिव्यालयस्य निर्माणप्रकारो विश्वकर्मणे ।
देवादेशाद्विरिञ्चेन स्फुटमेवात्यदिश्यत ॥ १२६ ॥
स तस्याज्ञां वहन्मूर्ध्ना तदादिष्टेन वर्त्मना ।
आलयं निर्ममे दिव्यं तेनैव प्रत्यवेक्षितः ॥ १२७ ॥
मूलमन्त्रत्रयात्मत्वाद्देवदेवस्य सन्निधौ ।
प्रणवेन समं पूर्वं सोपानत्रयमास तत् ॥ १२८ ॥
षडक्षरस्य मन्त्रस्य स्मारणाय रमापतेः ।
अर्धमण्डमभागे षट् सोपानानि चकार सः ॥ १२९ ॥
चतुर्विंशतितत्त्वात्मा चतुर्विंशतिसंख्यका ।
गायत्रीसंमिता पश्चात् सोपानावलिराबभौ ॥ १३० ॥
अथ द्वयाख्यं परमं मन्त्रराजमनुस्मरन् ।
सोपानयोर्द्वयं दीर्घं निर्ममे निर्ममान्तरः ॥ १३१ ॥
प्रणतार्तिहृतो मन्त्रे दिव्ये देवस्य तोषणे ।
दशवर्णा इति व्यक्तीकुर्वन् दश ततोऽकरोत् ॥ १३२ ॥
बहुनाऽत्र किमुक्तेन देवदेवालयो महान् ।
उक्तानां भगवच्छास्त्रे लक्ष्मणां लक्ष्यतां ययौ ॥ १३३ ॥

करीशः कमलाकान्तः काले कमलसम्भवम् ।
स्वच्छन्दः संदिशंस्तेन स्वमालयमकारयत् ॥ १३४ ॥
अथ देवेन निर्दिष्टे काले कमलसंभवः ।
जयाख्यतन्त्रमार्गेण प्रतिष्ठाविधिमादिशत् ॥ १३५ ॥
दारुणा मूलबेरं तु कर्मार्चा रजतेन वै ।
औत्सवं चैव ताम्रेणाकारयद्विश्वकर्मणा ॥ १३६ ॥
तथैव चाथ बल्यर्चां विधिनाऽकारयद्विधिः ।
औपगायनमाचार्यं कौशिकं च तपस्विनम् ॥ १३७ ॥
तत्पुत्रांश्च महाभागान् द्वौ द्वौ देवसुतोपमौ ।
दीक्षयित्वा यथान्यायं चक्रवारिजमण्डले ॥ १३८ ॥
तैः प्रतिष्ठान्तिकं सर्वं कर्षणाद्यमकारयत् ।
वैशाखे श्रवणर्क्षे तु संकल्प्यावभृथं पुरा ॥ १३९ ॥
नवमेऽह्नि ध्वजारोहं विधिनाऽकारयद्विधिः ।
प्रथमेऽहनि देवेशं मण्डपेन विभासिना ॥ १४० ॥
वीथीः सञ्चारयामास प्रातर्भक्तानुकम्पया ।
रात्रौ मृगेन्द्रवाहेन देवस्योत्सवमाचरत् ॥ १४१ ॥
द्वितीये दिवसे प्रातर्हंसवाहनमाचरत् ।
रात्रौ मार्तण्डबिम्बेन महोत्सवमकारयत् ॥ १४२ ॥
तृतीये दिवसे प्रातर्गरुडोत्सवमाचरत् ।
अवतारात्परं देवस्योत्सवे प्रथमे पुरा ॥ १४३ ॥
देवो रमापतिर्दिव्यं वैनतेयमधिश्रितः ।
प्रथमं दर्शयामास निजमप्राकृतं वपुः ॥ १४४ ॥
मध्ये गोपुरमुख्यस्य ततो गरुडवाहने ।
गोपुराग्रिममध्ये तु देवसेवा विशिष्यते ॥ १४५ ॥
सर्वपापहरी पुण्या मुक्तिमार्गे उदीरितः ।
रात्रौ हनुमता चैव देवदेवमचारयत् ॥ १४६ ॥
चतुर्थे दिवसे प्रातः शेषासनतले हरिः ।
परव्योम्नीव भक्तानां स्वं रूपं समदर्शयत् ॥ १४७ ॥
रात्रौ चन्द्रमसं बिम्बमास्थितस्योत्सवोऽभवत् ।
मोहिनीरूपमास्थाय प्रातरान्दोलिकां गतः ॥ १४८ ॥
पंचमेऽहनि देवेशो भक्तान्सर्वाननन्दयत् ।

रात्रौ तु यालवाहेन देवस्योत्सवमाचरत् ॥ १४९ ॥
षष्ठे प्रातः कल्पतरौ वेणुगानोत्सवोऽभवत् ।
रात्रौ गजेन्द्रमास्थाय दिव्यं रूपमदर्शयत् ॥ १५० ॥
सप्तमे स्यन्दनं दिव्यमास्थाप्योत्सवमाचरत् ।
अष्टमे तु जलद्रोणीमवगाह्य दिवा हरिः ॥ १५१ ॥
रात्रौ तुरङ्गमास्थाय सर्वाल्लोकानपावयत् ।
नवमे शिबिकायात्रामारचय्य रमापतिः ॥ १५२ ॥
लीलां प्रणयकोपस्य प्रदर्श्य कमलाभुवोः ।
अनन्तसरसीवर्येऽवभृथं महमास्थितः ॥ १५३ ॥
रात्रौ तु पुण्यकोट्याख्ये विमाने निष्ठितः प्रभुः ।
सर्वं पुरं परिभ्रम्य सर्वाल्लोकानपावयत् ॥ १५४ ॥
दशमेऽहनि मध्याह्ने पुष्पयागमहोऽभवत् ।
रात्रौ महाविमानेन पुरयात्रा प्रकल्पिता ॥ १५५ ॥
सर्वावरणनिष्क्रामात्परं विहगराड्ध्वजम् ।
अवरोपय्य विधिवत्पूजको बहुमानितः ॥ १५६ ॥
एवं संरम्भयोगेन महोत्सवमकारयत् ।
प्रतिवत्सरमेवैवं महोत्सवविधिः कृतः ॥ १५७ ॥
पक्षमासायनाब्दाद्या उत्सवाश्चाभवन्क्रमात् ।
महर्षी दीक्षितौ तौ द्वावौपगायनकौशिकौ ॥ १५८ ॥
पर्यायेणैव देवेशमानर्च्यतुरिहादरात् ।
तदेतन्महितं धाम हस्तिशैलप्रथां गतम् ॥ १५९ ॥
प्रणतार्तिहरो देवो वरदो यत्र पूज्यते ।
पूजकास्तस्य तद्वश्या महात्मानो गुणोज्ज्वलाः ॥ १६० ॥
पाञ्चरात्रिकमुख्येभ्यः सर्वेभ्योऽप्यधिका भुवि ।
एवमेतत्समाख्यातं हस्तिशैलस्य वैभवम् ॥ १६१ ॥
देवस्य तन्त्रसारस्य पूजकस्य तु संग्रहात् ।
यथा वै नारदमुनेः मुखात्पूर्वं श्रुतं मया ॥ १६२ ॥
तथैव सर्वमाख्यातं प्रसङ्गात्प्रीतिपूर्वकम् ।
अथ प्रकृतमेवाद्य तन्त्रमारभ्यते मया ॥ १६३ ॥
श्रूयतामवधानेन श्रद्धाभक्तिमहीयसा )

इति श्रीपाञ्चरात्रे जयाख्यसंहितायां शास्त्रारम्भप्रयोजनं नाम प्रथमः पटलः ।

अथ ब्रह्मसर्गाख्यान नाम द्वितीयः पटलः ।

ऋषय ऊचुः—

अज्ञानपङ्कमग्नानां त्वं गतिर्नो महामुने ।
पुरा यथोक्तं विभुना मुनेर्ब्रह्मात्मजस्य च ॥ १ ॥
तत्सर्वं विस्तरेणाद्य यथावद्वक्तुमर्हसि ।
[ नारदो ब्रह्मणः पुत्रो भवबन्धविमुक्तये ] ॥ २ ॥

शाण्डिल्यः—

स्वमात्मानं पुरस्कृत्य सद्भक्ताय(नां?)हिताय च ।
पादपद्मे हरेः स्मृत्वा स्तु(न?)त्वा च शिरसा सह ॥ ३ ॥
प्राञ्जलिः प्रयतो भूत्वा प्रोत्फुल्लवदनेक्षणः ।
प्रणयात्प्रणतो भूत्वा द्वन्द्वोपद्रवशान्तये ॥ ४ ॥
उपसङ्गम्य चरणाविदं स्तोत्रमुदीरये(दैरय?)त् ।

[ नारदकृता भगवत्स्तुतिः ]

नारदः—

नमोऽस्तु परमेशाय कारणाय पराय च ॥ ५ ॥
सहस्रशिरसे तुभ्यं सहस्रचरणाय च ।
सहस्रनयनश्रोत्र सहस्राद्भुतविक्रम ॥ ६ ॥
सहस्रसूर्यवपुषे सहस्रेन्दुगभस्तये ।
नमः परमहंसाय परात्परतराय च ॥ ७ ॥
सत्त्वरूपाय शान्ताय नमो विश्वायनाय च ।
भवाय भवहर्त्रे[1] च सर्गस्य प्रभवाय च ॥ ८ ॥
नमः कनकगर्भाय[2] सर्वदेहभृते नमः ।
त्रयीत्रयमयाद्याय नमस्ते परमात्मने ॥ ९ ॥
हृदम्बुजगुहावासपरव्योमान्तशायिने ।
भक्तियोगविदभ्यासग्राह्याय खलु ते नमः ॥ १० ॥
मीनो निमीलिताक्षस्त्वं कूर्मस्त्वं च नगोद्वहः ।
त्वया रूपं च कृत्वाऽग्र्यं विधृतं भूमिमण्डलम् ॥ ११ ॥
भयाभये त्वयैकस्यां नरसिंहतनौ धृते ।

---

1 भर्त्रे. A 2 गन्धाय. S

गगनश्चातिमायेन दुस्तरं तद्वदस्व मे ॥ २६ ॥

[ भगवता कृत सकलनिष्कलात्मकस्वीयरूपद्वयप्रदर्शनम् ]

शाण्डिल्यः—

इति सञ्चोदितो भक्त्या परया परमेश्वरः ।
विशुद्धबुद्धिना सम्यक् नारदेन सुरर्षिणा ॥ २७ ॥
तदुक्तस्य क्षणे तस्मिन्नात्मीयो गहनश्च यः ।
प्रदर्शितस्स हरिणा सकलो निष्कलात्मकः ॥ २८ ॥
परितोषं परं यातो मुनिर्ब्रह्मसुतस्तदा ।
उवाच परया प्रीत्या भूयस्स विनयान्वितः ॥ २९ ॥
त्वत्प्रसादान्मया ज्ञातं दुर्लभं यत्सुरैरपि ।
इदानीं श्रोतुमिच्छामि सम्भूतिं विभवं तव ॥ ३० ॥

[ लोकस्य सृष्टिप्रलयकालौ ]

श्रीभगवानुवाच—

यदिदं पश्यसि ब्रह्मन्मायया निर्मितं जगत् ।
कालादिबहुभिर्भेदैर्भिन्नं नानास्वरूपकैः ॥ ३१ ॥
मामके प्रभवो ह्यह्नि प्रलयश्च निशागमे ।
दिव्यं युगसहस्रं च मदीयं विद्धि वासरम् ॥ ३२ ॥
रात्रिश्च तावती ज्ञेया एवंरूपे क्षये सति ।
प्रवर्तमाने त्वहनि काले सर्गाख्यलक्षणे ॥ ३३ ॥

[ भगवतो नाभीकमलात् चतुर्मुखसृष्टिः ]

स्वकारणमनिर्जित्य कार्यार्थं मुनिपुङ्गव ।
ज्ञानयोगप्रभावेन अम्मयं महिमावृतम् ॥ ३४ ॥
प्रेरितं नाभिरन्ध्रेण मया हार्दं कुशेशयम् ।
विज्ञप्तिमात्ररूपं यन्ममान्तःकरणस्थितम् ॥ ३५ ॥
सहस्रार्कप्रतीकाशं सहस्रशशिकेसरम् ।
सहस्रवह्निगर्भं च हेमनालं महाप्रभम् ॥ ३६ ॥
तन्मध्ये मानवो( सो ? ) ब्रह्मा मया सृष्टश्चतुर्मुखः ।

[ तस्य चतुर्मुखस्य विद्याशक्तिविशेषयोगः ]

जगतां प्रभवस्तस्माद्विद्यादेहस्सनातनः ॥ ३७ ॥

सर्वसंस्कारसंपूर्णो वेदवेदाङ्गपारगः ।
अणिमाद्यष्टकोपेतस्सिसृक्षाशक्तिभिर्युतः ॥ ३८ ॥

[ रजोगुणोद्रेकात् तत्कृता विविधसृष्टिः ]

न तस्य विदितश्चाहं यदा यातस्सगर्वताम् ।
अस्मीति प्रत्ययं लब्ध्वा रजसा कलुषीकृतः ॥ ३९ ॥
तदा चकार विविधां सृष्टिं स्वामा(त्मा?)नुपूर्विकाम् ।
न्यग्भूतभूतपूर्वाणि स्थूलसूक्ष्माणि यानि च ॥ ४० ॥
चेतनाचेतनाख्यानि व्यञ्जितानि क्रमेण तु ।
देवाश्चानेकभेदेन मनुष्याः पशवस्तथा ॥ ४१ ॥
स्थावरान्तानि सर्वाणि सन्त्यस्मिन्यानि कानिचित् ।
स्वनिकेतानि सर्वाणि दृष्ट्वा स्वस्मिन्पितामहः ॥ ४२ ॥

[ रजःप्रकर्षादभिभूतसत्त्वतया चतुर्मुखस्य लोकधारणेऽसामर्थ्यम् ]

स्वा(स्व?)लोकं रागबाहुल्यात्सम्यग्धर्तुं[1] न वेत्त्यसौ ।
कृताकृतं[2] जगत्यस्मिन्विना सत्त्वोदयेन तु ॥ ४३ ॥

[ भूमेर्धारणाय भगवतो योगनिद्राश्रयणम् ]

सम्पाद्यैवं महारूपमात्मीयं पङ्कजान्वितम् ।
जलान्तर्वर्तितं भूमेः कृत्वा सन्ता(न्धा?)रणार्थतः ॥ ४४ ॥
योगनिद्रां समाश्रित्य स्थितोऽहं द्विजसत्तम ।

[ मधुकैटभासुरयोरुत्पत्तिः, ताभ्यां कृतः सर्वलोकविजयः ]

ब्रह्मणो जायमानस्य ह्यभूतां स्वेदबिन्दुकौ ॥ ४५ ॥
पद्मनालं समाश्रित्य संस्थितावुदरान्तरे ।
तदोत्थितौ दुराधर्षौ नाम्ना द्वौ मधुकैटभौ ॥ ४६ ॥
कामक्रोधात्मकौ चैव तमसाऽतीव निर्भरौ ।
तामसेनाभिमानेन [3]वृद्धियुक्तौ कृतौ स्थितौ ॥ ४७ ॥
किमिदं तस्य पद्मस्य कल्पयन्तौ परस्परम् ।
कौतुकाभिनिविष्टौ तु पातालतलमाश्रितौ ॥ ४८ ॥
भूयस्तस्माच्च पातालात्कालवैश्वानरावधि ।
कृत्वाथ तैजसीं मायां यातावग्नेरधस्तु तौ ॥ ४९ ॥

---

1 कर्तुं A  2 कृतकृत्ये A.  3 बुद्धि C. L.

नान्तोऽस्ति पद्मनालस्य तेजोज्वालावृतस्य च ।
गर्वान्मोहं गतौ किञ्चिद्यदा भूयस्तदा द्विज ॥ ५० ॥
मतिं कृत्वोर्ध्वगमने प्राप्तावूर्ध्वं मया ततः ।
स पद्मोऽन्तर्हितश्चैव ततश्चोत्पन्नविस्मयौ ॥ ५१ ॥
स्थितौ तु तौ महाघोरौ क्व गतस्स च पङ्कजः ।
प्रोत्थितौ तोयमध्याच्च पश्येतां पृथिवीमिमाम् ॥ ५२ ॥
चक्रतुर्मतिमूर्द्ध्वेषु लोकेषु गमनं प्रति ।
दृष्ट्वा च विभवं सर्वं बुद्धिरासीत्तयोस्तदा ॥ ५३ ॥
क्ष्मादौ सर्वेषु लोकेषु सम्यक्स्वीकरणं प्रति ।
निर्जिताश्च ततस्सर्वे लोका लोकान्तराण्यपि ॥ ५४ ॥
तमसाऽतीव कष्टेन व्याप्तं सर्वं चराचरम् ।

[ ताभ्यां कृतेन वेदापहारेण चतुर्मुखस्य ज्ञानभ्रंशादधर्मवृद्ध्या लोकस्य दुरवस्थाप्राप्तिः ]

हृतवेदः कृतो ब्रह्मा अभूदन्यस्तु तत्क्षणात् ॥ ५५ ॥
वेदैर्विना यतो विप्र [1]वेदं चक्षुः पुरा श्रितः ।
अस्थितिं जगतः कृत्वा अधर्मस्थापनं महत् ॥ ५६ ॥
ततस्तौ तामसौ दुष्टौ जलमध्यं पुनर्गतौ ।

[ मुनिभिः कृत चतुर्मुखस्योद्बोधनम् ]

तदा सम्बोधितो ब्रह्मा देवतैर्मुनिभिस्सह ॥ ५७ ॥
संस्मरस्वादिदेवं त्वं समुद्भूतोऽब्जसम्भव ।
स नः श्रेयःप्रदो नान्यो यदि स्यात्सत्यता श्रुतेः ॥ ५८ ॥
न त्वया साभिमानेन ज्ञातं परमकारणम् ।
येनाऽनर्थमिदं कष्टं जगत्यस्मिन्प्रतिष्ठितम् ॥ ५९ ॥
कारणं ते स भगवांस्त्वमस्माकं च कारणम् ।
परमं कारणं विष्णुमजेयं स्मर पद्मज ॥ ६० ॥

[ मुनिभिरुद्बोधितेन चतुर्मुखेन कृता भगवत्स्तुतिः ]

ततश्शान्तरजा ब्रह्मा सत्त्वैकगतमानसः ।
अभूत्स्तुतिपरस्सर्वैर्देवतैर्मुनिभिस्सह ॥ ६१ ॥
प्रणष्टवेदधर्मोऽहं न मेऽस्ति गतिरच्युत ।
पाहि पाहीत्यभीक्ष्णं स अत्यार्तश्च यदाऽब्रवीत् ॥ ६२ ॥

---

1 वेदचक्षुः पुराकृतः C. L.

[ भगवता कृतमभयप्रदानम् ]

तदा विप्रावतीर्णोऽहं ममत्वे ग्लानिमागते ॥
प्रणष्टेषु च वेदेषु ब्रह्मण्यब्रह्मतां गते ॥ ६३ ॥
दत्तं मयाऽभयं तेषां समाश्वस्तमिदं जगत् ।
विद्या मायात्मकं रूपं द्विविधं च मया कृतम् ॥ ६४ ॥

[ विद्यामयरूपं परिगृह्य भगवता विरचित पातालाद्वेदानामुद्धरणम् ]

विद्यामयेन रूपेण शब्दब्रह्ममयेन च ।
पातालान्तर्गता वेदास्स्वीकृताः प्रणवेन तु ॥ ६५ ॥

[ विद्यामयरूपस्य भगवतोऽनुप्रवेशाच्चतुर्मुखस्य वेदावधारणम् ]

संप्रविष्टस्ततश्चाहमिमां प(पा ?)द्मोद्भवीं तनुम् ।
लब्धसंज्ञेन तेनाथ वेदा ह्यावर्तिताः पुनः ॥ ६६ ॥
तदा भुवननाथाश्च सर्वे हृष्टतमाः स्थिताः ।
तमोमोहभयान्मुक्ताः स्वकं स्थानं समाश्रिताः ॥ ६७ ॥

[ मायामय रूप परिगृह्य ताभ्यां सह भगवतो युद्धाचरणम् ]

द्वितीयेन तु रूपेण तयोरग्रे स्थितोऽभवम् ।
तौ तु दुष्टौ मदोन्मत्तौ मम युद्धाभिलाषिणौ ॥ ६८ ॥
ततो मायात्मकेनैव वपुषाऽनेकबाहुना ।
बहून्यब्दसहस्राणि योधितौ तौ तदा मया ॥ ६९ ॥

[ तयोरजेयत्वमालक्ष्य मन्त्रमयरूपं परिगृह्य तयोर्हननम् ]

ज्ञात्वा तयोरजेयत्वमहमन्तर्हितो द्विज ।
ततो मन्त्रमयं रूपं कृत्वा शक्त्यात्मकं महत् ॥ ७० ॥
तत्ताभ्यां चैव दुर्धर्षं दुर्निरीक्ष्यं तथाऽर्कवत् ।
लीलया करयुग्मेन गृहीत्वा कण्ठतो मया ॥ ७१ ॥
ऊरूभ्यां मर्दितौ चैव ययुर्निष्कण्टकास्सुराः ।

[ मेदिनीशब्दनिर्वचनम् ]

तदुद्भूतेन मेदेन परिपूर्णा वसुन्धरा ॥ ७२ ॥
ततः प्रभृति कालाच्च मेदिनीति निरुच्यते ।
इत्येष कथितस्सर्गो मुने ब्राह्मो मया तव ॥ ७३ ॥
अन्ये ह्यनेकरूपाश्च सर्गा बहुतरा गताः ।
ईदृक्प्रकाशाः स्थूलाश्च येषा सङ्ख्या न विद्यते ॥ ७४ ॥

प्राधानिको द्विजाऽस्याद्यस्तस्याद्यो वैष्णवः परः ।
किमन्यत्कथयिष्यामि ब्रूहि यत्रास्ति संशयः ॥ ७९ ॥
अद्यापि मुनिशार्दूल तदहं प्रब्रवीमि ते ।

इति श्रीपाञ्चरात्रे जयाख्यसहितायां ब्रह्मसर्गाख्यान नाम द्वितीयः पटलः

---

अथ प्रधानसर्गाख्यान नाम तृतीयः पटलः

नारदः—

भगवन्देवदेवेश लोकनाथ जगत्पते ।
ब्रूहि प्राधानिकं सर्गं स्थूलस्यास्य हि यः परः ॥ १ ॥

श्रीभगवान्—

( प्रधानलक्षणम् )

अनादिमजमव्यक्तं गुणत्रयमयं द्विज ।
विद्धि प्रदीपस्थानीयं भिन्नमेकात्मलक्षणम् ॥ २ ॥

( प्रधानात् क्रमान्महदादितत्त्वोत्पत्तिः )

विभक्तं च तदुत्पन्नं क्रमात्सत्त्वं रजस्तमः ।
गुणत्रयसमूहाद्धि धर्मज्ञानादिलक्षणा[1] ॥ ३ ॥
बुद्धिर्बुद्धिमतां श्रेष्ठ अहङ्कारस्त्रयात्मकः ।
प्रकाशात्मा विकृत्यात्मा भूतात्माऽथ[2] तृतीयकः ॥ ४ ॥
तैजसात् समनश्चैव जातं बुध्यक्षपञ्चकम् ।
श्रोत्रे त्वक्चक्षुषी जिह्वा घ्राणं चैव क्रमेण तु ॥ ५ ॥
असृजच्च विकृत्यात्मा करणानां च पञ्चकम् ।
तच्च वाक्पाणिपादाख्यं पायूपस्थेति च स्मृतम् ॥ ६ ॥
भूतात्मा भूतयोनीनां स्रष्टा विद्धि सदैव हि ।
शब्दस्पर्शौ तथा रूपरसगन्धाभिधायिनः ॥ ७ ॥
तेजो(भ्यो ?)भूतानि जातानि खवाय्वग्न्युदकानि च ।
पृथिव्यन्तानि पञ्चैव एकवृद्धिगुणानि च ॥ ८ ॥
एष प्राधानिकस्सर्गः प्रकृत्या तु जडात्मकः[3] ।

नारदः—

जडात्मकं प्रधानं च तदुद्भूतिस्तदात्मिका ॥ ९ ॥

---

1 णात् A. 2 ज्ञानात्मा S. 3 त्मना A.

परस्परजडानां च कीदृशं वद मे प्रभो ।
उत्पाद्योत्पादकत्वं हि अत्र मे संशयो महान् ॥ १० ॥

( जडानां मिथो हेतुहेतुमद्भावे उपपत्तिः )

श्रीभगवान्—

बीजं ह्यचेतनं यद्वत्तथा व्रीहिकणो द्विज ।
अन्येषूत्पादकं दृष्टं तत्त्वं तत्त्वे तथैव च ॥ ११ ॥
गुणसाम्यस्वरूपस्य रागादेरास्पदस्य च ।
सन्तान एको ह्येकस्य चेतनाचेतनस्य च ॥ १२ ॥

नारदः—

अचेतनमिदं नाथ कथं स्याच्चेतनं पुनः ।
एतद्गुणास्पदं तत्त्वं यच्चैकं नैकधा स्थितम् ॥ १३ ॥

( अचेतने चेतनायोगोपपादनम् )

श्रीभगवान्—

चिद्रूपमात्मतत्त्वं यदभिन्नं ब्रह्मणि स्थितम् ।
तेनैतच्छुरितं भाति अचिच्चिन्मयवद्द्विज ॥ १४ ॥
यथाऽयस्कान्तमणिना लोहस्याधिष्ठितं तु वै ।
दृश्यते [1]वलमानं तु तद्वदेव मयोदितम् ॥ १५ ॥

नारदः—

चिन्मयस्य जडस्यास्य सम्बन्धे हेतुरुच्यते ।
विरुद्धमेतद्देवेश वेद्मि छायातपं यथा ॥ १६ ॥

( चिदचितोः संयोगे बन्धे वियोगे च मोक्षे हेतुः )

श्रीभगवान्—

अनादिवासनायुक्तो जीवोऽयं वै चिदात्मकः ।
तद्वासनापनोदार्थं परस्माद्ब्रह्मणो द्विज ॥ १७ ॥
तद्धर्मधर्मिणी सूक्ष्मा उदेत्येकान्तरूपिणी ।
शुद्धाशुद्धात्मिका शुद्धा परमानन्दरूपिणी ॥ १८ ॥
शुद्धसर्गक्रमेणैत्य [2]आध्यात्म्यात्मनि तिष्ठति ।
करुणोदधिरूपेण भविना मोक्षदक्षमे ॥ १९ ॥
स हि सङ्कल्पयामास मोक्षो ह्यस्यास्तु कार्मिणः ।
ततो विश्वात्मशक्तिस्सा तदिच्छानुविधायिनी ॥ २० ॥

---

1 पल A.  2 अध्यात्मात्मनि A.

प्रत्यक्चेतनमाश्रित्य तत्क्षणादवतिष्ठते ।
मन्त्रशक्तिरिवादृश्या तया सम्बोधितो द्विज ॥ २१ ॥
त्विषाऽऽक्रान्तस्वरूपश्च प्रत्यगात्मा चिदात्मकः ।
ब्रह्मण्येकात्मतां याति कर्मवर्गे[2] क्षयं गते ॥ २२ ॥
तस्माद्वै कर्मणां नाशो ह्यभुक्तानां न[3] तस्य वै ।
न त्वाधारं विना तेषामभिव्यक्तिर्भवेदतः ॥ २३ ॥
तत्स्था ब्रह्मकला सा वै तत्रात्मानं नियोजयेत् ।
मायामये द्विजाधारे गुणाधारे [4]तते जडे ॥ २४ ॥
शक्त्या संयोजितो ह्यात्मा वेत्त्यात्मीयाश्च वासनाः ।
शुभाशुभस्वरूपाश्च मायाधारे स्थितास्सदा ॥ २५ ॥
यदाऽलुप्तविवेको वै असक्तो वासनाफलम् ।
भुङ्क्ते चाशु स बन्धेभ्यो मुक्तो याति क्रमात्परम् ॥ २६ ॥
निर्विवेकोऽथ रज्येत मायाभोगे गुणात्मके ।
सवासनो वासनाभिरविकारश्च बध्यते ॥ २७ ॥
लयोदयौ तथाऽऽप्नोति स विश्रान्तः पुनः पुनः
चेतनाचेतनाभ्यां तु सम्बन्धस्य प्रयोजनम् ॥ २८ ॥
कथितं नारद मया किमिदानीं वदामि ते ।

इति श्रीपाञ्चरात्रे जयाख्यसंहितायां प्रधानसर्गाख्यानं नाम तृतीयः पटलः

---

## अथ शुद्धसर्गब्रह्मतत्त्वाख्यानं नाम चतुर्थः पटलः

नारदः—

शुद्धसर्गमहं देव वेत्तुमिच्छामि तत्त्वतः ।
सर्गद्वयस्य चैवास्य यः परत्वेन वर्तते ॥ १ ॥

( वासुदेवात्परब्रह्मणस्तदनन्यस्याच्युतादेराविर्भावः )

श्रीभगवान्—

यत्सर्वव्यापकं देवं परमं ब्रह्म शाश्वतम् ।
चित्सामान्यं जगत्यस्मिन्परमानन्दलक्षणम् ॥ २ ॥
वासुदेवादि(द?)भिन्नं तु वह्न्यर्केन्दुशतप्रभम् ।
स वासुदेवो भगवांस्तद्धर्मा परमेश्वरः ॥ ३ ॥

---

1 धर्मे A.　2 तु A.　3 ततो A.

[1]स्वादीप्तं क्षोभयित्वा तु विद्युद्वत्स्वेन तेजसा ।
प्रकाशरूपी भगवानच्युतश्चा( तं चा ?)सृजद्विज ॥ ४ ॥
सोऽच्युतोऽच्युततेजाश्च स्वरूपं वितनोति च ।
आश्रित्य वासुदेवं च घर्मे(र्मो) मेघदलं यथा ॥ ५ ॥
क्षोभयित्वा स्वमात्मानं सत्यं भास्वरविग्रहम् ।
उत्पादयामास तदा समुद्रो बुद्बुदं यथा ॥ ६ ॥
स चिन्मयप्रकाशाख्य उत्पाद्यात्मानमात्मना ।
पुरुषाख्यमनन्तं च प्रकाशप्रसरं महत् ॥ ७ ॥

[ पुरुषात्मनाऽऽविर्भूतस्य वासुदेवस्य सर्वदेवान्तर्यामित्वम् ]

[2]स च वै सर्वदेवानामाश्रयः परमेश्वरः ।
अन्तर्यामी स तेषां वै तारकाणां यथाऽम्बरम् ॥ ८ ॥
सेन्धनः पावको यद्वत्स्फुलिङ्गनिचयं द्विज ।
अनिच्छतः प्रेरयति तद्वदेष परः प्रभुः ॥ ९ ॥
प्राग्वासनानिबद्धा ये जीवास्तान्बन्धशान्तये ।
स्वदेह ......................तदुभयं पुनः ॥ १० ॥

[ अवताराणां तदंशत्वम् ]

[3]ये स्विदाद्यावताराश्च लोकत्राणाधिकारिणः ।
सर्वान्विद्धि तदंशांस्तान्सर्वेऽशास्सत्त्वजास्तथा ॥ ११ ॥

[ पुरुषसत्याच्युतानामुत्तरोत्तरस्वरूपादभिन्नानां वासुदेवे परे रूपेऽवस्थितिः ]

स च सत्यादभिन्नस्तु तस्मात्सत्यं तथैव हि ।
[4]द्वाभ्यामेकात्मरूपं यत्तदभिन्नमथोऽच्युतात् ॥ १२ ॥
आश्रितस्संस्थितस्ताभ्यामभेदेन सदैव हि ।
पुमान्सत्योऽच्युतश्चैव चिद्रूपं त्रितयं तु तत् ॥ १३ ॥
शान्तसंवित्स्वरूपे च वासुदेवेऽवतिष्ठते ।

[ चिद्रूपस्य वासुदेवस्य ततः प्रादुर्भूतस्याच्युतादिरूपत्रयस्य च सनिदर्श-
नमभिन्नतानिरूपणम् ]

सोऽन्तर्यामी प्रकाशात्मा चिद्रूपस्स प्रतिष्ठितः ॥ १४ ॥

---

1 स्वदीप्तं C. L. 2 स चैव A. 3 येस्मदा A. सर्वानपि 4 आम्या A.

त्रितये यस्तथारूपोऽनिच्छात उदितस्सदा[1] ।
असङ्कल्पात्मकास्सर्वे प्रसरन्ति परस्परम् ॥ १५ ॥
दीपवन्मुनिशार्दूल स्वपरालोकदास्तु वै ।
सङ्कल्पेन विना तद्वदन्योऽन्यत्वेन[2] संस्थिताः ॥ १६ ॥
गृह्णन्ति प्रतिबिम्बत्वं दर्पणेष्विव दर्पणम् ।
अतीव द्विज नैर्मल्यात्सङ्क्रान्तानां परस्परम् ॥ १७ ॥
प्रविभागो न जायेत व्योमस्फटिकयोर्यथा ।
भासाद्वयस्य विप्रेन्द्र तथा तेषामभिन्नता ॥ १८ ॥
एतद्रहस्यं परमं मया ते संप्रकाशितम् ।
सर्ग आद्यो ह्यनन्त(न्य?)श्च अनन्तस्य महात्मनः ॥ १९ ॥

नारदः—

मयैतद्विदितं सर्वं सर्वेश त्वदनुग्रहात् ।
यथा ह्यस्य(सि?) त्वमव्यक्तो ह्यमूर्तो मूर्त्ततां गतः ॥ २० ॥
ज्ञातुमिच्छामि भगवन्स्वरूपं ते यथार्थतः ।
स्थूलं सूक्ष्मं परं चैव अध्यात्मनि तथा बहिः ॥ २१ ॥
भवत्प्रसादसामर्थ्याद्विनैतत्त्रितयं कथम् ।
व्यज्यते विषयस्थानां कुरु मेऽनुग्रहं वद ॥ २२ ॥

[ स्थूल-सूक्ष्म-परात्मना त्रेधाऽवस्थितस्य भगवतो रूपस्य निरूपणम् ]

श्रीभगवान्—

स्रष्टा पालयिता चाहं संहर्ता पुनरेव च ।
स्वकीययोगयुक्त्या तु स्थूलरूपेण नारद ॥ २३ ॥
सूक्ष्मेण सर्वभूतानां निवसामि हृदन्तरे ।
करोम्यनुग्रहं चापि भक्तानां भावितात्मनाम् ॥ २४ ॥
परेणानन्दरूपेण व्यापकेनामलेन च ।
व्यासयाम्यखिलं विप्र रसेनेव तरूत्तमम् ॥ २५ ॥
मूले सिक्तं शिखाशाखापत्रपुष्पफलान्वितम् ।

नारदः—

सत्यं त्वया जगत्सृष्टं विधृतं च त्वया विभो ॥ २६ ॥
कालरूपी त्वमेवान्ते सत्यं संहारकृत्स्मृतः ।
पातालादौ च ये लोकास्त्वन्नाभेश्च समुत्थिताः ॥ २७ ॥

---

1 स्तदा S. 1 स्तथा A. 2 दन्यान्य A.

धर्मसंस्थापनं चैव पुनरेव त्वया कृतम् ।
संहृताश्च त्वया दैत्याः श्रुतं च विदितं मया ॥ २८ ॥
यथा येन प्रकारेण त्वमेव प्रकरोषि च ।
तद्वै वेदितुमिच्छामि त्वत्सकाशात्सुविस्तरम् ॥ २९ ॥

[ सकलनिष्कलात्मना द्विधा भिन्नाया मन्त्ररूपाया मूर्तेर्बन्धतद्विपर्ययहेतुत्वोपपादनम् ]

श्रीभगवान्—

योगवीर्येण विप्रेन्द्र मन्त्ररूपा पुरातनी ।
निष्कळा सकळा चैव भोगमोक्षप्रदा शुभा ॥ ३० ॥
कृता मया च लोकानां सम्यगालोकदा शुभा ।
मन्त्रोत्पत्तिक्रमेणैव स्थिता शान्ततरात्मना ॥ ३१ ॥
तमोमयाभ्यां मूर्त्ताभ्यां दोषाभ्यां नाशनाय वै ।
सैवावतिष्ठते लोके प्रकृतिर्विश्वपालिनी ॥ ३२ ॥
या करोत्येवमादीनि कर्माण्यस्मिन्भवोदरे ।
भक्तानां मोक्षयत्याशु कृत्वा बन्धपरिक्षयम् ॥ ३३ ॥

नारदः—

निश्शेषेण च तद्योगं तन्मन्त्रं वीर्यमेव च ।
आदिशस्व जगत्कर्तु(र्त)र्यदि सानुग्रहोऽसि मे ॥ ३४ ॥

[ मन्त्रतद्वीर्यादिपरिज्ञानस्य ब्रह्मज्ञानमूलत्वकथनम् ]

श्रीभगवान्—

ब्रह्मपूर्वमिदं सर्वं यत्त्वया चोदितो ह्यहम् ॥ ३५ ॥
तद्विना न प्रवर्तन्ते यानि सङ्कीर्तितानि ते ।

नारदः—

किं तद्ब्रह्म विजानीयां येन योगेश्वरेश्वर ॥ ३६ ॥
विभवो मन्त्रपूर्वश्च मन्त्रोपकरणं तथा ।
प्रवर्तन्ते विभो क्षिप्रं भक्तानां भक्तवत्सल ॥ ३७ ॥

श्रीभगवान्—

ज्ञानेन तदभिन्नेन परिज्ञातेन नारद ।
जायते ब्रह्मसंसक्तिस्तस्माज्ज्ञानं समभ्यसेत् ॥ ३८ ॥

नारदः—

ब्रह्मसिद्धिप्रदं ज्ञानं ब्रूहि तल्लक्षणं प्रभो ।
यज्ज्ञात्वा न भवेज्जन्म मरणं भवबन्धनम् ॥ ३९ ॥

श्रीभगवान्—

[ ज्ञानस्य द्वैविध्यम्, तयोः क्रियाख्येन सत्ताख्यस्य निष्पत्तिः ]

**ज्ञानं तु द्विविधं विद्धि सत्ताख्यं च क्रियात्मकम् ।**
**सत्ताख्यस्य क्रियाख्येन अभ्यस्तेन भवेद्धृतिः ॥ ४० ॥**

नारदः—

**ज्ञानं क्रियात्मकं तावद्वद कीदृग्विधं प्रभो ।**
**येनाभ्यस्तेन सत्ताख्यं ज्ञास्यामि ब्रह्मसिद्धिदम् ॥ ४१ ॥**

[ क्रियात्मकस्य यमनियमभेदेन द्वैविध्यम् ]

श्रीभगवान्—

**द्विविधं च क्रियाज्ञानं पूर्वं नियमलक्षणम् ।**
**यमाख्यं परमं चैव तच्च स्वाभाविकं स्मृतम् ॥ ४२ ॥**
**निर्वर्त्य नियमाख्यं तद्यमयुक्तं च सिद्धिदम् ।**

नारदः—

**एतयोर्लक्षणं ब्रूहि यदायत्तं परं पदम् ॥ ४३ ॥**
**विस्तरेण जगन्नाथ भवाब्धिपतितस्य मे ।**

[ यमनियमनिरूपणम् ]

श्रीभगवान्—

**शुचिरिज्या तपश्चैव स्वाध्यायश्श्रुतिपूर्वकः ॥ ४४ ॥**
**अक्रूरताऽनिष्ठुरता क्षमा चैवानपायिनी ।**
**सत्यं भूतहितं चैव यदबाधा परेष्वपि ॥ ४५ ॥**
**परस्वादेरहिंसा च चेतसो दमनं महत् ।**
**इन्द्रियाभ्यवहार्याणां भोगानामपि चास्पृहा ॥ ४६ ॥**
**आसने शयने मार्गे असक्तिश्चापि भोजने ।**
**हृद्गतं न त्यजेद्ध्यानमानन्दफलदं च यत् ॥ ४७ ॥**
**आत्मशक्त्या प्रदानं च सत्यं वाक्यमनिष्ठुरम् ।**
**अमित्रेषु च मित्रेषु समा बुद्धिस्सदैव हि ॥ ४८ ॥**
**आर्जवत्वमकौटिल्यं कारुण्यं सर्वजन्तुषु ।**
**एतदङ्गान्वितो यो यो यमो यमनियामकः ॥ ४९ ॥**

[ क्रियाख्यात्सत्ताख्यनिष्पत्तेर्ब्रह्माभिन्नज्ञानोदयः, तेन ब्रह्मोपसम्पत्तिः ]

**एवं क्रियाख्यात्सत्ताख्यं ज्ञानं प्राप्नोति मानवः ।**

ब्रह्मण्यभिन्नं सत्ताख्यात् ज्ञानाज्ज्ञानं ततो भवेत् ॥ ५० ॥
ब्रह्माभिन्नात्ततो ज्ञानाद्ब्रह्म संयुज्यते परम् ।

[ ब्रह्मसमापत्तेरपुनर्भवलक्षणमोक्षरूपता ]

अनादिवासनायुक्तो यो जीव इति कथ्यते ॥ ५१ ॥
तस्य ब्रह्मसमापत्तिर्याऽपुनर्भवता च सा ।

[ ब्रह्माभिन्नत्वप्रकारोपपादनम् ]

यत्सम्यग्ब्रह्मवेत्तृत्वं मनाग्या चैव भिन्नता ॥ ५२ ॥
ईषद्ब्रह्मसमापत्तिस्तदभिन्नं तु वै स्मृतम् ।

[ अविद्यायोगादात्मनो देवादिभेदः ]

ज्ञानं त्वनेकभेदैर्यत्तत्त्वतामेति चात्मनः ॥ ५३ ॥
[1]गौण(णे ?)विद्यामये तत्त्वे सम्यग्विद्यामयस्य च ।

नारदः—

का गुणाख्या ह्यविद्या च यत्र ज्ञानमयः प्रभुः ॥ ५४ ॥
त्वयोक्तं यत्तु (तत्त्व ?)तामेति भेदैर्नानाविधैर्विभो ।

[ अविद्यास्वरूपनिरूपणम् ]

श्रीभगवान्—

गुणत्रयस्य यत्साम्यं साऽविद्याऽनेकरूपिणी ॥ ५५ ॥
रागादीनां च दोषाणामुत्पत्तिस्थानमेव च ।

नारदः—

ब्रह्मप्राप्तौ तु यस्सम्यगुपायः कथितः पुरा ॥ ५६ ॥
स च किंलक्षणो ब्रूहि यश्चात्मेति त्वयोदितः ।

[ जीवात्मनोर्निरूपणम् ]

श्रीभगवान्—

यत्तत्स्थितं च चिद्रूपं स्वसंवेद्याद्यनिर्गतम् ॥ ५७ ॥
रञ्जितं गुणरागेण स आत्मा कथितो द्विज ।

नारदः—

ज्ञानमात्मस्वरूपं च माया तद्रञ्जिका तु वै ॥ ५८ ॥
आचक्ष्व भगवन्ब्रह्म प्राग्व( ग्य ?)त्संचोदितं मया ।
तन्मे न विदितं सम्यग्यदर्थं क्रियते क्रिया ॥ ५९ ॥

---

1 गौण्ये A.

यत्प्राप्य न पुनर्जन्म भवेऽस्मिन्प्राप्यते बुधैः ।

[ परब्रह्मनिरूपणम् ]

श्रीभगवान्—

आनन्दलक्षणं ब्रह्म सर्वहेयविवर्जितम् ॥ ६० ॥
स्वसंवेद्यमनौपम्यं परा काष्ठा परा गतिः ।
सर्वक्रियाविनिर्मुक्तं सर्वेषामाश्रयं प्रभुः ॥ ६१ ॥
चिन्तामणौ यथा [1]सर्वं मूर्तं सङ्गि व्यवस्थितम् ।
तथा सर्वं तु सर्वत्र विद्यते सर्वगस्य च ॥ ६२ ॥
अनादि तदनन्तं च न सत्तन्नासदुच्यते ।
सर्वत्र करवाक्पादं सर्वतोऽक्षिशिरोमुखम् ॥ ६३ ॥
सर्वतःश्रुतिमद्विद्धि सर्वमावृत्य तिष्ठति ।
सगुणैरिन्द्रियैस्सर्वै[2]र्भासितं चैव वर्जितम् ॥ ६४ ॥
तदसक्तं हि सर्वत्र यत्तु सर्वत्र चैव हि ।
निर्गुणो गुणभोक्ता च सर्वस्यान्तर्बहिः स्थितः ॥ ६५ ॥
चलाचलं तु तद्विद्धि सूक्ष्मत्वान्नोपलभ्यते ।
दूरस्थितस्तथा हृत्स्थः परमात्मा परः प्रभुः ॥ ६६ ॥
भूतेभ्यश्चाविभक्तं तद्विभक्तमुपलभ्यते ।
स भावभूतभृच्च स्यात्संहर्तापि सृजत्यपि ॥ ६७ ॥
प्रकाश्यं[3] ज्योतिषां तच्च अज्ञानात्परतः स्थितम् ।
ज्ञानं तदेव ज्ञेयं च तद्ध्यानेनाधिगम्यते ॥ ६८ ॥
सर्ववर्णरसैर्हीनं सर्वगन्धरसान्वितम् ।
सर्वज्ञस्सर्वदर्शी च सर्वस्सर्वेश्वरः प्रभुः ॥ ६९ ॥
सर्वशक्तिमयश्चैव स्वाधीनः परमेश्वरः ।
अनादिश्चाप्यनन्तश्च सर्वदुःखविवर्जितः ॥ ७० ॥
विदित्वैवं (एवं वेत्ति ?) परं ब्रह्म ज्ञानेन परमेण च ।
यदा न जायते भूयस्संसारेऽस्मिंस्तदा पुमान् ॥ ७१ ॥

नारदः—

सर्वतः पाणिपादाद्यैर्यदुक्तं लक्षणैस्त्वया ।
न चैकमुपपद्येत घटते तद्यथाऽऽदिश ॥ ७२ ॥

---

1 सर्वममूर्तं संव्यव A. 2 भावितं C L. 3 श्यं A.

श्रीभगवान्—

इति तस्य जगद्धातुस्सर्वज्ञत्वाच्च नारद ।
महिमाऽयमनन्तस्य ईश्वरत्वाच्च विद्यते ॥ ७३ ॥
तस्य सर्वातिशायित्वं यथा ते न मयोदितम् ।
अन्यथा विद्यते तस्य महिमाऽयं तथाऽच्युते ॥ ७४ ॥
अनादिस्सर्वपूर्वत्वान्न सत्तन्नासदित्यपि ।
अप्रत्यक्षतयाऽक्षाणां तदसद्विजसत्तम ॥ ७५ ॥
स्वसंवेद्यं तु तद्विद्धि गन्धः पुष्पादिगो यथा ।
तथा समस्तमाक्षिप्तं यस्माद्वै परमात्मना ॥ ७६ ॥
तस्माद्वै सर्वपाणित्वं सर्वगस्यानुमीयते ।
नावच्छिन्नं हि देशेन न कालेनान्तरीकृतम् ॥ ७७ ॥
अतस्सर्वगतत्वाद्वै सर्वतःपात्प्रभुः स्मृतः ।
ऊर्ध्वं तिर्यगधोयातैर्यथोच्चै(स्तै?)र्भासयेद्रविः ॥ ७८ ॥
तद्वत्प्रकाशरूपत्वात्सर्वचक्षुस्ततो ह्यजः ।
यथा सर्वेषु गात्रेषु प्रधानं गीयते शिरः ॥ ७९ ॥
भवेऽस्मिन्प्राकृतानां तु न तथा तस्य सत्तम ।
समत्वात्पावनत्वाच्च सिद्धस्सर्वशिराः प्रभुः ॥ ८० ॥
यथाऽनन्तरसास्सर्वे[1] तस्य सन्ति सदैव हि ।
सर्वत्र शान्तरूपस्य अतस्सर्वमुखः स्मृतः ॥ ८१ ॥
शब्दराशिर्यतो विद्धि स एव परमेश्वरः ।
सर्वतः श्रुतिमांश्चातो यथा दृक्श्रावकोरगः ॥ ८२ ॥
अयःपिण्डे यथा वह्निर्भिन्नस्तिष्ठत्यभिन्नवत् ।
तद्वत्सर्वमिदं देवो व्याप्य(पृ?)त्य परितिष्ठति ॥ ८३ ॥
निर्मले दर्पणे यद्वत्किञ्चिद्वस्त्वभितिष्ठति ।
न च तद्दर्पणस्यास्ति अस्ति तस्य च तद्द्विज ॥ ८४ ॥
सेन्द्रियैस्तु गुणैरेवं संयुक्तश्चापि वर्जितः ।
अस्मिन्मायामये विश्वे व्यापी सर्वेश्वरः प्रभुः ॥ ८५ ॥
सर्वदा विद्ध्यसक्तश्च यथाऽम्भः पुष्करच्छदे ।
सर्वभृद्वैश्वरूप्याच्च अमोघत्वाच्च निर्गुणः ॥ ८६ ॥

1 रताः S. & C L

उदासीनवदासीनो गुणानां गुणभुक् ततः ।
सर्वदाऽन्तर्गतस्यैव कुम्भस्य च यथोदकम् ॥ ८७ ॥
तथा सर्वस्य जगतो बहिरन्तर्व्यवस्थितः ।
घटसंस्थं यथाऽऽकाशं नीयमानं विभाव्यते ॥ ८८ ॥
नाकाशं कुत्रचिद्याति नयनात्तु घटस्य च ।
चलाचलत्वमेवं हि विभोश्चैवानुमीयते ॥ ८९ ॥
बहुष्वम्बुजपत्रेषु वेधं कुर्वन्क्रमात्क्रमात् ।
कालवच्चातिसूक्ष्मत्वान्न सदाऽप्युपलभ्यते ॥ ९० ॥
अज्ञानाच्चातिदूरस्थं ज्ञानात्सम्भाव्यते हृदि ।
यदा तदा समीपस्थं स्वसंवेद्यश्चिदात्मकः ॥ ९१ ॥
आकाशस्य (शः स ?) च यो वायुस्तद्वयोरप्यभेदतः (दिता ?)
तथा तस्य(स्या ?) विभक्त्यैक्यं भूतानां हि परस्य च ॥ ९२ ॥
चेतनाचेतनास्सर्वे भूताः स्थावरजङ्गमाः ।
पूरिताः परमेशेन रसेनौषधयो यथा ॥ ९३ ॥
एकेनाभिन्नरूपेण भूतभृत्त्वेन हेतुना ।
यथैव सूर्याधीने तु प्रकाशतमसी द्विज ॥ ९४ ॥
तद्वत्सृष्टिं ससंहारां स्वतन्त्रः प्रकरोति च ।
प्रकाशो ज्योतिषां तच्च श्रोत्रादीनां यथा मनः ॥ ९५ ॥
शब्दादिके न संदृष्टे [1]तथाऽपि श्रुणुतेऽन्यथा ।
तमसोऽन्यो यथाऽलोकश्चाज्ञानात्तत्परस्तथा ॥ ९६ ॥
ज्ञानं तदेव ज्ञेयं च वह्नेर्ज्वाला यथैव हि ।
वर्णैर्विरहितं सर्वैर्नीरूपत्वात्सितादिकैः ॥ ९७ ॥
मधुरादिरसैस्तद्वत्कल्पनारहितं यतः ।
मयूरकण्ठवत्सर्वैर्वर्णैस्तदुपचर्यते ॥ ९८ ॥
अनुभावाद्रसानां च तथा सर्वरसात्मकः ।
सर्ववर्णरसैर्हीनो युक्तश्चातस्स्मृतोऽच्युतः ॥ ९९ ॥
सर्वज्ञस्सर्ववेत्तृत्वाद्दशैस्सर्वत्र दर्शनात् ।
साम्यात्सर्वेश्वरश्चैव यतस्सर्वज्ञतादिभिः ॥ १०० ॥

---

1 ततोपि C. L.

युक्तश्चान्तस्सर्वशक्तिः षाड्गुण्यमहिमान्वितः ।
स्वाधीनश्च स्वतन्त्रत्वात्पुराणत्वादनादि तत् ॥ १०१ ॥
न ह्यस्यान्तोस्त्यतोऽनन्तस्तृप्तत्वाद्दुःखवर्जितः ।
अमूर्त एव सर्वेशो ह्यभ्यासादुपलभ्यते ॥ १०२ ॥
यथा काष्ठान्तराद्वह्निर्घृतं क्षीरान्तराद्यथा ।
स्वानुभावाद्विना नैव वक्तुं संयुज्यते यथा ॥ १०३ ॥
माधुर्यमिक्षुसंस्थं च अमूर्तमुपलभ्यते ।
एवं स्वदेहगं देवं परमात्मानमव्ययम् ॥ १०४ ॥
हेयोपादेयरहितं सुसितानन्दविग्रहम् ।
प्रमाणैरपरिच्छेद्यं यतस्संविन्मयं महत् ॥ १०५ ॥
विभाति हृदयाकाशे येषां मायाविवर्जितम् ।
एष नारायणो देवस्सर्वोपाधिविवर्जितः ॥ १०६ ॥
स्वात्मसंवेदनत्वाद्यो विना लक्ष्यः परः प्रभुः ।
तमाश्रयस्वानिर्देश्यं ज्ञानेन परमेण च ॥ १०७ ॥
यच्चोपमानै रहितं व्यवहारैर्धियोऽक्षगैः ।
कारणं तदनौपम्यं ये विदन्त्यभयास्तु ते ॥ १०८ ॥
भावातीतं परं ब्रह्म स्फटिकामलसन्निभम् ।
मोक्षं यान्ति च ते मुक्ताः स्थितिस्तेषां परे पदे ॥ १०९ ॥
नानाभेदेन भेदानां निवसत्येक एव हि ।
न तस्य विद्यते मानं न च रूपं महात्मनः ॥ ११० ॥
तेजोवाय्विन्दुभावेन, पद्मसूत्रायुतायुतात् ।
कोट्यंशेन तु मानेन सुसूक्ष्मेषु स्थितोऽणुषु ॥ १११ ॥
किञ्चिच्च तेभ्यः स्थूलेषु [1]स्थूलज्योतिः पुरोदितात् ।
प्रमाणात्संस्थितो व्यापी परमात्मा ह्यधोक्षजः ॥ ११२ ॥
वाय्वात्मना स भूतानां स्थितः कुटिलभाविनाम् ।
सर्गो रूपेण धातूनां पार्थिवानामशेषतः ॥ ११३ ॥
स्थितःषड्रसरूपेण सर्वौषधिषु सर्वगः ।
अनेकाभिश्च संज्ञाभिस्तमव्ययमुपासते ॥ ११४ ॥
ईश्वरत्वेन विप्रेन्द्र पुरुषत्वेन चैव हि ।
शिवसूर्यात्मकत्वेन सोमत्वेन तथैव च ॥ ११५ ॥

1 स्थूलत्वेन C. L.  1 स्थूलवच्च A.

अग्नीषोमात्मकत्वेन शब्दत्वेनापि वै पुनः ।
ज्योतिर्ज्ञानात्मकत्वेन कालत्वेन च नारद ॥ ११६ ॥
जीवक्षेत्रात्मकत्वेन[1] भूतात्मत्वेन वै तथा ।
एवमेकः परो देवो नानाशक्त्यात्मरूपधृत् ॥ ११७ ॥
नारायणः परं ब्रह्म निष्ठा सन्ब्रह्मवेदिनाम् ।

[ सनिदर्शनमुपासकानां ब्रह्मसम्पत्तिनिरूपणम् ]

यद्वन्महापुरस्यान्तर्यायिनः प्रविशन्ति च ॥ ११८ ॥
सर्वदिग्बहुनिर्माण(?)स्तद्वद्विष्णोरुपासकाः ।
ध्येयेष्वीश्वरभूतेषु ध्यायिनस्तु सदैव हि ॥ ११९ ॥
विशन्ति क्षीणमोहाश्च यथा क्षीणामृता द्विज ।
कला या ऐन्दवास्सूर्ये तद्वद्विष्णौ च योगिनः ॥ १२० ॥
मेघाद्धारागणेनैव पृथगम्बुगतं क्षितौ ।
प्राप्नोत्यैक्यं तथा सर्वे भगवत्यपि योगिनः ॥ १२१ ॥
यथाऽनेकेन्धनादीनि संप्रविष्टानि पावके ।
अलक्ष्याणि च दग्धानि तद्वद्ब्रह्मण्युपासकाः ॥ १२२ ॥
सरित्सङ्घाद्यथा तोयं संप्रविष्टं महोदधौ ।
अलक्ष्यश्चोदके भेदः परस्मिन् योगिनां तथा ॥ १२३ ॥
उपासते यमात्मज्ञा यतस्सूर्यो विराजते ।
तमाश्रय मुने शश्वद्यस्य कोट्यंशजा वयम् ॥ १२४ ॥
तथा सहस्रमूर्धा यः सहस्राक्षस्सहस्रपात् ।
सहस्रबाहुभिः पूर्णस्सहस्रात्मधरः प्रभुः ॥ १२५ ॥
सहस्रदीप्तिभिः स्फीतः श्रीनिवासः किरीटवान् ।
श्रीवत्सवक्षा विप्रेन्द्र कौस्तुभाद्यैरलङ्कृतः ॥ १२६ ॥
चन्द्रार्कौ नयनोद्देशे जिह्वासङ्गे(स्थाने?)सरस्वती ।
यस्योच्छ्वासश्च पवनस्तस्मादूर्ध्वस्तु कावधौ (?) ॥ १२७ ॥
श्रोत्रोद्देशे दिशो यस्य विदिशो यस्य बाहवः ।
पातालादौ तलं यस्य विज्ञेयं पादसन्ततौ ॥ १२८ ॥
प्रभा यस्य च कालाग्निर्जीमूताः[2] केशसन्ततिः ।
रोमाणि यस्य विबुधा ऋषयो रोमकूपगाः ॥ १२९ ॥

1 क्षेत्रज्ञकत्वेन C. L.  2 कच.

मुखेऽग्निरापस्स्वेदो वै ग्रहा ऋक्षादयो मलम् ।
मलमस्योपचारत्वान्नत्वेवं परमार्थतः ॥ १३० ॥
इदमुक्तं मया ब्रह्मन् ब्रह्मतत्त्वं यथार्थतः ।
यज्ज्ञात्वा न पुनर्भूयो भवमेष्यासि सङ्कुलम् ॥ १३१ ॥
खवत्सर्वगतं चैव यद्यप्यस्मिंश्चराचरे ।
स्थितं ज्ञानं विना विप्र तथाऽपि हि सुदुर्लभः ॥ १३२ ॥
इति श्री पाञ्चरात्रे जयाख्यसंहितायां शुद्धसर्गब्रह्मतत्त्वाख्यानं नाम चतुर्थः पटलः ।

---

अथ ब्रह्मज्ञानोत्पत्त्याख्यानं नाम पञ्चमः पटलः

नारदः—

ब्रह्माभिन्नं विभो ज्ञानं श्रोतुमिच्छामि तत्त्वतः ।
येन सम्प्राप्यते ज्ञेयमन्तःकरणसंस्थितम् ॥ १ ॥

[ ज्ञानस्य योगाभ्यासैकलभ्यत्वम् ]

श्रीभगवान्—

सर्वोपाधिविनिर्मुक्तं ज्ञानमेकान्तनिर्मलम् ।
उत्पद्यते[1] हि युक्तस्य योगाभ्यासात्क्रमेण तत् ॥ २ ॥
तेन तत्प्राप्यते विप्र अन्यथा दुर्लभं भवेत् ।

नारदः—

कथमेवंविधं ज्ञानमुत्पद्येत जगत्प्रभो ॥ ३ ॥
यतस्स्याज्ज्ञेयसमता एतद्विस्तरतो वद ।

[ भगवच्छक्तिसामर्थ्याद्गुणसाम्यापत्त्या स्वात्मस्वरूपजिज्ञासोत्पत्तिः ]

श्रीभगवान्—

संसारपादपस्थानां फलानां चैव नारद ॥ ४ ॥
पक्वकर्मरसानां च भ्रान्तानां भवसागरे ।
भगवच्छक्तिसामर्थ्याद्गुणसाम्यं भवेत्क्षणात् ॥ ५ ॥
तत्साम्यात्कर्मसमता जायते समनन्तरम् ।
तत्समत्वाद्विचारस्तु प्रवर्तेतात्मलाभदः ॥ ६ ॥
कोऽहं किमात्मकश्चैव किमिदं दुःखपञ्जरम् ।
यत्राहमसमाश्वस्तस्संस्थितस्सर्वदैव हि ॥ ७ ॥

---

1 तेऽभि A

इति मत्त्वा ततो याति निष्पन्नस्य गुरोर्गृहम् ।

[ विविदिषयोपसन्नस्य शिष्यस्याधिकारानुगुणमुपाये नियोज्यत्वम् ]

ज्ञात्वा तस्यातुरत्वं च सर्वज्ञो गुरुमूर्तिगः ॥ ८ ॥
भाति (व?) व्यापृतिकं बुध्वा तं तथा विनियोजयेत् ।
सोपलब्धे तु निर्बीजे स्वसामर्थ्यात्परे पदे ॥ ९ ॥
निर्वाणे तु निरातङ्के सानन्दे चिन्मये तु वा ।
मान्त्रेऽधिक्रियमे(?) वाऽपि भोगमोक्षप्रदक्षमे ॥ १० ॥

[ स्वाधिकारानुगुणं मन्त्राराधने प्रवृत्तस्य ज्ञानोदयप्रकारः ]

मन्त्राराधनसक्तस्तु तत्सिद्धीनामलोलुपः ।
भक्तस्तद्ध्याननिष्ठश्च तत्क्रियापरमो महान् ॥ ११ ॥
तदाद्यभिमुखाकांक्षी ब्रह्मचर्यव्रते स्थितः ।
भवं भावयते सम्यक् दुःखशोकप्रदं महत् ॥ १२ ॥
अनित्यमध्रुवं कष्टं जरामरणसङ्कुलम् ।
द्वन्द्वयोगभयाक्रान्तमपर्याप्तमनश्वरम् ॥ १३ ॥
सदैतच्चिन्तनाच्छश्वत्तथा मन्त्राद्यनुग्रहात् ।
नियमाच्चापि शारीरात्परं वैराग्यमावहेत् ॥ १४ ॥
वैराग्याच्च ततो विप्र विषयैः कलुषीकृतम् ।
शरत्काले जलं यद्वच्चित्तमेति प्रसन्नताम् ॥ १५ ॥
प्रसन्नस्थिरतां याति निस्तरङ्ग इवोदधिः ।
निवाताचलदीपाभमचलं बोधसम्मुखम् ॥ १६ ॥
यत्तच्चित्तमिवा(मथा)पन्नः पुमांश्चैतन्यलक्षणः ।
संबोधं च तदाप्नोति तज्ज्ञानं परमं स्मृतम् ॥ १७ ॥
सैव चिद्धृदयाकाशे ह्युदेत्यादित्यवत्क्रमात् ।
तेनाधिगम्यते ज्ञेयं यद्वत्सूर्योदयाज्जगत् ॥ १८ ॥
सम्बोधो ज्ञेयनिष्ठा सा तदाऽऽयाति शनैश्शनैः ।
तदा समरसत्वं हि सह तेनैव तस्य हि ॥ १९ ॥
ज्ञेयज्ञप्तिकरं ज्ञानं क्रमोपेतं च नारद ।
निर्वाणदमसङ्कीर्णमिदं ते संप्रकाशितम् ॥ २० ॥
युक्तितस्तदभिन्नं च भेदवत्प्रतिभाति यत् ।
तथाऽपीदं स्वभावेन विद्धि नातः परं तु वै ॥ २१ ॥

विद्यते ब्रह्मशार्दूल किं वा तत्र प्रवर्तते ।
यथेदं ते मया विप्र स्वालोकं प्रकटीकृतम् ॥ २२ ॥
अनुभूतं न भूयस्त्वं मया वक्तुं हि शक्ष्यसे[1] ।

[ ब्रह्मणो दुरवबोधत्वम् ]

अवाच्ये वर्तते कुत्र वाग् वै संवेदनं विना ॥ २३ ॥
षण्णां यद्वद्रसानां च स्वादुत्वं नानुभूयते ।
प्राकृतैः करणैस्तद्वन्नाभिव्यक्तिं[2] बहिर्व्रजेत् ॥ २४ ॥
केवलं ह्युपमानेन तत्प्रत्यक्षं प्रकाश्यते ।
प्रवर्तनार्थं मन्दानां नामन्दानां तु वै पुनः ॥ २५ ॥
योगी समरसत्वेन वेदय त्वं विचारतः ।
[3]तस्मात्त्वमेव विप्रेन्द्र अनुभूतं स्थिरीकुरु ॥ २६ ॥
लयमेष्यसि येनात्र [4]निजानन्दे ह्यनूपमे ।
भूतानन्दस्वरूपेण त्यक्त्वा सम्यक्परिग्रहम् ॥ २७ ॥
निवेदितं मया यत्ते तत्तद्वाच्यं न जातु वै ।
त्वया यदनुभूतं च तदानीं मयि मन्यसे ॥ २८ ॥
सर्वोपमानरहितं वागतीतं स्ववेदनम् ।
अस्तीति परमं वस्तु निरालम्बमतीन्द्रियम् ॥ २९ ॥
आत्मन्यानन्दसंस्थस्य व्यज्यते करणैर्विना ।
करणाः प्राकृतास्सर्वे चित्तजाश्च विशेषतः ॥ ३० ॥

[ मन्त्रसमाध्योर्मन्त्रस्य सुकरोपायत्वम् ]

उपायमत्र मन्त्रौघास्समन्त्रास्ते च सिद्धिदाः ।
तस्मान्मुद्रादिकरणा भावजाश्च समाधयः ॥ ३१ ॥
क्रियोपेतास्तथा मन्त्राः सर्वे सद्वस्तु[5]साधकाः ।
विघ्नायुतसहस्रं तु परोत्साहसमन्वितम् ॥ ३२ ॥
प्रहरन्त्यनिशं तच्च सर्व(स्या)भिमुखस्य च ।
मन्त्रपूर्वं हि यत्किञ्चित्स्थूलं ब्रह्मव्यपेक्षया ॥ ३३ ॥
विघ्नजालस्य सर्वस्य वीर्यध्वंसकरं स्मृतम् ।
यथाग्नेर्दाहसामर्थ्यमुदकेन निपात्यते ॥ ३४ ॥

1 क्ष्यते C. L. 2 क्तं C. L. 3 समत्वमेतत् A. 4 निरा A 5 वाचका. C. L

मायारूपस्तु विघ्नौघो मन्त्राद्यैरुपहन्यते ।
निकटस्था यथा राज्ञस्त्वन्यषां साधयन्ति च ॥ ३५ ॥
सिद्धिं राजोपगां शीघ्रमेवं मन्त्रादयः परम् ।
ज्ञात्वैवं सर्वदा विप्र य आस्ते मत्परायणः ॥ ४६ ॥
अभीप्सितेन मार्गेण निष्पद्येताचिरात्तु सः ।

इति श्रीपाञ्चरात्रे जयाख्यसंहितायां ब्रह्मज्ञानोत्पत्त्याख्यानं नाम
पञ्चमः पटलः ॥

---

अथ मुख्यमन्त्रोद्धारो नाम षष्ठः पटलः ॥

नारदः—

त्वत्प्रसादेन भगवन्संविल्लब्धा मया परा ।
मनसश्चञ्चलत्वाच्च नहि मे स्थिरतां व्रजेत् ॥ १ ॥
अतः पूर्वोदितान्सर्वानुपायान्कथयस्व मे ।
अशेषांश्च क्रमेणैव भोगमोक्षफलप्रदान् ॥ २ ॥

[ मन्त्रनिरूपणारम्भः ]

श्रीभगवान्—

साधु नारद पृष्टोऽहं सारभूतमिदं त्वया ।
मन्त्रपूर्वं हि वै सर्वं यत्त्वया परिचोदितम् ॥ ३ ॥
तस्मान्मन्त्रं प्रवक्ष्यामि भुक्तिमुक्तिप्रदं शुभम् ।
स्थूलसूक्ष्मस्वरूपेण नानासिद्धिफलप्रदम् ॥ ४ ॥
शक्त्यङ्गावरणोपेतमनेकाद्भुतदर्शनम् ।

[ मातृकापीठपरिकल्पनाप्रकारः ]

भूमिभागे समे शुद्धे मृद्गोमयसुलेपिते ॥ ५ ॥
पञ्चगव्येन संसिक्ते चन्दनाद्युपलेपिते ।
निवाते च सुसंछन्ने[1] धूपैरप्यधिवासिते ॥ ६ ॥
मृदुकल्हारकुसुमैः केवलैः कुसुमैः शुभैः ।
प्रणवादिनमोन्तेन स्वनाम्ना पूज्य वै पुरा ॥ ७ ॥
परिजप्याथ बहुशो मृदं भूमौ प्रसार्य च ।
चतुरश्रं सुवृत्तं च द्विहस्तं हस्तमेव वा ॥ ८ ॥

---

1 सुसंप A.

सुसमं मातृकापीठं कृत्वा प्रस्तार्य तामपि ।

[ अक्षरेषु विभाव्यो भगवतः स्थितिभेदः ]

एकैव भिन्नवर्गा च वर्गान्तेऽप्यसमाक्षराः ॥ ९ ॥
षोडशाक्षर आद्यस्तु अकाराद्यो द्विजोत्तम ।
विसर्गान्तस्थितस्तस्मिन्नग्नीषोमात्मकः प्रभुः ॥ १० ॥
पञ्चार्णानां तु पञ्चानां वर्गाणां परमेश्वरः ।
[1]सुस्थितः कादिमान्तानां तत्त्वात्मत्वेन सर्वदा ॥ ११ ॥
जाग्रदादिक्रमेणैव स्थितोऽवस्थात्मनात्र वै ।
यादिवान्ते चतुर्वर्ण वर्गे विभेन्द्र [2]सत्तमे ॥ १२ ॥
तुर्यातीतात्मरूपेण शादिक्षान्तेषु संस्थितः ।
आलोकस्तीक्ष्णता व्याप्तिर्ग्रहणं क्षेपणेरणे ॥ १३ ॥
पाकः प्राप्तिरिति ह्यष्टौ सूर्यभागे व्यवस्थिताः ।
अकारादिषु ह्रस्वेषु वर्णेष्वेतेष्वनुक्रमात् ॥ १४ ॥
द्रवता शैत्यभावाश्च तृप्तिःक्रान्तिः प्रसन्नता ।
रसताऽऽह्लाद आनन्दो ह्यष्टौ चान्द्रास्त्विमा मताः ॥ १५ ॥
आकारादिषु दीर्घेषु संस्थिता मातृकात्मना ।
अविनाभावरूपेण अन्योन्येन सदैव हि ॥ १६ ॥
अष्टानामपि चाष्टौ तु संस्थिता बहिरन्तरे ।
क्ष्मादितत्त्वसमूहस्तु पुरुषान्तः क्रमेण तु ॥ १७ ॥
जाग्रत्स्वप्नसुषुप्तं च तुर्यमूर्ध्वेऽत्र वर्तते ।
संस्थितः परमालोकशब्दो नित्योदितः परः ॥ १८ ॥
परानन्दश्च समता वेद्यवेदकवर्जितः ।
स्वरूपमेतत्कथितं तुर्यातीतात्मनो विभोः ॥ १९ ॥

[ एवं भगवतः स्थिति विभाव्योल्लिख्यमानानामक्षराण भगवन्मातृकादेहरूपता ]

इति वर्णप्रभावं च व्यापकं चानुभूतिगम् ।
बुध्वा च लिपिरूपेण संलिखेद्येन केनचित् ॥ २० ॥
संवेद्योऽपि जनेनैव न लिपिर्विप्र मातृकाः ।
परमः पुरुषो दिव्यो योऽनुभूतः पुरा त्वया ॥ २१ ॥
तस्यायं मातृकादेहः चतुर्धा संव्यवस्थितः ।

---

1 सं. Y 2 सप्त. Y

[ मातृकायाः स्वविग्रहे न्यासक्रमः ]

सूत्रेण मणयो यद्वत्प्रोतास्त्वेकेन नारद ॥ २२ ॥
तद्वद्वर्णा मया तन्तुस्वरूपेणाव्ययात्मना ।
इति चेतसि वै कृत्वा मन्त्रानुद्धरते च यः[1] ॥ २३ ॥
दृष्टादृष्टफलप्राप्तिस्तस्य मन्त्रात्प्रजायते ।
एवं स्वविग्रहे न्यस्य मातृकां मन्त्रमात्रकाम् ॥ २४ ॥
वस्तुपूर्णेषु तत्त्वेषु स्वेषु स्वेषूदितेषु च ।
स्नात्वा शुक्लाम्बरधरस्स्रक्चन्दनविभूषितः ॥२५ ॥

[ मन्त्रमातृकोद्धारक्रमः ]

तामेव प्रस्तरेन्मन्त्री अष्टवर्गां पृथक्स्थिताम् ।
अष्टारे तु महाचक्रे मध्यतः सुविभूषिते ॥ २६ ॥
प्रागरादि क्षकारान्तमवर्गादिक्रमेण तु ।
मध्यतः प्रणवं लिख्य वर्णचक्रं प्रभुं परम् ॥ २७ ॥
एकैकं तु स्वसंज्ञाभिश्चक्रारेष्वक्षरं लिखेत् ।
यावन्निष्पद्यते वर्गस्स्थितः स्वैस्स्वैररान्तरे ॥ २८ ॥
स्वरव्यञ्जनसंयुक्तां मातृकामग्रतो यजेत् ।

[ मातृकापूजनप्रकारः ]

पाद्यार्घ्यपुष्पधूपेन दीपेन च विलेपनैः ॥ २९ ॥
फलमूलादिनैवेद्यैरोंनमोमन्त्रमातृके ।
संपूज्यश्च ततो भक्त्या मातृकाविग्रहः पुमान् ॥ ३० ॥
प्रागुक्तेन स्वनाम्ना वै प्रणत्या प्रणवेन च ।
स्वाभिधाभिः क्रमेणातो ह्येकैकं चाक्षरं यजेत् ॥ ३१ ॥
मध्याह्नभास्कराकारं प्रस्फुरन्तं विचिन्त्य च ।

[ भगवद्रूपाणामक्षराणामकारादिक्रमेणाभिधाभेदः ]

अकारश्चाप्रमेयश्च प्रथमो ( भवो ? ) व्यापकः स्मृतः ॥ ३२ ॥
आदिदेवस्तथाऽऽकार आनन्दो गोपनः स्मृतः ।
रामसंज्ञ इकारश्च इष्ट इद्धः प्रकीर्तितः ॥ ३३ ॥
ईकारः पञ्च विन्दुर्वै विष्णोर्माया[2] द्विजाधिप ।
उकारो भुवनाख्यश्च उद्दाम उदयस्तथा ॥ ३४ ॥

---

1 यत् CL. 2 विष्णु CL.

ऊकार ऊर्जो लोकेशः प्रज्ञाधारस्तथैव च ।
सत्यश्च ऋतधामा च ऋकारस्स तु चाङ्कुशः ॥ ३५ ॥
ॠकारं विष्टरं विद्धि ज्वाला मैव [1]प्रसारणम् ।
लिङ्गात्मा भगवान्प्रोक्तो ऌकारस्तारकस्स्मृतः ॥ ३६ ॥
ॡकारो दीर्घघोणश्च देवदत्तो विराट् स तु ।
त्र्यश्र एकारसंज्ञस्तु जगद्योनिरविग्रहः ॥ ३७ ॥
ऐश्वर्यं योगधाता च ऐं समैरावणस्स्मृतः ।
ओकार ओतदेहश्च ओदनस्स च विक्रमी ॥ ३८ ॥
और्वोऽथ भूधराख्यश्च औस्स्मृतो ह्यौषधात्मकः ।
त्रैलोक्यैश्वर्यदो व्यापी व्योमेशोऽङ्कार एव च ॥ ३९ ॥
विसर्गः सृष्टिकृत्ख्यातो ह्यकारः परमेश्वरः ।
कमलश्च कराळश्च ककारः प्रकृतिः परा ॥ ४० ॥
खकारः खर्वदेहश्च वेदात्मा विश्वभावनः ।
गदध्वंसी गकारश्च गोविन्दस्स गदाधरः ॥ ४१ ॥
घकारश्चैव घर्मांशुस्तेजस्वी दीप्तिमान्स्मृतः ।
ङकार एकदंष्ट्रश्च भूतात्मा विश्वभावकः ॥ ४२ ॥
चकारश्चंचलश्चक्री चन्द्रांशुस्स च कथ्यते ।
छकारः छलविध्वंसी छन्दश्छन्दःपतिः स्मृतः ॥ ४३ ॥
अजितो जन्महन्ता च जकारस्स च शाश्वतः ।
झषो झकारः कथितः सामात्मा सामपाठकः ॥ ४४ ॥
उत्तमस्त्वीश्वराख्यश्च ञकारस्तत्त्वधारकः ।
चान्द्री टकार आह्लादो विश्वाप्यायकरः स्मृतः ॥ ४५ ॥
ठकारः कौस्तुभः प्रोक्तो नेमिर्धाराधरस्तथा ।
डकारो दण्डधारश्च मौसलोऽखण्डविक्रमः ॥ ४६ ॥
ढकारो विश्वरूपश्च वृषकर्मा प्रतर्दनः ।
णकारोऽभयदश्शास्ता वैकुण्ठः परिकीर्तितः ॥ ४७ ॥
ताललक्ष्मा तकारश्च वैराजस्स्रग्धरस्स्मृतः ।
धन्वी भुवनपालश्च थकारस्सर्वरोधकः ॥ ४८ ॥

---

1 प्रभा A.

दत्तावकाशो दमनो दकारश्शान्तिदः स्मृतः ।
धकारः शार्ङ्ग[1]धृद्धर्ता माधवश्च प्रकीर्तितः ॥ ४९ ॥
नरो नारायणः पन्था नकारस्समुदाहृतः ।
पकारः पद्मनाभश्च पवित्रः पश्चिमाननः ॥ ५० ॥
फकारः फुल्लनयनो लाङ्गली श्वेतसंज्ञिकः ।
बकारो वामनो ह्रस्वः पूर्णाङ्गस्स च गीयते ॥ ५१ ॥
भल्लायुधो भकारश्च ज्ञेयस्सिद्धिप्रदो ध्रुवः ।
मकारो मर्दनः कालः प्रधानः परिपठ्यते ॥ ५२ ॥
चतुर्गतिर्यकारस्तु स सूक्ष्मश्शङ्ख उच्यते ।
अशेषभुवनाधारो रोऽनलः कालपावकः ॥ ५३ ॥
लकारो विबुधाख्यस्तु धरेशः पुरुषेश्वरः ।
वराहश्चामृताधारो वकारो वरुणस्स्मृतः ॥ ५४ ॥
शकारः शङ्करः शान्तः पुण्डरीकः प्रकीर्तितः ।
नृसिंहश्चाग्निरूपश्च षकारो भास्करस्तथा ॥ ५५ ॥
सकारश्चामृतं तृप्तिस्सोमस्तु परिपठ्यते ।
सूर्यो हकारः प्राणस्तु परमात्मा प्रकीर्तितः ॥ ५६ ॥
अनन्तेशः क्षकारस्तु वर्गान्तो गरुडस्स्मृतः ।
अशेषसंज्ञा वर्णानामित्येताः परिकीर्तिताः ॥ ५७ ॥
अनुलोमविलोमेन वर्णाद्वर्णस्य वै पुनः ।
संख्या संज्ञा च या सम्यक्सामान्या सा महामते ॥ ५८ ॥

[ भगवदंशभूतानामक्षराणामङ्गाङ्गिभावेन मिथःसङ्गतानां मन्त्रोत्पत्तिहेतुता ]

एते भगवदंशाश्च शब्दा भास्वरविग्रहाः ।
कारणं सर्वमन्त्राणां भगवच्छक्तिबृंहिताः ॥ ५९ ॥
परस्पराङ्गभावेन मन्त्रोत्पत्तिं[2] व्रजन्ति च ।
चराचरेऽस्मिंस्तन्नास्ति यदमीभिर्न भावितम् ॥ ६० ॥
कृत्वैवं भावनां व्याप्तिं वर्णानां [3]पूजनक्रिया ।

[ मन्त्रोद्धारक्रमः ]

स्वहृच्चक्रेऽथ भूमिष्ठे ततो मन्त्रान्समुद्धरेत् ॥ ६१ ॥
वर्गान्तमाद्यं बीजं तु सप्तवर्गाद्विभेदितम् ।

1 द्धामा A 2 त्तौ. A 3 पूजनं त्रिधा. Y

पञ्चबिन्दुयुतं मूर्ध्नि व्योमेशेन नियोजितम् ॥ ६२ ॥
इदं बीजवरं दिव्यं सर्वकामफलप्रदम् ।
अनन्तेशात्तृतीयं तु स्वरवर्गान्तयोजितम् ॥ ६३ ॥
द्वितीयं तस्य तद्बीजं जरामृत्युभयापहम् ।
स्वराद्यं पञ्चमं चैव पञ्चविंशेन योजितम् ॥ ६४ ॥
तयोराद्यं लिखेद्बीजं भोगमोक्षप्रदं शुभम् ।
नमस्कारपदोपेतं सर्वशक्त्याश्रयं प्रभुम् ॥ ६५ ॥
एतद्वर्णत्रयं देहः स्थूलभासो मम द्विज ।
भूतेदेह[1]व्यपेक्षायां किञ्चित्सूक्ष्मश्च नारद ॥ ६६ ॥
परमूर्त्यन्तरेणैव स्थूल एव विभाति च ।
अत्युत्कृष्टगुणैर्युक्तो ह्यद्वयो यस्य कस्यचित् ॥ ६७ ॥
अपि चेत्केवलस्सर्वामर्थसिद्धिं प्रयच्छति ।
किं पुनर्मूर्त्तिमन्त्रेण द्वादशार्णेन संयुतः ॥ ६८ ॥
पदं नारायणायेति कुर्याद्विश्वात्मने ततः ।
ह्रीं स्वाहाकारसंयुक्तो मूर्त्तिमन्त्रो ह्ययं स्मृतः ॥ ६९ ॥

[ मन्त्रमहिमानुवर्णनम् ]

सङ्कल्पाकल्परूपस्तु त्र्यर्णस्याद्योदितस्य च ।
अणिमादिगुणाधारः पातालोत्थानसिद्धिदः ॥ ७० ॥
मोक्षदो मोक्षकामस्य भोगकामस्य भोगदः ।
राज्यदो राज्यकामस्य धनकामस्य भूतिदः ॥ ७१ ॥
यान्यान्प्रार्थयते कामान्सर्वान्वै साधकाय च ।
द(दा)त्युच्चारमात्रेण सम्यक्तद्भावितात्मने ॥ ७२ ॥

[ देवताध्यानम् ]

अनादिनिधनं देवं जगत्स्रष्टारमीश्वरम् ।
ध्यायेच्चतुर्भुजं विप्र शङ्खचक्रगदाधरम् ॥ ७३ ॥
चतुर्वक्त्रं सुनयनं सुकान्तं पद्मपाणिनम् ।
वैकुण्ठं नरसिंहास्यं वाराहं कपिलाननम् ॥ ७४ ॥
शुक्लं खगेश्वरारूढं सर्वाभरणभूषितम् ।
सर्वलक्षणसंपन्नं माल्याम्बरधरं विभुम् ॥ ७५ ॥

---

1 भेद A

किरीटकौस्तुभधरं कर्पूरालिप्तविग्रहम् ।
सूर्यायुतसहस्राभं सर्वदेवनमस्कृतम् ॥ ७६ ॥

[ लक्ष्म्यादीना भगवद्रूपे नित्यसान्निध्यम् ]

लक्ष्मीः कीर्त्तिर्जया माया देव्यस्तस्याश्रितास्सदा ।
स्वशक्तिनिचयोपेता निराकारास्तु निष्कलाः ॥ ७७ ॥
सूर्यस्य रश्मयो यद्वदूर्मयश्चाम्बुधेरिव ।
सर्वैश्वर्यप्रभावेन कमला श्रीपतेस्तथा ॥ ७८ ॥
नानाविशेषलक्ष्मीभिः कोटिसङ्ख्याभिरावृता ।
कीर्त्तिस्तथाविधर्देव ( नैव ? ) विधिना विग्रहे विभोः ॥ ७९ ॥
तन्नास्ति यन्न हि तया व्याप्तं सामान्यदेहया ।
यस्य या च यदा कीर्तिस्स्वसामर्थ्यात्प्रजायते ॥ ८० ॥
सा सा विप्र स्मृता सर्वा विशेषप्रतिपत्तिभिः ।
जया जयेश्वरस्यैवं व्याप्तिभावेन संस्थिता ॥ ८१ ॥
या काचिद्विद्यते माया जगत्यस्मिन् सुरादिषु ।
भगवन्माययोद्भूतां तां विद्धि परमां तु वै ॥ ८२ ॥
तदीयं निष्कलं रूपं मुक्त्वा वै पारमार्थिकम् ।
कोऽस्मिंस्तत्त्वोदधौ चास्ति चतुर्धा मुनिसत्तम ॥ ८३ ॥
भगवच्छक्तिभिस्सम्यगाभिर्योगविभागतः ।
स्वालोकज्ञानसामर्थ्यात्साकारत्वमुपागताः ॥ ८४ ॥

[ लक्ष्म्यादीना ध्यानप्रकारः ]

ध्यातव्यास्साधकेन्द्रेण यस्य स्त्रीश्च(स्त्रियश्चास्य ?)स्वसिद्धये ।
एकवक्त्रा द्विनेत्राश्च द्विभुजाश्चारुकुण्डलाः ॥ ८५ ॥
पद्मगर्भनिभाः कान्ता मेखलादाममण्डिताः ।
श्वेतमाल्याम्बरधरा हारकेयूरभूषिताः ॥ ८६ ॥
सर्वलक्षणसंपन्नाः पीनोन्नतपयोधराः ।
प्रबुद्धोत्पलविस्तीर्णलोचनाश्च स्मिताननाः ॥ ८७ ॥
चलद्विरेफपटलतुल्यैर्युक्तास्तथाऽलकैः ।
ललाटतिलकैश्चित्रैर्विविधैः परिमण्डिताः ॥ ८८ ॥
आरक्ताधररक्ताश्च वंशमुक्ताफलद्विजाः ।
अर्धचन्द्रललाटाश्च श्लक्ष्णकुञ्चितमूर्धजाः ॥ ८९ ॥

पाशाङ्कुशधरा देव्य[1]ः सर्वकामार्थसाधकाः ।
पूर्वादिदिग्विभागस्थाः केसरारेषु नारद ॥ ९० ॥
बद्धपद्मासनाश्चैव देवदेवस्य संमुखाः ।

[ लक्ष्म्यादिमन्त्रनिरूपणोपक्रमः ]

मन्त्रांस्तासां प्रवक्ष्यामि पूजार्थं विविधानथ ॥ ९१ ॥
यैस्समाराधिताः शश्वदभीष्टं साधयन्ति च ।
मूलमन्त्राद्द्वितीयं यत्केवलं बीजनायकम् ॥ ९२ ॥
सामान्यं हृदयं ह्येतत्सर्वासां परिकीर्त्तितम् ।
मूर्त्तिमन्त्रचतुष्कं तु क्रमेणासां पृथक्शृणु ॥ ९३ ॥

[ लक्ष्मीमन्त्रः ]

प्रणवं चोद्धरेत्पूर्वं हृद्बीजं तदनन्तरम् ।
द्विरक्षरे पदं लक्ष्म्यै प्राङ्मोन्तं निवेश्य च ॥ ९४ ॥
ततः परमशब्दं तु तदन्ते पुरुषेश्वरम् ।
वर्गान्तमास्वरोपेतं वस्थितायै पदं न्यसेत् ॥ ९५ ॥
भूयस्तद्धृदयं बीजं श्रीं ह्रीं बीजद्वयं ततः ।
स्वाहासमन्वितं विप्र प्रणवाद्यं च मन्त्रराट् ॥ ९६ ॥
मूर्त्तिमन्त्रसमेतस्तु लक्ष्म्याख्यो [2]द्विदशाक्षरः ।

[ कीर्त्तिमन्त्रः ]

हृद्बीजं प्रणवाद्यं तु पदं कीर्त्यै ततो नमः ॥ ९७ ॥
सदोदितानन्दपदं विग्रहायै पदं त्वनु ।
ह्रीं क्लीं स्वाहासमेतस्तु प्राक्संख्यं कीर्तिमन्त्रराट् ॥ ९८ ॥

[ जयामन्त्रः ]

हृद्बीजं प्रणवोपेतं जयायै त्र्यक्षरं नमः ।
स्वराद्यं[3] जितशब्दश्च धामा वर्णद्वयं ततः ॥ ९९ ॥
वस्थितायै पदं कृत्वा तद्धृद्बीजं न्यसेत्पुनः ।
अशेषभुवनाधारावस्थितं च तृतीयकम् ॥ १०० ॥
व्योमेशपञ्चबिन्दुस्स्यात्स्वाहा तदनु नारद ( वै पदम् ) ।
वर्णद्विदशसंख्यश्च जयाख्यो मन्त्र उत्तमः ॥ १०१ ॥

---

1 व्याः CL.  2 द्वा A.  3 स्वा. A

[ मायामन्त्रः]

प्राग्बीजं प्रणवाद्यं च मायायै च ततो नमः ।
मोहातीतपदं चाथ नान्तं तदनु योजयेत् ॥ १०२ ॥
द्वितीयस्वरसंयुक्तं दकारं तदनन्तरम् ।
शृतायै त्र्यक्षरश्शब्दो मायाबीजं ततो भवेत् ॥ १०३ ॥
प्रधानमनलारूढं चतुर्थस्वरभूषितम् ।
त्रैलोक्यैश्वर्यदेनैव युक्तं स्वाहान्तमुद्धरेत् ॥ १०४ ॥
**मायामन्त्रश्च** पूर्वेषां वर्णसंख्यासमस्स्मृतः ।

[ हृदाद्यङ्गमन्त्रनिरूपणम् ]

अङ्गानि देवदेवस्य कथयिष्यामि तत्त्वतः ॥ १०५ ॥
सन्नद्धःसाधको यैस्तु अवध्यस्त्रिदशैरपि ।
साधयेत्सर्वकार्याणि यान्यायुस्सुखदानि च ॥ १०६ ॥
भक्तस्तद्भावितात्मा च यदि मन्त्रक्रियापरः ।

[ हृन्मन्त्रः ]

अनन्तपूर्वं यद्बीजं बिन्दुभूषितमुद्धरेत् ॥ १०७ ॥
नमोऽन्तं प्रणवाद्यं तु हृन्मन्त्रं विद्धि निष्कलम् ।
अस्यैव मूर्त्तिमन्त्रो यस्तं ते वच्मि यथास्थितम् ॥ १०८ ॥
प्रणवो बिन्दुसंभिन्नस्सूर्यस्सोमो विसर्गधृक् ।
शुचिशब्दं ततः कुर्यादग्निरूपमथोद्धरेत् ॥ १०९ ॥
दकारवर्णं तदनु प्रणवेनाप्यलङ्कृतम् ।
हृदयाय नमस्कुर्यात् हृन्मन्त्रो मूर्तिसंयुतः ॥ ११० ॥
सप्तादशाक्षरो विप्र सर्वसिद्धिप्रदायकः ।

[ शिरोमन्त्रः ]

द्वितीयस्वरसंयुक्तं तदेव शिरसि न्यसेत् ॥ १११ ॥
एवमुद्धृत्य च ततस्तस्यादौ प्रणवं न्यसेत् ।
प्रणतिं चावसाने तु मूर्धानं विद्धि निष्कलम् ॥ ११२ ॥
मूर्त्तिमन्त्रमथो वक्ष्ये अस्यैवानुचरस्तु यः ।
प्रोद्धरेत्पद्मनाभाख्यं केवलं तादृशं त्वनु ॥ ११३ ॥
अशेषभुवनाधारं फलं तस्यावसानगम् ।

कालपावकसंस्थं वै तं च फान्तं द्विजोत्तम ॥ ११४ ॥
अथोद्धरेत्प्राणसंज्ञं मदनेनोपरि स्थितम् ।
शिरसे च पदं पश्चात्स्वाहा शब्दस्तदन्तगः ॥ ११५ ॥
त्रयोदशाक्षरं विद्धि शिरोमन्त्रं तु नारद ।

[ शिखामन्त्रः ]

प्रणवं प्रथमं दद्यात्सूर्याख्यं तदनन्तरम् ॥ ११६ ॥
विष्णुनाऽलङ्कृतं मूर्ध्नि त्रैलोक्यैश्वर्यदेन च ।
नमश्चास्यावसाने वै शिखामन्त्रश्च निष्कलः ॥ ११७ ॥
मूर्तिमन्त्रमथास्यैव वच्मि सर्वार्थसिद्धिदम् ।
पद्मनाभश्च( भं च ? )रारूढं[1] दकारं शङ्खमूर्ध्वगम् ॥ ११८ ॥
कुर्याच्चमोतदेहेन प्रोतं यत्नेन नारद ।
केवलस्ताललक्ष्मातो रामोपेतो नरस्ततः ॥ ११९ ॥
शिखायै वौषडन्तश्च शिखामन्त्रो ह्ययं स्मृतः ।
सार्धत्रयोदशार्णश्च नानासिद्धिफलप्रदः ॥ १२० ॥

[ कवचमन्त्रः ]

नतिप्रणवमध्ये तु प्राणं व्योमविभूषितम् ।
पञ्चमस्वरसंयुक्तं कवचार्णं[2] विनिर्दिशेत् ॥ १२१ ॥
[3]कृष्णस्य मूर्तिमन्त्रे तु भुक्तिमुक्त्यर्थसिद्धिदम् ।
प्रोद्धरेच्छङ्कराख्यं तु आनन्देनाभ्यलङ्कृतम् ॥ १२२ ॥
वराहस्थं तमेवाथ वैराजं केवलं ततः ।
केवलं पुण्डरीकं तु केवलं कालपावकम् ॥ १२३ ॥
चतुर्गतिसमारूढं वैकुण्ठं प्रोद्धरेत्ततः ।
कवचाय पदं कुर्याद्धुङ्कारेण विभूषितम् ॥ १२४ ॥
उभयात्मैष उक्तस्तु मन्त्रः पञ्चदशाक्षरः ।

[ नेत्रमन्त्रः ]

नमोन्तः प्रणवाद्यश्च प्राणो व्योमविभूषितः ॥ १२५ ॥
[4]औकारस्वरसंयुक्तो नेत्रमन्त्रस्तु निष्कलः ।
पवित्रमनलारूढं कमलं गोपनाङ्कितम् ॥ १२६ ॥

---

1 ढ. S    2 न्तं A    3 उ. Y    4 आ. A

केवलं शङ्करश्चान्ते रारूढं पश्चिमाननम् ।
अजितश्चामृताधारस्संस्थितं प्रोद्धरेत्ततः ॥ १२७ ॥
धरेशं केवलं दद्यान्नेत्राय त्र्यक्षरं पदम् ।
तदन्ते च वौषट् कुर्यान्नेत्रमन्त्रो ह्ययं स्मृतः ॥ १२८ ॥
त्रिपञ्चवर्णसंख्यस्तु सार्द्धार्णो द्विज सिद्धिदः ।

[ अस्त्रमन्त्रः ]

नमः प्रणवमध्यस्थः परमात्मा ह्यनन्तरम् ॥ १२९ ॥
सविसर्गःस एवास्त्रं[1] मूर्त्तिमन्त्रसमन्वितम् ।
दत्तावकाशसंज्ञं वै मायाभूषितविग्रहम् ॥ १३० ॥
पवित्रं स्रग्धरारूढं तदूर्ध्वे चोदनं न्यसेत् ।
मदनं[2] सत्यसंस्थं च पवित्रे तालक्ष्मगम् ॥ १३१ ॥
भूयस्तं[3] मनलस्थ च केवलं च ध्रुवं ततः ।
तदन्ते चाप्रमेयं तु सोमाख्यं चोद्धरेत्ततः ॥ १३२ ॥
वैराजस्थं द्विजश्रेष्ठ सोऽपि चानलसंस्थितः ।
गोपनेनाङ्कयेत्तं वै पिण्डोऽयं चतुरक्षरः ॥ १३३ ॥
केवलं च ततः सूक्ष्मं फट्कारपदभूषितम् ।
चतुर्दशस्वरं ह्यस्त्रमर्द्धाक्षरमन्वितम् ॥ १३४ ॥

[ पूर्वं चतुर्वक्त्रतयोक्तस्य देवस्य नृसिंह्याद्यास्यत्रयमन्त्राः ]

स्थिता नृसिंह्यपूर्वेषु तान्वक्ष्यामि समासतः ॥ १३५ ॥
सदेहाश्च पृथग्भागे[4] साङ्गास्सपरिवारकाः ।
देवस्य वक्त्रमात्रेण ध्येयाः पूज्याश्च यत्नतः ॥ १३६ ॥
विश्वाप्याययुतं विप्र प्रणवं पूर्वमुद्धरेत् ।
अजितश्चानलस्थं च ओदनेन समन्वितम् ॥ १३७ ॥
चन्द्रिणश्चोर्ध्वतः कृत्वा व्यापनस्तस्य चोपरि ।
प्रोद्धरेज्जनमहन्तारं तदधस्सामपाठकम् ॥ १३८ ॥
कुर्याच्चानलसंस्थं च ऊर्जं वै तदधः पुनः ।
ऊर्ध्वे[5] व्यापी तथा ह्यादौ भूधरश्च भवेत्क्रमात् ॥ १३९ ॥
पिण्डाक्षरमिदं विप्र द्वितीयस्य नमोन्तगम् ।
ज्वलनायुतशब्दं च दीप्तये त्र्यक्षरं पदम् ॥ १४० ॥

1 स्त्र A. 2 दमन A. 3 स्थ. A 4 ग्या CL. 5 ऊर्ध्वस्यापि A.

नृसिंहायेति च पदं स्वाहा तदनु योजयेत् ।
ऊनविंशाक्षरो मन्त्रो मूर्तामूर्तो नृकेसरी ॥ १४१ ॥
पूजितस्संस्मृतो ध्यातस्सञ्जप्तश्च ततो द्विज ।
निहन्यात्सामयान्दोषांस्तथा भूतग्रहानपि ॥ १४२ ॥
प्रोद्धरेत्प्रणवञ्चादौ सूर्य्याख्यं तदनन्तरम् ।
तमेव लोकेशगतं व्योम चान्द्रीं[1] तदूर्ध्वतः ॥ १४३ ॥
रेफबीजमथादाय घर्मांशुं तदधो न्यसेत् ।
तदधो ह्यनलं भूयः मज्ञाधारोपरि स्थितम् ॥ १४४ ॥
औषधात्माऽस्य चोर्ध्वे तु चान्द्री व्यापी क्रमाद्भवेत् ।
अस्य पिण्डद्वयस्यान्ते नमस्कारं नियोजयेत् ॥ १४५ ॥
अनन्तभासाय पदं कपिलाय ततो भवेत् ।
स्वाहासमन्वितं कुर्यान्मन्त्रं सप्तदशाक्षरम् ॥ १४६ ॥
अत्युग्रं कापिलं नाम्ना सर्वद्वन्द्वोपशान्तिदम् ।
प्रायश्चित्तविधौ नित्यं जप्तव्यस्सिद्धिहेतुकः ॥ १४७ ॥
तथाऽपवर्गप्राप्त्यर्थमचिरेण तु नारद ।
प्रागोङ्कारमथादाय गोविन्दाख्यमथोद्धरेत् ॥ १४८ ॥
पुरुषेश्वरमस्याथ ओतदेहं तदूर्ध्वगम् ।
त्र्यैलोक्यैश्वर्यदोपेतं टकारस्तस्य चोपरि ॥ १४९ ॥
अमृताख्यं वराहस्थमूकारं तदधो द्विज ।
ओकारान्तं तदूर्ध्वे तु त्र्यैलोक्यैश्वर्यदं ततः ॥ १५० ॥
विश्वाप्यायसमायुक्तमस्यान्ते विन्यसेन्नमः ।
कृष्णवर्णद्वयं दद्यात्पिङ्गलाय पदं ततः ॥ १५१ ॥
वराहाय पदं स्वाहा मन्त्रस्सप्तदशाक्षरः ।
शान्तिश्रीपुष्टिमारोग्यं कुर्यादाप्यायनं स्मृतम् ॥ १५२ ॥
गोप्तव्यश्चैव जप्तव्यो वाराहो भुक्तिमुक्तिदः ।

[ अथ कौस्तुभादिमन्त्रः ]

कौस्तुभाद्यङ्कुशान्तांश्च मन्त्रान्सर्वान्यथा शृणु ॥ १५३ ॥
येषामनन्तविभवःशश्वदाराधनाद्भवेत् ।

[ कौस्तुभमन्त्रः ]

1 न्द्रं A.

कौस्तुभो व्योमसंभिन्नः परमात्मा ततो द्विज ॥ १५४ ॥
ऊर्ध्वाधोऽनलसंभिन्नं कुर्यात्तदनु नारद ।
अकारेणाङ्कितं तं वै तं तमूर्जेन कारयेत् ॥ १५५ ॥
ततो व्योमान्वितो नेमी नमस्कृतिरनन्तरम् ।
प्रभात्मने पदं दद्यात्कौस्तुभाय पदं ततः ॥ १५६ ॥
स्वाहान्वितस्सप्रणवः कौस्तुभस्य प्रकीर्तितः ।
षोडशार्णो महामन्त्रो नास्ति तद्यत्न साधयेत् ॥ १५७ ॥

[ मालामन्त्रः ]

प्रोद्धरेत्प्रणवान्ते तु धरेशं तदधो न्यसेत् ।
तृप्तिसंज्ञं च तस्याधो वरुणं विनिवेश्य च ॥ १५८ ॥
मायाव्योमान्वितः पिण्डो नमस्कारसमन्वितः ।
स्थलवर्णद्वयं दद्याज्जलोद्भूतपदं ततः ॥ १५९ ॥
भूषिते वनमाले स्वाहा समेतं पदं ततः ।
एकोनविंशवर्णस्तु मालामन्त्र उदाहृतः ॥ १६० ॥
अभीष्टसिद्धिदो विप्र नित्यमाराधकस्य च ।

[ पद्ममन्त्रः ]

प्रणवस्यावसाने तु वामनाख्यं नियोजयेत् ॥ १६१ ॥
सोमाख्यं तदधो योज्य उद्दामोपरि संस्थितः ।
त्र्यैलोक्यैश्वर्यदोपेतः पिण्डो नतिसमन्वितः ॥ १६२ ॥
श्रीनिवासपदं दद्यात्पद्माय तदनन्तरम् ।
स्वाहान्वितस्तु पद्मस्य मन्त्रः स्यात्त्रिदशाक्षरः ॥ १६३ ॥
प्रयच्छत्यतुलां भूतिं भक्तानामक्षयां द्विज ।

[ शङ्खमन्त्रः ]

प्रणवं पूर्वमादाय परमात्मानमुद्धरेत् ॥ १६४ ॥
भेदयेद्भुवनान्तेन त्र्यैलोक्यैश्वर्यदेन तु ।
नमस्कारं क्रमं कुर्यादेतदेवाक्षरं त्रिधा ॥ १६५ ॥
महाशङ्खाय च स्वाहा शङ्खाख्यस्त्रिदशाक्षरः ।
मन्त्रश्शुभतरः प्रोक्तो श्रियं विद्यां प्रयच्छति ॥ १६६ ॥

[ चक्रमन्त्रः ]

शाश्वतः प्रणवान्ते तु रारूढस्सि[1]द्धिकृद्युतः ।
तादृशश्चापि कमलः प्रफुल्लनयनस्ततः ॥ १६७ ॥
केवलस्स्यात्तदन्ते तु ह्लादस्स्वरविवर्जितः ।
परमात्मानमुद्धृत्य अङ्कुशाद्येन संयुतम् ॥ १६८ ॥
और्वान्तेनाङ्कितं मूर्ध्ना तदन्ते योजयेन्नमः
फट्कारत्रितयं पश्चाद्विष्णुचक्राय वै पदम् ॥ १६९ ॥
स्वाहार्णद्वितयं चान्ते चार्कं सप्तदशाक्षरम् ।
अर्धाक्षरचतुष्केन युक्तं सर्वमिदं जगत् ॥ १७० ॥

[ गदामन्त्रः ]

उद्धरेत्प्रणवं त्वादौ तदन्ते च गदाधरम् ।
प्रधानोपरिसंस्थं च तदधः पुरुषेश्वरम् ॥ १७१ ॥
जगद्योनियुतं मूर्ध्ना व्योमेशमुपरि न्यसेत् ।
ततो जकारमादाय विष्टरोपरि संस्थितम् ॥ १७२ ॥
विसर्गाद्येन संभिन्नं नमस्कारविभूषितम् ।
सहस्राश्रि[2]गदे स्वाहा गदाख्यस्त्रिदशाक्षरः ॥ १७३ ॥
अभीष्टदो महामन्त्रो विघ्नजालक्षयंकरः ।

[ गरुडमन्त्रः ]

प्रणवं पूर्वमादाय अनन्तेशमतः परम् ॥ १७४ ॥
ऊर्ध्वाऽधोनलसंभिन्नं सत्याद्यं तदधो न्यसेत् ।
त्र्यैलोक्यैश्वर्यदा दानत्रैलोक्यैश्वर्यदेन च ॥ १७५ ॥
शिरसा भूषितं कुर्याद्वेदात्मानमथोद्धरेत् ।
सोऽप्यनन्तेशवत्कार्यस्स्वरव्यञ्जनभूषितः ॥ १७६ ॥
सृष्टिकृत्सहितं भूयः कूटं दद्यान्नमोन्तगम् ।
पदश्चान्तेऽनन्तगते स्वाहान्तं गरुडाय च ॥ १७७ ॥
सप्तदशाक्षरो मन्त्रः कीर्तितो गरुडस्य च ।
यस्य संस्मरणात्सम्यक्समस्तापल्लयं व्रजेत् ॥ १७८ ॥

1 सृष्टि CL. 2 श्रि A.

[ पाशमन्त्रः ]

आदायादौ तु वैकुण्ठं तस्यारूढं च रं न्यसेत् ।
व्योमानन्दसमेतं च कह्नकह्नपदं ततः ॥ १७९ ॥
धाराधरद्वयोपेतं वरपाशाय वै पदम् ।
स्वाहा चैव तु तस्यान्ते कुर्यात् [1]सप्तदशाक्षरः ॥ १८० ॥
स तारको ह्ययं मन्त्रः पाशाख्यः क्षिप्रसिद्धिकृत् ।

[ अङ्कुशमन्त्रः ]

प्रणवान्ते ततः कुर्याद्विराट्संज्ञं तदूर्ध्वतः ॥ १८१ ॥
व्योमविश्वानलोपेतं कमलं तदनन्तरम् ।
ऋतधामोपरिस्थं च व्योम तस्योपरि न्यसेत् ॥ १८२ ॥
पदं निशित[2]घोणाय अङ्कुशाय पदं ततः ।
स्वाहान्वितस्त्रिपञ्चार्णो मन्त्रराडङ्कुशस्य च ॥ १८३ ॥
शीघ्रकर्मकरः प्रोक्तो नित्य[3]मिच्छान्तलक्षणः ।

[ उपाङ्गपञ्चकनिरूपणारम्भः ]

उपाङ्गपञ्चकं चाथ सत्यादीनां हि वाचकम् ॥ १८४ ॥
ब्रह्मस्वरूपममलं व्यापकं सर्वसिद्धिदम् ।
सम्यक्शृणुष्व देवर्षे सरहस्यं वदामि ते ॥ १८५ ॥
यद्विन्यासात्साधकस्य सिद्धो वै यत्र कुत्रचित् ।
फलदो मन्त्रमूर्तिस्स्यादचिरात्तन्मयस्य च ॥ १८६ ॥
स्याद्देवेशसमो मन्त्री तन्न्यासाद्ध्यानभावनात् ।
यागाहुतस्य मन्त्रस्य शक्त्यङ्गाद्यावृतस्य च ॥ १८७ ॥
सम्यङ्निरोधसिद्ध्यर्थं योजनीयं सदैव हि ।
तथात्मनः कृते न्यासे न्यस्ते चोपाङ्गपञ्चके ॥ १८८ ॥
शश्वत्स्याच्चित्तवृत्तीनां विक्षिप्तानां च संयमः ।

[ सत्याद्युपाङ्गपञ्चकबीजमन्त्रः ]

तुर्यातीतात्मसंज्ञो यो वर्गः पञ्चार्णभूषितः ॥ १८९ ॥
विलोमेन सुपर्णाद्यं स्थापयित्वा नियोज्य च ।
आद्यं वै भूधराख्येन ऊर्जसंज्ञेन चापरम् ॥ १९० ॥
लोकेशेन तृतीयं तु तुर्यं साक्षाच्च विष्णुना ।

---

1 पञ्चदशा C. L. 2 को A. 3 विच्छा Y.

पञ्चमं त्वादिदेवेन व्यापी सर्वत्र मूर्धनि ॥ १९१ ॥
समस्तेन द्विजोङ्कारे एकैकं मध्यतः क्षिपेत् ।
पञ्चकं पञ्चसंज्ञस्य बीजभूतमिदं स्मृतम् ॥ १९२ ॥
संस्थितं तु परत्वेन एतस्मात्प्रभवन्ति ते ।
सौक्ष्म्येन[1] व्यापकत्वेन धातृत्वेन तु नारद ॥ १९३ ॥
एकैकस्मिन्समूहेन पञ्चैते संव्यवस्थिताः ।
प्रशान्तहुतभुग्रूपाः परमन्त्रसहोदिताः ॥ १९४ ॥
आदिदेवस्य वै विष्णोः सत्याख्यस्य महात्मनः ।
महाविभवसंज्ञस्य प्रथमो मन्त्रराट् स्मृतः ॥ १९५ ॥
वासुदेवस्य च विभोर्द्वितीयः परिकीर्तितः ।
सङ्कर्षणस्य च ततो बीजमुक्तं तृतीयकम् ॥ १९६ ॥
चतुर्थं विप्रशार्दूल प्रद्युम्नस्य महात्मनः ।
उपाङ्गं पञ्चमं विद्धि अनिरुद्धात्मनो विभोः ॥ १९७
सत्याद्यमनिरुद्धान्तं पवित्रं मन्त्रपञ्चकम् ।
उपाङ्गसंज्ञं यो वेत्ति स सत्यं वेत्ति नान्यथा ॥ १९८ ॥
इति सूक्ष्मस्वरूपस्य विभोर्मन्त्रवरस्य च ।
त्र्यक्षरस्य द्विबीजाद्यं व्यापकस्यामलस्य च ॥ १९९ ॥
मूर्तिमन्त्रादितः प्रोक्तो मन्त्रसंज्ञो( घो ?) यथाक्रमम् ।
अभीप्सितप्रदस्सम्यग्भक्तानां भावितात्मनाम् ॥ २०० ।
अत्रासक्तो भव मुने यजैतत्पूजयस्व च ।
विधिना शास्त्रदृष्टेन वाञ्छितं यत्प्रयच्छति ॥ २०१ ॥

नारदः—

स्थूलसूक्ष्मविभागेन एष मन्त्रः परो मया ।
ज्ञातः परस्वरूपेण न ज्ञातः परमेश्वर ॥ २०२ ॥
पुराऽस्यैव परा मूर्तिर्मान्त्री संसूचिता त्वया ।
समाचक्ष्व समासेन यदि सानुग्रहोऽसि मे ॥ २०३ ॥

[ मन्त्रस्य परस्वरूपनिरूपणम् ]

श्रीभगवान्

मूर्तिमन्त्रं विना विप्र यो मन्त्रः प्रागुदीरितः ।

---

1 श CL.

प्रभवाद्यो विसर्गान्तस्सुधासन्दोहविग्रहः ॥ २०४ ॥
सर्वदेवमयश्शुद्धस्सर्वाध्वात्मा परः प्रभुः ।
समस्तशक्तिदेहस्तु भारूपस्सूक्ष्मरूपधृत् ॥ २०५ ॥
संसारार्णवमग्नानामिच्छया स्थूलतां गतः ।
अधिष्ठितस्स विभुना परेणालोकरूपिणा ॥ २०६ ॥
सुसूक्ष्मेणाविग्रहेण सदालोकरसात्मना ।
अणीयांसमणोर्विद्धि मन्त्रशक्तिः परा हि सा ॥ २०७ ॥
उपाधिरहितं शुद्धं मत्सामीप्यफलप्रदम् ।
तच्छरीरं हि मे मन्त्रं परं परफलप्रदम् ॥ २०८ ॥

[ परसूक्ष्मस्थूलरूपेण सता मन्त्राणा सविन्मयात् सर्वतः परतरात्प्रादुर्भावनिरूपणम् ]

निर्विकारशरीरं च योगाख्यं परमं स्मृतम् ।
तुर्यात्परं पदादस्मात् ज्ञेयाख्यं परमं मम ॥ २०९ ॥
ग्राह्यग्राहकनिर्मुक्तं संविदानन्दलक्षणम् ।
तन्मयास्तं प्रपश्यन्ति विशुद्धेनान्तरात्मना ॥ २१० ॥
यतः परः प्रभवति भाःशब्दाख्यश्च[1] मन्त्रराट् ।
यत्र सप्तपदार्थं तु विज्ञातं व्यक्तिमेति च ॥ २११ ॥
यत्र वै वर्णरूपेण सर्वे लोकाः प्रतिष्ठिताः ।
प्रधानकारणानां यद्वाभ्यां यत्परतस्स्थितम् ॥ २१२ ॥
मन्त्रोत्पत्तिक्रमेणैव यादृक्संस्थं तथा शृणु ।
अनुक्रमेण संयोज्य सृष्टिन्यायेन नारद ॥ २१३ ॥
सप्तकश्चैव वर्णानां संविभक्तिविभावितम् ।
सूर्यसोमाग्निरूपं तु प्रधानपुरुषेश्वरम् ॥ २१४ ॥
अशेषभुवनाधारं त्र्यैलोक्यैश्वर्यदायकम् ।
एष वर्णमयः पिण्डः परो मे मन्त्रविग्रहः ॥ २१५ ॥
भावग्राह्यमनौपम्यमप्रकाश्यमिदं मुने ।
प्रकाशितो मया तेऽद्य जीवभूतो हि मन्त्रराट् ॥ २१६ ॥
समस्तमन्त्रचक्रस्य सामर्थ्यजनको हि यः ।
मन्त्रेण तेन विधिना ओतप्रोतव्यवस्थया ॥ २१७ ॥
अधिष्ठितोऽपि बीजो वै निर्मलस्फटिको यथा ।

1 शक्त्या CL.

निर्मलेनाम्बरेणैव दृश्यादृश्येन वै तथा ॥ २१८ ॥
व्याप्तास्तेनापरे मन्त्रास्तथैव परिभाविताः ।

नारदः—

मन्त्र(:?)सृष्टिक्रमेणैव यथावन्नोदितस्त्वया ॥ २१९ ॥
तमादिशस्व येनाद्य कृतकृत्यो भवाम्यहम् ।
योऽविकारः परश्शुद्धस्स्थितस्संवेदनात्परे ॥ २२० ॥
स कथं व्यापकं ब्रह्म मन्त्रमूर्त्तित्वमागतः ।

[ मन्त्रसृष्टिक्रमविवेचनम् ]

श्रीभगवान्—

तस्यैकां परमां शक्तिं विद्धि तद्धर्मचारिणीम् ॥ २२१ ॥
ययोपचर्यते विप्र सृष्टिकृत्परमेश्वरः ।
बृंहितो यद्बृहत्वेन नित्यानन्दोदितस्तथा ॥ २२२ ॥
सर्वदा नित्यशुद्धो यस्तस्यैतन्नोपपद्यते ।
शक्त्यात्मकस्स भगवान्सर्वशक्त्युपबृंहितः ॥ २२३ ॥
अग्नीषोमात्मकेतं मे ( कत्वेन ? ) तुल्यकालं हि मूर्च्छति ।
प्रकाशस्तु भवेत्सूर्य आह्लादस्सोम उच्यते ॥ २२४ ॥
द्वयोरन्तर्गता संवित्ताभ्यामस्तोदयावपि ।
पुमान्स एव चिन्मूर्त्तिरग्नीषोममयो द्विज ॥ २२५ ॥
यदग्निरूपं त्रैगुण्यं तंच विद्यामयं तु वै ।
चिदात्मा शलभो यद्वत्तमधिष्ठाय तिष्ठति ॥ २२६ ॥
ततः प्रधानिकीं भूमिं तत्रस्थो गमयेत्प्रभुः ।
पुरुषेश्वरतां याति क्ष्मातत्त्वेऽधिष्ठिते सति ॥ २२७ ॥
ममेति वासनाविद्धस्तेजसा परिपूरयेत् ।
तत्त्ववृन्दं च सकलं त्रैलोक्यैश्वर्यतां व्रजेत् ॥ २२८ ।
तैजसादभिमानात्तु ततस्तस्मान्निवर्तते ।
स्वां स्थितिं समवाप्नोति परावस्थास्थितिं पुनः ॥ २२९ ॥
गमयेत्स्थूलरूपं वा सूक्ष्मं वा शक्तिवेष्टितम् ।
द्वयमेतत्समाश्रित्य लोकानुग्रहकृद्भवेत् ॥ २३० ॥
संप्रयच्छति मोक्षं च भोगं राज्यादिकं तु वा ।
यत्तस्मात्तदुपास्यो वै स्थूलसूक्ष्मोभयात्मकः ॥ २३१ ॥

त्र्यक्षरः परमो मन्त्रस्तेन संदीक्षयेत्क्रमात् ।
भवाब्धिपतितान्भक्तानपरेण तु (?)कर्हिचित् ॥ २३२ ॥
दीक्षितः पाशमुक्तो वै त्यक्तसर्वपरिग्रहः ।
पिण्डपाताभिलाषी वा योगैकगतमानसः ॥ २३३ ।
भक्तः परो योजनीयस्सर्वो निर्वाणभागथ ।
तत्स्थः परं पदं याति स्थूलसूक्ष्मोभयेन तत् ॥ २३४ ॥
व्यक्तिमेत्यचिराद्विप्र भविनां भावितात्मनाम् ।
उपलब्धौ तु सत्यां वै संयुक्तं चैव विष्णुना ॥ २३५ ॥
जपमानस्तु यो ध्यायेत्पञ्चस्थानविनिर्गतम् ।
सृष्टिक्रमेण तस्याशु सिध्यते मनसेप्सितम् ॥ २३६ ॥
विग्रहादुदितं वाऽथ व्याप्तिसत्तासमन्वितम् ।
यत्पदादवतीर्णं च तदाक्रम्य पुनर्बहिः ॥ २३७ ॥
वर्तते विग्रहं त्यक्त्वा संस्मृतो मोक्षमृच्छति ।
दश्याद्वायोर्गतिपथाद्व्यापाराच्च क्रमेण तु ॥ २३८ ॥
संहृत्य हृदयात्सर्वं स्थाना[1]न्यूर्ध्वे तथैव च ।
तत्सेवामृतसंभिन्नान्नित्याभ्यासाच्च नारद ॥ २३९ ॥
स्यात्स्थिरत्वं शरीरस्य भोगमोक्षबलं तथा ।
तस्मादस्य सदा पूजा ध्यानजप्यमयी भवेत् ॥ २४० ॥
नोपचारमयी कार्या पुष्पधूपादिकैर्बहिः ।
यतस्सकलदेहस्य पूजनं विहितं मुने ॥ २४१ ॥
भावना निष्कलाख्यस्य नैतदस्ति द्वयोज्झिते ।
यदस्याविकृतं रूपं तदनेन त्वधिष्ठितम् ॥ २४२ ॥
भाव्योदयेन योगेन सोऽस्य वै जनको यतः ।
अस्मात्सिंह्मादिवच्चान्यदेवमेव विभावयेत् ॥ २४३ ॥
पृथग्यागे समस्ते वा निर्विघ्नफलसिद्धये ।
ब्रह्मप्राप्तौ तथा भोगे दीक्षाद्ये कर्मसंग्रहे ॥ २४४ ॥
एतदीयं हि सामर्थ्यं मन्त्रस्य त्र्यक्षरस्य तु ।
बोद्धव्यस्स त्रिधैवात्मा गुणत्रयमयस्तथा ॥ २४५ ॥
सदा विप्र त्रिलोकात्मा त्रिवेदात्मा स उच्यते ।
त्रेताग्निं तं विजानीयात्कर्म वाङ्मनसे असौ ॥ २४६ ॥

---
1 द.

मनोबुद्धिरहङ्कारो बुद्धिकर्माक्षभूतवान् ।
सोमसूर्याग्निरूपेण त्रिधा सोऽपि [1]त्रयोऽक्षरः (राः?) ॥ २४७ ॥
प्रकृतिः पुरुषश्चैव तृतीयश्चेश्वरश्च सः ।
स च नाडीत्रयं देहे स्थानत्रयसमन्वितम् ॥ २४८ ॥
एवमेवास्य मन्त्रस्य वैश्वरूप्यं च नारद ।
व्यापकत्वं च यो वेत्ति तत्सत्यं वेत्ति नान्यथा ॥ २४९ ॥
इति मन्त्रगणो मुख्यस्सर्वोपप्लवशान्तिकृत् ।
प्रकाशितो यथा तथ्यं नाख्येयो यस्य कस्यचित् ॥ २५० ॥

इति श्रीपाञ्चरात्रे जयाख्यसंहितायां मुख्यमन्त्रोद्धारो नाम षष्ठः पटलः ।

---

अथ उपकरणमन्त्रोद्धारो नाम सप्तमः पटलः

श्रीभगवान्—

अथाधारासनाख्यानां मन्त्राणां लक्षणं शृणु ।
पूजनं यैर्विना विप्र मन्त्रेशस्य न जायते ॥ १ ॥

[ आधारशक्तिमन्त्रः ]

अशेषभुवनाधारामाधाराधेयवन्न्यसेत् ।
परमात्मनि विप्रेन्द्र मायाख्यो मत ऊर्ध्वतः ॥ २ ॥
नमोऽन्तं प्रणवाद्यं च बीजमाधारशक्तिजम् ।
आधेयतुल्यसामर्थ्यमस्य रूपं तथाविधम् ॥ ३ ॥

[ कूर्ममन्त्रः ]

उद्धृत्य प्रणवं पूर्वमनन्तेशस्य पूर्वजम् ।
तत्कालपावकेनैव भिन्नं कुर्याद्द्विजोभयोः ॥ ४ ॥
त्रैलोक्यैश्वर्यदेनैवमूर्जेन तु तथा द्विज ।
नमस्कारान्वितं बीजं कूर्मकालाग्निवाचकम् ॥ ५ ॥
आधारशक्तेरुपरि विमलं दीप्तविग्रहम् ।
ज्वालाशतसमाकीर्णं शङ्खचक्रगदाधरम् ॥ ६ ॥

[ अनन्तमन्त्रः ]

अनन्तेशस्य यत्पूर्वं गोपनेन समन्वितम् ।
व्योमयुक्तमनन्ताख्यं नागराजस्य कीर्त्तितम् ॥ ७ ॥
प्रणवादि नमोऽन्तं च एतद्बीजवरं शुभम् ।
पूर्णचन्द्राननं ध्यायेत्सहस्रफणभूषितम् ॥ ८ ॥

---

1 त्र्यक्षर. A.

चक्रलाङ्गलहस्तं च प्रणमन्तं परात्परम् ।

[ धरामन्त्रः ]

अनन्ताख्यं च यद्बीजं प्रधानोपरि संस्थितम् ॥ ९ ॥
सोऽप्यारूढो धरेशस्य व्योमानन्तद्वयाङ्कितम् ।
प्राग्वदाद्यन्तसंरुद्धं धरायास्संप्रकीर्तितम् ॥ १० ॥
कुङ्कुमोदकसङ्काशां हेमरत्नविभूषिताम् ।
बद्धाञ्जलिं शिरोदेशे संस्मरन्तीं विभोः स्मरेत् ॥ ११ ॥

[ क्षीरोदमन्त्रः ]

अमृतं वरुणस्थं च आदिदेवेन योजितम् ।
क्षीरोदमन्त्रराडेष व्योमयुक्तो द्विजोत्तम ॥ १२ ॥
अस्यादौ प्रणवश्चान्ते नमस्कारपदं न्यसेत् ।
शुद्धकुन्देन्दुधवलं स्रोतोरश्मिभिरावृतम् ॥ १३ ॥
कीर्णसंपूर्णचंद्राभं ध्यायेद्गम्भीरविग्रहम् ।

[ पद्ममन्त्रः ]

पद्मस्याथ प्रवक्ष्यामि मन्त्रं सन्निधिकारणम् ॥ १४ ॥
प्रणवं प्रणवान्ते च पवित्रं तदनन्तरम् ।
भुवनं व्योमसंभिन्नमाधारेति पदं ततः ॥ १५ ॥
पद्माय च नमश्चान्ते पदं पूर्वपदस्य च ।
प्रशान्तपावकाकारमुदयादित्यसन्निभम् ॥ १६ ॥
ध्यायेद्वै द्विभुजं ह्रस्वं जठराद्यैर्विलम्बितम् ।
भासितं सितदन्तं च वेष्टितं सुरषट्पदैः ॥ १७ ॥
व्यक्ताव्यक्तपरत्वेन [1]पद्माद्यं त्रितयं स्मरेत् ।
त्रितयं तदधस्थं यच्छक्यं तस्यैवमेव हि ॥ १८ ॥
अयमाधारषट्कस्य मन्त्रमार्गः प्रकीर्तितः ।

[ धर्माद्यासनमन्त्राः ]

अत्रोपर्यासनाख्यांश्च षण्मन्त्रानथ मे शृणु ॥ १९ ॥
धर्त्ताऽजितोऽमृताधारो विबुधाख्यैश्च नारद ।
व्युत्क्रमानुक्रमेणैव कृत्वैकैकस्य योजयेत् ॥ २० ॥
सम्यग्ज्वालाऽथ लिङ्गात्मा देवदत्तस्ततो द्विज ।

---

1 वत्माद्यं A.

वामनं सोममुद्दामं प्रणवस्योपरि न्यसेत् ॥ २१ ॥
त्रैलोक्यैश्वर्यदं दद्यात्सर्वेषां स्याच्चतुष्टयम् ।
धर्माद्यं तद्विपर्यासैर्युक्तं वेदैस्तथा युगैः ॥ २२ ॥
सुसितं चामृतं पद्मं सूर्येन्द्वग्नित्रयं ततः ।
एतेषां प्रणवः संज्ञा नमस्कारो भवेद्द्विज ॥ २३ ॥
अत्रोपर्यपरं विप्र चिद्भासा खचितं शुभम् ।
भावासनं विभोर्दद्यात्स्थूलसूक्ष्मद्वयात्परम् ॥ २४ ॥
अप्रमेयेण सूर्येण व्योमाख्येनामृतेन च ।
परमेश्वरयुक्तेन त्रितारोक्तात्मनाथवा[1] ॥ २५ ॥
इत्येवं पीठपूजार्थो मन्त्रग्रामो द्विजोत्तम ।
रहस्यमेतदाख्यातमिदानीमपरं शृणु ॥ २६ ॥

[ क्षत्रपालमन्त्रः ]

क्षेत्रेशाद्यं मन्त्रचयं विघ्ननिर्मथनक्षमम् ।
अनन्ताख्यं च कालेन भेदयेत्सानलेन च ॥ २७ ॥
त्रैलोक्यैश्वर्यदेनाथ सादिदेवेन भेदितम् ।
क्षेत्रपालस्य मन्त्रोऽयमोङ्कारान्तेन भूषितः ॥ २८ ॥

[ क्षेत्रपालध्यानम् ]

नीलजीमूतसङ्काशं दण्डहस्तं महातनुम् ।
मुष्टिकृद्वामहस्तेन यागक्षेत्रावधौ स्मरेत् ॥ २९ ॥

[ श्र्यादीना पद्मनिध्यन्ताना मन्त्राः ]

पुण्डरीकस्ततश्चक्री पवित्रश्चाथ शाश्वतः ।
वराहश्च गदध्वं(सी) सूक्ष्मश्शान्तः पवित्रकः ॥ ३० ॥
क्रमेण मुनिशार्दूल एतद्वर्णगणं लिखेत् ।
अशेषभुवनाधारं विश्रान्तं व्योमभूषितम् ॥ ३१ ॥
मायाद्यस्योपरि न्यस्य चतुर्णामथ विक्रमी ।
पञ्चबिन्दुरतो द्वाभ्यां लोकेशोऽप्यपरे द्वये ॥ ३२ ॥
प्रणवेनाभिधानेन नमस्कारेण भूषिताः ।
सर्वे मन्त्रवरा ह्येते स्वसामर्थ्यफलप्रदाः ॥ ३३ ॥

---

1 यथा CL.

श्रियश्चण्डप्रचण्डाभ्यां जयस्य विजयस्य च ।
गङ्गायमुनयोर्विप्र सनिध्योः शङ्खपद्मयोः ॥ ३४ ॥

[ श्र्यादीना पद्मनिध्यन्तानां ध्यानम् ]

पद्मकुम्भकरां लक्ष्मीं पद्मोपरिगतां स्मरेत् ।
चण्डाद्या विजयान्ताश्च सर्वे ज्ञेयाश्चतुर्भुजाः ॥ ३५ ॥
गदाचक्रधराश्चैव शङ्खहस्ता महाबलाः ।
तर्जयन्तो ह्यभक्तानां दोषाणां ध्वंसनोद्यताः ॥ ३६ ॥
तोयाधारं वहन्त्यौ ते कलशं वारिपूरितम् ।
नवयौवनलावण्यस्त्रीरूपं च नदीद्वयम् ॥ ३७ ॥
निधिपौ शङ्खपद्मौ च निधिभाण्डोपरि स्थितौ ।
स्थूलदन्तौ च पिङ्गाक्षौ द्विभुजौ भगवन्मयौ ॥ ३८ ॥

[ गणेशादिपित्रन्ताना मन्त्राः ]

पित्रन्तं च गणेशाद्यमथ मन्त्रगणं शृणु ।

[ गणेशमन्त्रः ]

गदाधरं समुद्धृत्य प्रज्ञाधारेण भेदयेत् ॥ ३९ ॥
अंकारयोजितं मूर्ध्नि गणाधिपतये पदम् ।
नमस्कारान्वितं पूर्वं प्रणवश्चास्य योजयेत् ॥ ४० ॥
नवाक्षरो ह्ययं मन्त्रो विघ्नेशस्य च वाचकः ।
एष एव गदध्वंसी षोढा कार्योऽथ भेदयेत् ॥ ४१ ॥
आदिदेवादिषट् दीर्घैर्विराट् ज्वालोज्झितैः क्रमात् ।
पञ्चानां मस्तके व्यापी जात्यैकैकं स्वयं न्यसेत् ॥ ४२ ॥
नमः स्वाहा ततो वौषट् हुं वौषट् फट् समन्विताः ।
जातयः षट् समाख्याता हृदादीनां क्रमेण तु ॥ ४३ ॥

[ गणेशध्यानम् ]

ध्यायेच्चम्पकवर्णाभं बद्धपद्मासनं द्विज ।
कर्णिकायां त्रिपलेऽब्जे रक्ते पद्केसरे शुभे ॥ ४४ ॥
वरदाभयहस्तश्च ( स्तं च ? ) दक्षिणे साक्षसूत्रकम् ।
विश्रान्तं चिन्तयेद्वामं चतुर्थं परशूपरि ॥ ४५ ॥
वरदाभयहस्ताभ्यां मत्स्यमुद्राद्वयं स्मरेत् ।
तर्जन्यङ्गुष्ठसङ्घट्टाज्जायते यदयत्नतः ॥ ४६ ॥

स्थूलाङ्गमेकदंष्ट्रं च लम्बकोष्ठं गजाननम् ।
केसरेष्वङ्गषट्कं च पत्रत्रयगतं न्यसेत् ॥ ४७ ॥

[ वागीश्वरीमन्त्रः ]

आदाय प्रणवञ्चादौ सुपर्णं तदनन्तरम् ।
तदन्तेऽथ तदाद्यं च सोमं तदनु वै द्विधा ॥ ४८ ॥
प्राक्बीजस्याध ऊर्ध्वे च योजयेत्कालपावकम् ।
अथो दद्याद्द्वितीयस्य केवलं तच्च नारद ॥ ४९ ॥
शङ्खसंस्थं तृतीयस्य चतुर्थस्याक्षरस्य च ।
स्रग्धरेण तु शङ्खेन तदूर्ध्वाधोयुतं न्यसेत् ॥ ५० ॥
पुनरादिक्रमेणैव द्वाभ्यां मायां नियोज्य च ।
द्वाभ्यां तं चादिदेवं च सर्वेषां व्योम चोपरि ॥ ५१ ॥
तदन्ते वर्णपूर्वान्तां क्षान्तां संयोज्य मातृकाम् ।
वागीश्वर्यै नमश्चान्ते एकषष्ठ्यक्षरः( ? )शुभः ॥ ५२ ॥
वाग्विभूतिप्रदो मन्त्रो वागीश्वर्या मयोदितः ।
सोमं चानलसंस्थं च गणेशाङ्गोदितैस्स्वरैः ॥ ५३ ॥
भिन्नमस्याङ्गषट्कं स्यात् ओङ्काराद्यं नमोऽन्तकम् ।

[ वागीश्वर्या ध्यानम् ]

सूर्येन्दुमण्डलाभ्यां च मध्ये पद्मं स्मरेत् स्थितम् ॥ ५४ ॥
तन्मध्ये संस्थितां देवीं वह्निवेश्मप्रभान्विताम् ।
सर्वोपाधिविनिर्मुक्तां सर्वाकारसमन्विताम् ॥ ५५ ॥
इत्यस्या वैश्वरूप्यं स्याद्ध्यानमप्यधुना शृणु ।
सितकुन्देन्दुधवळां शङ्खपद्मकरोद्यताम् ॥ ५६ ॥
वरदाभयहस्तां च विलिखन्तीं च पुस्तकम् ।
द्विनेत्रामेकवक्त्रां च हेमकुण्डलभूषिताम् ॥ ५७ ॥
ध्याता भगवती ह्येषा शक्तिः शब्दात्मिका विभोः ।
समभ्यस्ता ददात्याशु साधकानामभीप्सितम् ॥ ५८ ॥

[ गुरूणां मन्त्राः ]

प्रणवद्वितयं व्यापी तदधस्थोदयस्तु गः ।
गुरवे सनमश्चान्ते मन्त्रोऽयं पूजने गुरोः ॥ ५९ ॥
प्रणवत्रितयान्ते तु सव्योमा पश्चिमाननः ।
ततः परमशब्दस्तु गुरवे सनमस्ततः ॥ ६० ॥
गुरोर्गुरोरयं मन्त्रस्तद्गुरोरवधारय ।

मन्त्राद्यस्य चतुष्कं तु पद्मनाभमतः परम् ॥ ६१ ॥
न्यसेत्तस्यानन्दयुतं व्योमोर्ध्वे परमेष्ठिने ।
सनमस्कं पदं दद्यात् पितृभ्यां [तॄणां] चाथ मे श्रृणु ॥ ६२ ॥

[ पितॄणा मन्त्राः ]

तारपञ्चकमाह्लादं व्योमप्राणोपरि न्यसेत् ।
कालानलौ तु तदधस्सर्वलोकेश्वरोपरि ॥ ६३ ॥
यथाक्रमोदितैर्वर्णैः पिण्डं कृत्वा ततः पदम् ।
स्वधा पितृभ्यःसनमः पितृसङ्घस्य मन्त्रराट् ॥ ६४ ॥

[ पूर्वसिद्धमन्त्रः ]

कथितो द्विजशार्दूल पूर्वसिद्धेष्वथोच्यते ।
अन्ते प्रणवषट्कस्य आनन्दं व्योमभूषितम् ॥ ६५ ॥
पदं तथादिसिद्धेभ्यस्सनमस्कं नियोजयेत् ।
प्रागिमं मन्त्रनिचयं पूजयित्वा ततोऽर्चयेत् ॥ ६६ ॥
प्रधानमन्त्रपूर्वा ये यस्मिन्यस्मिंस्तु कर्मणि ।

[ लोकेशमन्त्राः ]

अथ लोकेशमन्त्राणां शास्त्राणां लक्षणं श्रृणु ॥ ६७ ॥
व्योमानन्दं ततः प्राणं धरेशोपरि संस्थितम् ।
एतदेकीकृतं वर्णं[1] सृष्टिन्यायेन नारद ॥ ६८ ॥
ऐन्द्रो मन्त्रस्समुद्दिष्ट इतरेषां निबोध मे ।
प्राणद्वयं द्विजोध्दृत्य क्रमादनलकालगम् ॥ ६९ ॥
द्वितीयस्वरसंयुक्तं व्योममस्तकभूषितम् ।
शिखिनश्चान्तकस्यैव द्वे बीजे परिकीर्तिते ॥ ७० ॥
व्यापी [2]नरश्च लिङ्गात्मा प्राग्वत्संयोज्य पिण्डवत् ।
[3]यात्वीशस्य तु बीजेन अन्येषामवधारय ॥ ७१ ॥
परमात्मानमुद्धृत्य द्विधा द्वाभ्यामथो न्यसेत् ।
वराहसूक्ष्मसंज्ञौ तु व्योमानन्दावथोपरि ॥ ७२ ॥
अनुक्रमेण विज्ञेयौ बीजौ वरुणवायुजौ ।
धर्मांशोरूध्र्वगं न्यस्य वर्णं वाराहसंज्ञकम् ॥ ७३ ॥

---

1 र्णं A. 2 नारं च C L तार च A. 3 यं बीजस्य तु बीजेश A.

प्राग्वत्स्वरद्वयोपेतं बीजं चोडुपतेः[1] स्मृतम् ।
सूर्यमूर्जोपरिस्थं[2] च व्यापकेन तथाङ्कितम् ॥ ७४ ॥
ईशानाख्यं स्मृतं बीजं विश्वाप्यायकरान्वितम् ।
आदिदेवान्वितं व्योम प्राणाख्यस्योपरि न्यसेत् ॥ ७५ ॥
वैकुण्ठस्तदधो योज्यो बीजं नागेश्वरस्य च ।
प्राग्वत्स्वरान्विते सूर्ये वेदात्मानमथो[3] न्यसेत् ॥ ७६ ॥
ब्रह्मणो बीजमाख्यातं परं[4] व्योमेश्वरस्य च ।
सर्वेषां प्रणवं पूर्वं स्वसंज्ञान्ते नमोयुताः ॥ ७७ ॥

[ वज्राद्यायुधमन्त्राः ]

अथायुधानां क्रमशो ये मन्त्राः शुभलक्षणाः ।
स्थितान् शृणु समासेन यथायोगानुवाचकान् ॥ ७८ ॥
अजितं च द्विधोद्धृत्य प्रधानोपरिसंस्थितम् ।
अशेषभुवनाधारमूर्ध्वेऽधश्चानयोर्न्यसेत् ॥ ७९ ॥
लोकेशोर्ध्वोदितं पूर्वं द्वितीयं पञ्चबिन्दुना ।
विसर्गयुक्ते द्वे चैते बीजे कुलिशशक्तिजे ॥ ८० ॥
अखण्डविक्रमश्चान्द्री द्वावेतौ मर्दनस्थितौ ।
लोकेश्वरविसर्गाढ्यौ विज्ञेयौ दण्डखड्गयोः ॥ ८१ ॥
आह्लादाजितसंज्ञौ द्वौ [5]शताख्यवरुणस्थितौ ।
विसर्गानन्दसंयुक्तौ ज्ञेयौ पाशध्वजाभिधौ ॥ ८२ ॥
परमात्मानमुद्धृत्य अनलाख्यमतःपरम् ।
तयोरुपरि तौ कुर्यात्क्रमादनलशाश्वतौ ॥ ८३ ॥
सोद्दामेन विसर्गेण एकैकमथ योजयेत् ।
प्रोक्तौ मुद्गरशूलौ द्वौ सोमेशाभ्यां द्विजायुधे ॥ ८४ ॥
परप्रकृतिसंज्ञं यद्विन्यसेदनलोपरि ।
ओदनं सविसर्गं च ततस्तस्यैव योजयेत् ॥ ८५ ॥
सीराख्यं बीजमेतद्धि वारिजस्याधुनोच्यते ।
वरुणश्च द्विजोद्धृत्य नराख्यस्योपरि स्थितम् ॥ ८६ ॥
विसर्गेणादिदेवेन युक्तं पाद्ममिहोदितम् ।

[ विष्वक्सेनमन्त्रः ]

आक्रान्तमनलेनैव प्राणाख्यं बीजनायकम् ॥ ८७ ॥

---

1 दे C L. 2 स्थाप्य A. 3 धो C L. 4 र C L. 5 मयाख्य. A.

त्रैलोक्यैश्वर्यदोपेतमूर्जोपरि गतं तु तत् ।
ततो वाराहमादाय भूधरव्योमभूषितम् ॥ ८८ ॥
विष्वक्सेनाय तदनु सनमस्कं पदं न्यसेत् ।
प्रणवाद्यो ह्ययं मन्त्रो विष्वक्सेनस्य कीर्तितः ॥ ८९ ॥
पूर्वबीजं हि यच्चास्य ऊकारस्वरवर्जितम् ।
गणेशवच्च षड्दीर्घैर्भिन्नमङ्गगणं भवेत् ॥ ९० ॥
प्रणवेन स्वनाम्ना च जातिभिः षड्भिरन्वितम् ।

[ औपचारिकमन्त्रपञ्चकम् ]

औपचारिकमन्त्राणां पञ्चकं चाधुनोच्यते ॥ ९१ ॥
मूलमन्त्रादिसर्वेषां सामान्यं यन्महामते ।
येन विज्ञातमात्रेण जपध्यानादिकं विना ॥ ९२ ॥
यथाकालं प्रयुक्तत्वात्संपूर्णं जायतेऽर्चनम् ।

[ आवाहने विनियोक्तव्यो मन्त्रः ]

प्रणवद्वितयोपेतं परमं त्र्यक्षरं पदम् ॥ ९३ ॥
धामावस्थितपञ्चार्णं द्वितीयं प्रोद्धरेत्ततः ।
[1]तदनुग्रहकाम्यं यो अष्टार्णं परमं पदम् ॥ ९४ ॥
दकारं च यकारस्थं तदन्ते योजयेद्द्विज ।
आदिदेवान्वितं पश्चात्ताललक्ष्माणमुद्धरेत् ॥ ९५ ॥
ततो वरुणसंज्ञं च केवलस्रग्धरं ततः ।
अशेषभुवनाधारं जगद्योनियुतं ततः ॥ ९६ ॥
परमात्मानमन्ते च गोपनेन समन्वितम् ।
रामोपेतं ध्रुवं दद्यात्ततः कालं च केवलम् ॥ ९७ ॥
वैराजं केवलं चाथ सिद्धिदं त्र्यक्षरं पदम् ।
मन्त्रेति द्व्यक्षरं दद्याच्छङ्करं केवलं ततः ॥ ९८ ॥
अशेषभुवनाधारं मायायुक्तं ततो न्यसेत् ।
विक्रमव्योमसंभिन्नमनलं[2]चोद्धरेत्ततः ॥ ९९ ॥
नमो नमः पदं पश्चादष्टत्रिंशाक्षरः परः ।
प्रणवेनाधिको विप्र द्वितीयेन महाप्रभः ॥ १०० ॥

---

1 मद C. L. 2 न्त A.

मन्त्र आवाहने विप्र योक्तव्यस्तु परं शृणु ।

[ पाद्यार्घ्येषूपचारेषु विनियोज्यो मन्त्रः ]

औपचारिकहृत्संज्ञं क्रियते येन पूजनम् ॥ १०१ ॥
प्रणवान्ते त्रिधा[1] योज्य प्राणं[2] व्योमविभूषितम् ।
इदमिदमिदं पश्चात्पदं दद्यात्षडक्षरम् ॥ १०२ ॥
गृहाण च ततः स्वाहा मन्त्रः पञ्चदशाक्षरः ।
योग्यस्सर्वोपचारेषु पाद्यार्घ्येषु सदैव हि ॥ १०३ ॥

[ न्यूनाधिकपरिहाराय विनियोज्या विष्णुगायत्री ]

प्रणवं विश्वरूपाय विद्महे विन्यसेत्ततः ।
विश्वातीताय तदनु धीमहे तदनन्तरम् ॥ १०४ ॥
पदद्वयान्ते तदनु तन्नो विष्णुः प्रचोदयात् ।
सर्वेषां कर्मणामन्ते पूरणार्थं प्रयोजयेत् ॥ १०५ ॥
न्यूनाधिकनिमित्तार्थं गायत्री वैष्णवी परा ।
चतुर्विंशाक्षरो ह्येष नमःप्रणवसंयुतः ॥ १०६ ॥

[ प्रसादने विनियोज्यो मन्त्रः ]

उद्धरेत्प्रणवं पूर्वं विष्णुं व्योमान्वितं ततः ।
ह्रींकारं च ततो दद्याद्भूयो विष्णुं तथाविधम् ॥ १०७ ॥
ततो व्योमान्वितं प्राणं सोमं तदनु केवलम् ।
परवर्णं द्वयं दद्यात्परमेशपदं ततः ॥ १०८ ॥
प्रसीद ओं नमस्यान्तो मन्त्रो ह्यष्टादशाक्षरः ।
मन्त्रप्रसादने योज्यो मुद्राबन्धावसानतः ॥ १०९ ॥

[ विसर्जने विनियोक्तव्यो मन्त्रः ]

ओं भगवन्मन्त्रमूर्ते दद्यादष्टाक्षरं पदम् ।
तदन्ते वरुणारूढममृताख्यं नियोज्य च ॥ ११० ॥
पद्मासादयपदं ततो दद्यात् षडक्षरम् ।
क्षमस्व त्र्यक्षरं भूयः प्रणवान्तं च विन्यसेत् ॥ १११ ॥
नमोनमःपदं दद्यात्षड्विंशार्णं तु मन्त्रराट् ।
विसर्जने नियोक्तव्यो मन्त्रग्रामस्य सर्वदा ॥ ११२ ॥
[3]ज्ञप्तिसंज्ञं तु यद्वर्णं वराहोपरि संस्थितम् ।
व्योमेशं विष्णुना युक्तं नमःप्रणवमध्यगम् ॥ ११३ ॥

---

1 क्रिया A. 2 ण C. L. 3 तृ A.

सौरभीयो ह्ययं मन्त्रः स्वसंज्ञासंयुतो द्विज ।
संपूरणार्थं भोगान्ते तेषामाप्यायनार्थतः ॥ ११४ ॥
इत्येष कथितो विप्र मन्त्रकोशो यथा स्थितः ।
सर्वपापक्षयकरस्सर्वदुःखोपशान्तिदः ॥ ११५ ॥
गोपनीयो ह्यभक्तानां शठानां च विशेषतः ।
नास्तिकानामसाधूनां धूर्तानां छद्मचारिणाम् ॥ ११६ ॥
नास्तिकानां च भक्तानां श्रद्धासंयमसेविनाम् ।
गुरुशास्त्ररतानां च नयमार्गानुवर्तिनाम् ॥ ११७ ॥
तत्त्वतश्चोपपन्नानां दृढश्रद्धावलम्बिनाम् ।
[1]तन्मयानामिदं वाच्यमितरेषु च योऽन्यथा ॥ ११८ ॥
वक्ति चैतेषु यो मोहाद्भक्तिश्रद्धोज्झितेषु च ।
लोभेनान्यायतः कामात्स याति नरकेऽधमः ॥ ११९ ॥
सिद्धोऽपि विप्रशार्दूल असिद्धस्य तु का कथा ।
तस्मादालक्ष्य वै पूर्वं न्यायधर्मो यथार्थतः ॥ १२० ॥
वक्तव्यमुपसन्नस्य न्यायतः श्रणुयाद्यदि ।
यो वक्ति न्यायरहितं विना न्यायं शृणोति यः ॥ १२१ ॥
तावुभौ नरकं घोरं व्रजतः कालमक्षयम् ।
ज्ञात्वैवं मुनिशार्दूल रहस्यमिदमुत्तमम् ॥ १२२ ॥
साधनं भोगमोक्षाभ्यां वक्तव्यं नापरीक्षिते ।
यद्यत्किञ्चिज्जगत्यस्मिंस्तत्तत्सर्वं विनश्वरम् ॥ १२३ ॥
स्वप्नवत्क्षणमात्रस्य सुखदायि धनादिकम् ।
समाचारक्रियाऽऽशास्त्रे मान्त्रं ज्ञानमनश्वरम् ॥ १२४ ॥
अनन्तानित्यसुखदं वृद्धिं याति क्षणात्क्षणम् ।

इतिश्रीपाञ्चरात्रे जयाख्यसहितायां उपकरणमन्त्रोद्धारो नाम सप्तमः पटलः ।

---

अथ जयाख्यसंहिताया मुद्राबन्धाख्यान नाम अष्टमः पटल. ।

श्री भगवानुवाच ।

अस्यैव मन्त्रवृन्दस्य क्रमेण तु यथाक्रमम् ।
मुद्राकोशं प्रवक्ष्यामि येन सन्निहितस्सदा ॥ १ ॥

---

1 म A.

भवेच्च साधकेन्द्राणां भुक्तिमुक्तिप्रसाधने ।
आदौ तु मूलमन्त्रस्य अन्येषां तदनन्तरम् ॥ २ ॥
मुद्रां वै बन्धयेन्मन्त्री स्नानकाले जलान्तरे ।
आत्मनो न्यासकाले तु पूजान्ते मण्डलावनौ[1] ॥ ३ ॥
अर्चासु मन्त्रविन्यासे अर्घ्यपात्रेऽम्बुभाजने ।
पूर्णाहुत्यवसाने च मन्त्रे वह्न्यन्तरस्थिते ॥ ४ ॥
हिंसकानां विघाताय सर्वविघ्नोपशान्तये ।
सर्वकार्यार्थसिध्यर्थं मुद्राकोश इहोदितः ॥ ५ ॥

[ जयामुद्रा ]

अधोमुखाद्वामहस्तान्मध्यमां ग्राहयेन्मुने ।
कनिष्ठया दक्षिणस्य तिस्रोऽन्या मुष्टिवत्स्थिताः ॥ ६ ॥
अङ्गुष्ठमुभयं कृत्वा मुद्रेयं तु जया स्मृता ।
अधस्ताद्गरुडं तस्या वामहस्ते विचिन्तयेत् ॥ ७ ॥
पृष्ठे स्याद्दक्षिणे हस्ते ध्यायेद्विष्णुं सनातनम् ।
एषा मुद्रा जया नाम सर्वकार्यार्थसाधनी ॥ ८ ॥
योजयेद्देवदेवस्य तार्क्ष्येण सहितस्य च ।

[ शक्तिमुद्रा ]

प्रसार्य वाममुत्तानमङ्गुल्यो विरलाः स्थिताः ॥ ९ ॥
कार्यास्त्वाकुञ्चिताः प्रान्तादङ्गुष्ठं सेतुवद्भवेत् ।
सम्मुखं तासु संलग्नं करशाखासु मध्यतः ॥ १० ॥
हृत्सम्मुखं तु बध्नीयाच्छक्तिमुद्रां सुखप्रदाम् ।
शक्तियुक्तस्य देहस्य मुद्रा वै सन्निधापनी ॥ ११ ॥
प्रदेशिन्या [2]ततो(?)विद्धि लक्ष्मीपूजासु शक्तिषु ।

[ हृदयमुद्रा ]

दक्षिणेन तु हस्तेन मुष्टिबन्धं प्रकल्पयेत् ॥ १२ ॥
अङ्गुष्ठं करमध्यस्थं कृत्वा योज्यं हृदि द्विज ।
हृदयाख्या भवेन्मुद्रा सर्वमन्त्रेषु साधनी ॥ १३ ॥

[ शिरोमुद्रा ]

प्रसृता अङ्गुलीस्सर्वा अङ्गुष्ठेन तु संस्पृशेत् ।

---

1 दि A　　2 यौ A.

शिरोमुद्रेति विख्याता मन्त्रसन्निधिकारिणी ॥ १४ ॥

[ शिखामुद्रा ]

मुष्टिं बध्वा शिखास्थाने तर्जनी चोर्ध्वसंस्थिता ।
शिखामुद्रेति विख्याता सर्वदुष्टक्षयङ्करी ॥ १५ ॥
दोषविघ्नविनाशाय सदा ह्येषा प्रकीर्तिता ।
आदौ तस्मात्प्रयत्नेन यागवेश्मनि बन्धयेत् ॥ १६ ॥
उत्सादं सर्वविघ्नानां कुरुते मन्त्रसंयुता ।

[ कवचमुद्रा ]

उभयोरग्रतश्शाखा प्रस्तास्तु करयोर्द्विज ॥ १७ ॥
तयोर्मध्यं ह्यसंश्लिष्टं करबन्धादितो भवेत् ।
वार्मण्येषा भवेन्मुद्रा द्वावंसावनया स्पृशेत् ॥ १८ ॥
दुर्भेद्या दुष्टसङ्घस्य भूतवेताळयोगिनाम् ।
कर्मकाले च बध्नीयात्समन्त्रां च प्रयत्नतः ॥ १९ ॥

[ नेत्रमुद्रा ]

करयोर्ग्रथिताङ्गुल्यस्संवृताः पाणिपृष्ठगाः ।
तर्जन्यौ प्रान्तसंलग्ने सुषिरे[1]चोर्चिते तयोः ॥ २० ॥
अङ्गुष्ठौ मूलसंलग्नविपर्यस्तौ परस्परम् ।
लोचनाख्या भवेन्मुद्रा दर्शयेच्चक्षुषोऽन्तिके ॥ २१ ॥

[ अस्त्रमुद्रा ]

तर्जनीं स्फोटयेद्दिक्षु दशस्वङ्गुष्ठकेन तु ।
द्रुतं करद्वयेनैव चक्षुर्भ्यां सन्निरीक्षयेत् ॥ २२ ॥
अस्त्रमुद्रेति विख्याता त्रासिनी त्रिदशेष्वपि ।
किं पुनर्दुष्टयोनीनां वाङ्मनःकायसंयुता ॥ २३ ॥

[ सिह्ममुद्रा ]

उत्ताने दक्षिणे वामे कुञ्चयित्वाऽङ्गुलित्रयम् ।
प्रसारयेच्च तिर्यग्वै अङ्गुष्ठं तर्जनीं तथा ॥ २४ ॥
ईषदूर्ध्वीकृताऽधोदृग् निष्कम्पालोकसंयुता ।
पाशबन्धक्षयकरी सर्वोपद्रवनाशिनी ॥ २५ ॥
सिह्ममुद्रा भवत्येषा विस्मयाख्या महाप्रभा ।

---

1 च्छि॒ A.

[ कपिलमुद्रा ]

तर्जन्यङ्गुष्ठयोर्मध्ये मध्यमां तु प्रपीडयेत् ॥ २६ ॥
प्रसारयेदनामां च पश्चात्तस्याः कनिष्ठिकाम् ।
परस्परं च दूरस्थे मुद्रैषा कपिली स्मृता ॥ २७ ॥
सर्वसिद्धिकरी ह्येषा अणिमादिषु साधनी ।

[ क्रोडमुद्रा ]

अधोमुखे वामहस्ते मध्यमानामिके यदा ॥ २८ ॥
अङ्गुष्ठस्य तु संसक्ते कनिष्ठा तर्जनीद्वयम् ।
प्रसारितं ततः कार्यं मुद्रा क्रोडात्मिका स्मृता ॥ २९ ॥
सर्वयन्त्रप्रमथनी सर्वदुष्टनिवारिणी ।
स्वे स्वे स्थाने नियोक्तव्या मुद्रावक्त्रेषु या स्थिता ॥ ३० ॥

[ कौस्तुभमुद्रा ]

मध्यमानामिकान्यूना मुष्टिवत्पाणिमध्यगाः ।
उभयोर्हस्तयोर्विप्र पश्चान्मुष्टिद्वयं तु तत् ॥ ३१ ॥
श्लेषयेत्समरन्ध्रेण तर्जन्यौ द्वे प्रसार्य च ।
ततः संश्लेषयेदग्रादङ्गुष्ठाग्रे नियोजयेत् ॥ ३२ ॥
मध्यतस्तर्जनीभ्यां[1] तु अन्योन्येन क्रमेण तु ।
मुद्रैषा कौस्तुभस्योक्ता मालामुद्रामथो शृणु ॥ ३३ ॥

[ मालामुद्रा ]

शाखाष्टकं कराभ्यां यद्ध्रस्तमग्रानदूरतः ।
संश्लक्ष्णं लम्बमानं च उपविष्टोऽथ वास्थितः ॥ ३४ ॥
कुर्याद्बाहुद्वयं विप्र ऊरुमध्यावलम्बितम् ।
मणिबन्धावधौ सम्यङ्मालामुद्रा प्रकीर्तिता ॥ ३५ ॥

[ पद्ममुद्रा ]

अङ्गुष्ठौ सङ्गतौ लग्नौ अङ्गुल्यो विरलाः स्थिताः ।
पाद्मी ह्येषा भवेन्मुद्रा पुष्टिसौभाग्यदायिका ॥ ३६ ॥

[ शङ्खमुद्रा ]

मुष्टिना ग्राहयेद्वाममङ्गुष्ठं दक्षिणेन तु ।
अङ्गुलीर्वामहस्तात्तु दक्षिणस्योपरि न्यसेत् ॥ ३७ ॥

---

1 म A.

वामतर्जनिकाग्रं तु अङ्गुष्ठाग्रं च दक्षिणात् ।
परस्परं सम्मुखं तु सुश्लिष्टं विनियोजयेत् ॥ ३८ ॥
शङ्खस्यैषा भवेन्मुद्रा उत्ताना तु यदा स्थिता ।

[ चक्रमुद्रा ]

स्पष्टौ प्रसारितौ हस्तौ परस्परनियोजितौ ॥ ३९ ॥
भ्रमणाच्चक्रवत्तौ तु[1] चक्रमुद्रेति कीर्तिता ।
नाशिनी सर्वदुःखानां मुद्राणां भेदिनी परा ॥ ४० ॥

[ गदामुद्रा ].

बध्वा मुष्टिं दक्षिणेन वामाङ्गुष्ठस्य मूर्धनि ।
कृत्वैवं दर्शयेदेषा कौमोदक्याः सुशोभना ॥ ४१ ॥
गदामुद्रेति विख्याता दोषसैन्यप्रमर्दनी ।

[ पक्षिराजमुद्रा ]

प्रसार्य संहतं[2] कृत्वा पुरा पाणिद्वयं द्विज ॥ ४२ ॥
अनामा मूलदेशाभ्यामङ्गुष्ठाग्रद्वयं न्यसेत् ।
अधोमुखं तु पतितं मणिबन्धस्य सम्मुखम् ॥ ४३ ॥
सुश्लिष्टमग्रतः कृत्वा न्यसेत्तच्चाङ्गुलिद्वयम् ।
तर्जनीमध्यमाभ्यां यद्वामं युग्मं करद्वयात् ॥ ४४ ॥
प्रोच्छ्रितं विरलं कुर्यात्कुञ्चितं चापि सम्मुखम् ।
सुस्पष्टमुच्छ्रितं लग्नं पुच्छवत्कन्यसायुगम् ॥ ४५ ॥
पक्षिराजस्य मुद्रैषा केवलस्य महात्मनः ।

[ पाशमुद्रा ]

प्रसार्य दक्षिणं पाणिं ततोऽङ्गुष्ठकनिष्ठिके ॥ ४६ ॥
मेळयेदग्रदेशाच्च सेतुवत्करणेन तु ।
[3]फणवत्कुञ्चितं लग्नं तर्जन्याद्यं लतात्रयम् ॥ ४७ ॥
पाशमुद्रा भवत्येषा अङ्कुशाख्यं निबोध मे ॥ ४८ ॥

[ अङ्कुशमुद्रा ]

कनिष्ठा मध्यमा नाम वामहस्तस्य मध्यतः ।
पृष्ठवन्निक्षिपेत्पृष्ठे तासामङ्गुष्टकं भवेत् ॥ ४९ ॥
अग्रतस्तर्जनी कार्या कुञ्चिताङ्कुशवद्द्विज ।
इत्येषाऽङ्कुशमुद्रैव सत्यादीनामथो श्रुणु ॥ ५० ॥

---

1 च A. 2 हृ C. L. 3 ल C. L.

[ सत्यादिमुद्रापञ्चकम् ]

दक्षिणस्य तु हस्तस्य अग्रतोऽङ्गुलिपञ्चकम् ।
परस्परं स्पृशेत्कार्यं प्रोन्नतं मुखसम्मुखम् ॥ ५१ ॥
सत्यस्यैषा भवेन्मुद्रा प्रागुपाङ्गोद्भवस्य च ।
अङ्गुष्ठतर्जनीयोगाद्वितीयस्य प्रकीर्तिता ॥ ५२ ॥
अङ्गुष्ठमध्यमायोगात्तृतीयस्य प्रकीर्तिता ।
अङ्गुष्ठानामिकायोगाच्चतुर्थस्य तु नारद ॥ ५३ ॥
कनिष्ठाङ्गुष्ठसंयोगात्पञ्चमस्य तु जायते ।

[ महाजयामुद्रा ]

हृल्लग्नं वामहस्तं तु कृत्वोत्तानं प्रसारितम् ।
पृष्ठे तु मुष्टिबन्धं तु दक्षिणेन करेण तु ॥ ५४ ॥
मुष्टेरूर्ध्वं स्थितोऽङ्गुष्ठं चक्षुर्भ्यामवलोकितम् ।
दैवी ह्येषा भवेन्मुद्रा मन्त्रराजस्य सुव्रत ॥ ५५ ॥
महाजयेति विख्याता सर्वयोगप्रसाधनी ।
सर्वसिद्धिकरी शश्वत्सर्वमुद्राप्रपूरणी ॥ ५६ ॥
अनया मुद्रितं विश्वमाब्रह्मभवनान्तिमम्[1] ।
सर्वाङ्गशक्तियुक्तस्य सर्वमन्त्रालयस्य च ॥ ५७ ॥
निष्कळस्याविकारस्य ब्रह्मन्सप्ताक्षरस्य च ।
इत्येष गर्भमन्त्राणामुक्तो मुद्रागणो मया ॥ ५८ ॥
आधारासनमन्त्राणां मुद्राणां लक्षणं श्रुणु ।

[ आधारशक्तिमुद्रा कूर्ममुद्रा च ]

क्षिप्तमङ्गुलियुग्मं तु मुष्टिभ्यामन्तरे द्विज ॥ ५९ ॥
वामस्य दक्षिणो मुष्टिः पृष्ठे स्यात्स्पर्शवर्जितः ।
असावाधारशक्तौ च ऊर्ध्वतः कूर्मवद्वि (द्वि?)ज ॥ ६० ॥

[ अनन्तासनमुद्रा ]

अधोमुखस्य वामस्य अनामा तर्जनी उभे ।
आकुंच्य पृष्ठलग्ने तु मध्यमायां तु संस्थिते ॥ ६१ ॥
तयोरधस्तान्मध्याख्यामृज्वीं कुर्यादधोमुखाम् ।
कनिष्ठिका तु साङ्गुष्ठा कार्या सुप्रसृता मुने ॥ ६२ ॥

---

1 क A.

अनन्तासनमुद्रेयमनेनास्या(ख्या?)यते द्विज ।
सर्वं जगदिदं ह्येषा क्रोडीकृत्य च वर्तते ॥ ६३ ॥
सर्वास्वाधारमुद्रासु प्राधान्येन व्यवस्थिता ।
तस्यादौ मन्त्रमुच्चार्य प्लुतं च बहुमातृकम् ॥ ६४ ॥
शब्दशक्यविभागोत्थं भावग्राह्यमनाहतम् ।
[1]ततस्तस्य विसर्गे तु अनन्तासनसंज्ञया ॥ ६५ ॥
बद्धं प्रकल्पयेद्विप्र सद्भावध्यानसंयुतम् ।
सदाधिकारयागे तु मन्त्राणां भिन्नरूपिणाम् ॥ ६६ ॥
क्षिप्रकर्मप्रसिध्यर्थं योजनीया प्रयत्नतः ।

[ पृथिवीमुद्रा ]

करद्वयेन बध्नीयाल्लग्नमुष्टिद्वयं पुरा ॥ ६७ ॥
अङ्गुलित्रितयेनैव अङ्गुष्ठे तर्जनीद्वयम् ।
प्रान्तलग्नं ततः कृत्वा तद्युगे मेलयेत्पुनः ॥ ६८ ॥
एषा तु पार्थिवी मुद्रा सामुद्रीमधुना शृणु ।

[ समुद्रमुद्रा ]

मणिबद्धौ च संलग्नौ नखाग्राणि करद्वयात् ॥ ६९ ॥
कार्याणि साङ्गुलीकानि परस्परमुखानि तु ।
अङ्गुष्ठाग्रे निराधारे तन्मध्ये चालयेद्द्रुतम् ॥ ७० ॥
मध्यं कुर्याच्च हस्ताभ्यां गाधं तु सुषिरोपमम् ।
क्षीरार्णवस्य मुद्रैषा प्रागुक्ता पङ्कजस्य तु ॥ ७१ ॥
मन्त्रयोगात्तथा ध्यानादन्यत्वं चैव जायते ।

[ धर्मादिमुद्राचतुष्टयम् ]

करद्वयमसंलग्ने(ग्नं?) कृत्वा तदनु योजयेत् ॥ ७२ ॥
मुखे मुखं तर्जनीभ्यां तं मुञ्चेदथ मध्ययोः ।
कुर्यात्तादृग्विधं बन्धं तं त्यक्त्वाऽनामिकाद्वये ॥ ७३ ॥
उपसंहृत्य तं चापि द्वे कनिष्ठे नियोजयेत् ।
प्रत्येकबन्धे संलग्नमङ्गुष्ठयुगलं न्यसेत् ॥ ७४ ॥
धर्माद्यस्य चतुष्कस्य विद्धि मुद्रागणं क्रमात् ॥ ७५ ॥
तदूर्ध्वस्थस्य पद्मस्य प्रागुक्ता मन्त्रयोगतः ।

---

1 तस्मादस्य A.

[ सूर्येन्द्वग्निलक्षणधामत्रयमुद्रा ]

दक्षिणस्य तु हस्तस्य तर्जन्यङ्गुष्ठमेलनम् ॥ ७६ ॥
कृत्वा तदनु तद्बन्धं विकास्य च शनैः शनैः ।
समुत्तानं पुनः कुर्याच्छाखासङ्गं पृथक्स्थितम् ॥ ७७ ॥
[1]धामत्रयस्य मुद्रैषा हंसाख्यां तु निबोध मे ।

[ हंसमुद्रा ]

स्पष्टौ प्रसारितौ हस्तौ कुर्यादञ्जलिरूपकौ ॥ ७८ ॥
भावासनस्य मुद्रैषा सुशुद्धा परमार्थकी ।
एष आसनमन्त्राणां मुद्राबन्धो मयोदितः ॥ ७९ ॥
क्रमात्क्षेत्रेशपूर्वाणां वीजानां मुनिसत्तम ।
पद्मनिध्यधिपान्तानां मुद्रादशकमुच्यते ॥ ८० ॥

[ क्षेत्रेशमुद्रा ]

ग्रस्तमङ्गुलिसंख्यातं कृत्वा पाणिद्वयेन तु ।
बलात्प्रपीडयेत्कुर्यादङ्गुष्ठद्वयमुच्छ्रितम् ॥ ८१ ॥
मुद्रेयं क्षेत्रपालस्य श्र्यादीनामथ मे शृणु ।

[ श्रीमुद्रा ]

उत्तानौ तु करौ कृत्वा निकटस्थौ तु नारद ॥ ८२ ॥
तदङ्गुलीगणं सर्वं कुञ्चितं मध्यसंस्थितम् ।
अङ्गुष्ठौ पतितौ कृत्वा क्रमशः स्पष्टतां नयेत् ॥ ८३ ॥
श्रीबीजस्य तु मुद्रैषा प्रथमं कथिता तव ।

[ चण्डमुद्रा ]

समुत्थाप्य कराद्वामात्तर्जनीं चण्डबीजजा ॥ ८४

[ प्रचण्डमुद्रा ]

तामेव दक्षिणाद्धस्तात्प्रचण्डाख्यस्य विद्धि वै ।

[ जयमुद्रा ]

मध्यमाद्वामहस्ताद्वै समुत्थाप्य जयस्य च ॥ ८५ ॥

[ विजयमुद्रा ]

दक्षिणाद्विजयाख्यस्य वीजस्य परिकीर्तिता ॥ ८६ ॥

[ गागमुद्रा ]

वामाच्चानामिका प्राग्वत्कृत्वा गाङ्गस्य विद्धि ताम् ।

---

1 द्विधा मन्त्रस्य तन्त्रैषो A.

[ यामुनमुद्रा ]

दक्षिणाद्यामुनस्योक्ता मुद्रा बीजस्य नारद ॥ ८७ ॥

[ शङ्खमुद्रा ]

निधीश्वरस्य शङ्खस्य वामहस्तात्कनिष्ठिका ।

[ पद्मनिधिमुद्रा ]

पद्माख्यस्यापराद्धस्तात्सैव चोर्ध्वीकृता यदा ॥ ८८ ॥

[ गणेशमुद्रा ]

दक्षिणेन तु हस्तेन साङ्गुष्ठेन च मुष्टिना ।
प्रदेशिनीं ह्यनामां च वामहस्तस्य पीडयेत् ॥ ८९ ॥
प्रयत्नकृतशङ्खानां पृष्ठे योज्या च मध्यमा ।
लम्बमानकराकारा यथा संदृश्यते च सा ॥ ९० ॥
मुष्टेर्नातिसमीपस्थां वामहस्तात्कनिष्ठिकाम् ।
दक्षिणाङ्गुष्ठबाह्ये च दंष्ट्रावत्परिभावयेत् ॥ ९१ ॥
ईषत्तिर्यक्ततस्स्पष्टो वामाङ्गुष्ठस्तथा परः ।
यथा तौ परिदृश्येते गजकर्णोपमौ द्विज ॥ ९२ ॥
गणेश्वरस्य मुद्रेयं सर्वविघ्नक्षयङ्करी ।

[ वागीश्वरीमुद्रा ]

सुश्लिष्टौ मणिबन्धौ तु कृत्वा पाणिद्वये पुरा ॥ ९३ ॥
संलग्नमग्रदेशात्तु प्रोन्नतं मध्यमायुतम् ।
प्रदेशिनीद्वयं तद्वत्कृत्वाऽनामायुगं तथा ॥ ९४ ॥
अचलं द्विगुणीकृत्य नमयेत्तदधोमुखम् ।
शनैः शनैःस्पृशेद्यावत्स्वं स्वं पाणितलं द्विज ॥ ९५ ॥
स्पष्टं सुविरलं कुर्यादङ्गुष्ठद्वितयं द्विज ।
तद्वत्कनीयसीयुग्मं समेन धरणेन तु ॥ ९६ ॥
मुद्रैषा वाग्विभूत्यर्थी यो बध्नाति दिने दिने ।
जपमानस्तु तद्भावी तस्य चावतरेत्तु धीः ॥ ९७ ॥

[ गुरुमुद्रा ]

सम्मुखौ संपुटीकृत्य द्वौ हस्तौ संप्रसारितौ ।
विनियोज्यौ ललाटोर्ध्वे शिरसाऽवनतेन तु ॥ ९८ ॥

गुरोर्गुरुतरस्यापि मुद्रा ह्येषा पितुः पितुः ।

[ पितृगणमुद्राः ]

प्रोत्तानं दक्षिणं पाणिं कृत्वाङ्गुलिगणं ततः ॥ ९० ॥
संलग्नं कुञ्चयेत्किञ्चिदङ्गुष्ठं संप्रसार्य च ।
तिर्यग्भवैः शनैः किञ्चित्कुर्याद्वाऽधोमुखं ततः ॥ १०० ॥
मुद्रा पितृगणस्यैषा नित्यतृप्तिकरी स्मृता ।
पूजाकाले तु वै तस्माद्दर्शनीया प्रयत्नतः ॥ १०१ ॥
यो वै नैमित्तिकाच्छ्राद्धात्परितोषस्तु जायते ।
स पितॄणां शतगुणो मुद्राबन्धाच्च पूजनात् ॥ १०२ ॥

[ सिद्धमुद्रा ]

करद्वयं समुत्तानं नाभिदेशे नियोजयेत् ।
वामस्य दक्षिणे(?) पृष्ठे मुद्रैषा सिद्धसन्ततेः ॥ १०३ ॥

[ वराभयमुद्रे ]

सुस्पष्टं दक्षिणं हस्तं स्वात्मनस्तु पराङ्मुखम् ।
पराङ्मुखं लम्बमानं वामपाणिं प्रकल्पयेत् ॥ १०४ ॥
क्रमाद्वराभयाख्यं तु इदं मुद्राद्वयं द्विज ।
विज्ञेयं लोकपालानामिन्द्रादीनां समासतः ॥ १०५ ॥
एकैकेन तु मन्त्रेण वज्राद्येन क्रमाद्युताम् ।
अस्त्राख्यां शक्तिसंयुक्तां प्रागुक्तां संप्रदर्शयेत् ॥ १०६ ॥
लोकपालायुधानां तु पूजितानां क्रमेण वै ।

[ विष्वक्सेनमुद्रा ]

कनिष्ठाऽनामिका मध्या वामाच्च करमध्यगाः ॥ १०७ ॥
तासामङ्गुष्ठकः पृष्ठे तर्जनी प्रोन्नता भवेत् ।
नासावंशप्रदेशस्था ततो दक्षिणपाणिना ॥ १०८ ॥
अङ्गुलीत्रितयेनैवं मुष्टिं बध्वा तु पूर्ववत् ।
तर्जनीद्विगुणं कृत्वा अङ्गुष्ठाग्रे निरोधयेत् ॥ १०९ ॥
प्रोद्यतो बाहुदण्डः स्याच्चक्रक्षेपे यथोद्यतः ।
विष्वक्सेनस्य मुद्रेयं विश्वकर्मनिकर्तनी ॥ ११० ॥

[ आवाहनमुद्रा ]

किञ्चिदाकुञ्चयेद्धस्तं दक्षिणं हृदयोपगम् ।
अङ्गुष्ठो विरलस्पष्टो मुद्रा ह्यावाहने स्मृता ॥ १११ ॥

[ विसर्जनमुद्रा ]

खड्गधारासमाकारा विरलाङ्गुलिकावुभौ ।
अङ्गुष्ठौ दण्डवत्कृत्वा मुष्टिबन्धं शनैश्शनैः ॥ ११२ ॥
कुर्यात्कनिष्ठिकादिभ्यो मुद्रैषा स्याद्विसर्जने ।

[ सुरभिमुद्रा ]

ग्रथितौ [द्वौ] करौ कृत्वा सुश्लिष्टौ चाप्यधोमुखौ ॥ ११३ ॥
कनीयसौ तदाङ्गुष्ठौ सुश्लेषेण नियोज्य च ।
मध्यमाङ्गुलियुग्मं तु अन्योन्यकरपृष्ठगम् ।
विक्षिप्तानामिकायुग्मं तर्जनीयुगलं तथा ॥ ११४ ॥
मुद्रैषा कामधेन्वाख्या सर्वेच्छापरिपूरणी ।
द्विप्रकारं तु [1]मुद्राणां प्रयोगं नित्यमाचरेत् ॥ ११५ ॥
संविन्मयं तु चाध्यात्मरूपं भास्वरसंपुटम् ।
बाह्यान्तस्त्रिविधं विप्र कर्मवाक्चित्तजं तु यत् ॥ ११६ ॥
अनेन विधिना मुद्रां यो बध्नाति विधानवित् ।
तेनेदं मुद्रितं विश्वमपुनर्भवसिद्धिदम् ॥ ११७ ॥

इति श्रीपाञ्चरात्रे जयाख्यसंहितायां मुद्राबन्धाख्यानं नाम अष्टमः पटलः ।

---

अथ पाञ्चरात्रे जयाख्यसंहितायां स्नानविधिर्नाम नवमः पटलः ।

श्रीभगवान् ।

अथाधिकारसिद्ध्यर्थं स्नानं वक्ष्यामि पूर्वतः ।
येन भक्तोऽभिषिक्तस्तु स्यादर्हो होमयागयोः ॥ १ ॥

[ स्नाने द्वैविध्यम् ]

स्नानं तु द्विविधं कुर्यान्मलसङ्करशुद्धये ।
सामान्यविधिना स्नात्वा विशेषविधिना ततः ॥ २ ॥
सामान्यं लौकिकं स्नानं विशिष्टं मन्त्रसंस्कृतम् ।

[ शौचविधिः ]

तत्रापि शौचपूर्वं स्यात्तदादौ कथयामि ते ॥ ३ ॥

---

1 विप्राणां C L.

तिस्रो लिङ्गे मृदो देया एकैकान्तरमृत्तिकाः ।
पञ्च वामकरे देयास्तिस्रः पाण्योर्विशुद्धये ॥ ४ ॥
मूत्रोत्सर्गे शुद्धिरेषा पुरीषस्याप्यनन्तरम् ।
पञ्चापाने मृत्तिकास्स्युस्तथैवान्तरमृत्तिकाः ॥ ५ ॥
दश वामकरे देयास्सप्त तूभयहस्तयोः ।
पादाभ्यां त्रिसृभिश्शुद्धिर्जङ्घाशुद्धिश्च पञ्चभिः ॥ ६ ॥
नियोजयोत्ततो विप्र कट्यां वै सप्तमृत्तिकाः ।
स्वदेहस्वेददोषघ्नं बाह्यकर्दमशान्तये ॥ ७ ॥
भक्तानां श्रोत्रियाणां च वर्षास्वेवं निरूपितम् ।
प्रावृट्स्वुक्तात्तदेतस्मादेकमृद्व्यपनोदनम् ॥ ८ ॥
शरद्ग्रीष्मवसन्तेषु नित्यं कार्या क्रियापरैः ।
एतस्मादपि चैकैका परिलोप्या तु मृत्तिका ॥ ९ ॥
हेमन्ते शिशिरे विप्र श्रोत्रियैः संयमस्थितैः ।
पथि शौचं प्रकर्तव्यं देशकालानुरूपतः ॥ १० ॥
गन्धलेपमपास्यैवं मनश्शुद्ध्या विशुध्यति ।

[ स्नानार्थं मृत्संग्रहणम् ]

एवं कृत्वा पुरा शौचं समाचम्य ततः खनेत् ॥ ११ ॥
शङ्कुना ह्यस्त्रजप्तेन शुचिस्थानात्तु मृत्तिकाम् ।
गृहीत्वाऽस्त्रेण सङ्गृह्य यायाज्जलनिकेतनम् ॥ १२ ॥

[ स्नानविधिः ]

तत्रादौ जलकूलं तु क्षालयेदस्त्रवारिणा ।
मृदः कृत्वा द्विधा स्थाप्य एक भागोपगं ततः ॥ १३ ॥
निधाय गोमयं दर्भांस्तिलास्त्रानभिमन्त्रितान् ।
लौकिकं गोमयाढ्येन भागेन [ स्नानमाचरेत् ] ॥ १४ ॥
तत(तच्च ? )स्नानं पुरा कृत्वा विधिस्नानं समाचरेत् ।

[ विधिस्नाने क्रमः ]

विधिस्नाने तु मृद्भागो यस्तं कुर्याद्द्विधा पुनः ॥ १५ ॥
पादादि क्षाल्यमेकेन पूर्ववत्क्रमयोगतः ।
पाणिप्रक्षालनं कृत्वा विनिमज्ज्य जलान्तरे ॥ १६ ॥

[ स्नानाङ्गमन्त्रन्यासमुद्राबन्धौ ]

समुत्थाय न्यसेन्मन्त्रं षडङ्गं विग्रहे स्वके ।
मन्त्रन्यासं ततः कुर्यान्मुद्राबन्धं च कारयेत् ॥ १७ ॥
कीटाद्यशुचिसम्पर्काज्जलस्यावहतो द्विज ।
वहतोऽप्युद्धृतस्यापि शुद्धिरेवं भवेत्पुरा ॥ १८ ॥
निर्मलं वारुणं विप्र चन्द्रार्ककरतापितम् ।
यद्यपि स्यात्तथा नैवं सम्यक्शास्त्रे क्रियाक्रमे ॥ १९ ॥

[ पवित्रधारणम् ]

त्रिपञ्चसप्तकाण्डोत्थं द्रढिमग्रन्थिसंयुतम् ।
पवित्रकद्वयं दार्भमस्त्रमन्त्राभिमन्त्रितम् ॥ २० ॥
हस्तद्वयेऽपि निक्षिप्य अनामाङ्गुळ्योरधः ।

[ वामपाणौ मूलादिस्थानभेदेन त्रेधा विभक्ताया मृदः क्रमेणास्त्रादित्रयेणाभिमन्त्रणम् ]

सावशेषां मृदं शेषां कृत्वाऽऽदायास्त्रमुच्चरन् ॥ २१ ॥
तां तथा वामपाणौ तु मूलमध्याग्रतो भजेत् ।
सास्त्रेण मूलमन्त्रेण जपेदङ्गैरनुक्रमात् ॥ २२ ॥

[ तत्रास्त्राभिमन्त्रिताया विनियोगः ]

अस्त्रजप्तां मृदं गृह्य क्षिपेद्दिक्षु विदिक्षु च ।
अध ऊर्ध्वे च तन्मन्त्रं (न्त्र ?) मुद्राबन्धेन संयुतम् ॥ २३ ॥
तेन स्नानहरा विघ्ना दिग्विदिक्परिसंस्थिताः ।
प्रयान्ति वि[1]ह्वलीभूता यावत्तन्नोपसंभृ[2]तम् ॥ २४ ॥

[ मूलमन्त्रिताया मृदो विनियोगः ]

मृद्भागो मूलमन्त्रेण मन्त्रितो यः पुरा स्थितः ।
तमुच्चरंस्तमादाय तोयमध्ये विनिक्षिपेत् ॥ २५ ॥
तेन तत् द्विजशार्दूल तत्क्षणादेव जायते ।
गङ्गातोयेन संपूर्ण यामुनेन जलेन च ॥ २६ ॥
प्रायागं चक्रतीर्थं च प्रभासं पुष्कराणि च ।
भवन्ति सन्निधीभूता मन्त्रस्यास्य प्रभावतः ॥ २७ ॥
ततो वै विष्णुतीर्थाय मन्त्रान्ते पदमुच्चरेत् ।

1 विफली A. 2 हृ CL.

सनमस्कं भवेत्तेन विष्णुतीर्थस्य सन्निधिः ॥ २८ ॥

[ तीर्थान्तरे केवलमूलमन्त्रमात्रयोजनम् ]

अन्यतीर्थे यदा स्नानं कुर्यात्तत्र च योजयेत् ।
केवलं मूलमन्त्रं तु विष्णुतीर्थपदं विना ॥ २९ ॥
तीर्थान्तरेष्विदं नाम न सङ्कीर्तयते सुधीः ।
सन्निधाने हि तीर्थस्य यद्यन्यामभिधां स्मरेत् ॥ ३० ॥
स्नातकस्तस्य तत्तीर्थमभिशप्य क्षणं व्रजेत् ।
निर्जराम्बुतटाकादौ सामान्यस्नानकर्मणि ॥ ३१ ॥
गङ्गादीनां नदीनां च तीर्थानां च प्रकीर्तितम् ।
मान्त्रे स्नानक्रमे सम्यग्विष्णुतीर्थाय कीर्तयेत् ॥ ३२ ॥

[ अङ्गमन्त्राभिमन्त्रितस्य मृद्भागस्य विनियोगः ]

ततोऽङ्गमन्त्रजप्तं च भागं पाणितले स्थितम् ।
तोयेनालोड्य मच्चूर्णं तापयेदर्करश्मिभिः ॥ ३३ ॥
मेघच्छन्ने स्वकं मन्त्रं सूर्यवत्खस्थितं स्मरेत् ।
दर्शयित्वा करे तस्य ताभ्यां सर्वाङ्गकं स्पृशेत् ॥ ३४ ॥

[ तीर्थस्य परमीकरणप्रकारः ]

धारणाद्वि[1]तयेनाथ तीर्थस्य सजलस्य च ।
परमीकरणं कुर्याद्विधिदृष्टेन कर्मणा ॥ ३५ ॥
आधारशक्तेरारभ्य सङ्कल्पविषयावधि ।
वह्निना पूरयेत्सर्वं ज्वालामालाविलेन च ॥ ३६ ॥
निरम्मयं जगत्कृत्वा तीर्थं शान्ततनु स्मरेत् ।
शान्ते संविन्मये विष्णौ भूयस्तदवतार्य च ॥ ३७ ॥
निशाम्बुकणसङ्काशमियत्ताकलितं पुरा ।
स्मृत्वा शक्तिप्रभावेन ब्रह्मस्रोतो विनिर्गतम् ॥ ३८ ॥
धाराकल्लोलसङ्कीर्णं पतमानं तु वेगतः ।
आब्रह्मभवनं सर्वं पूरयेच्छशिसन्निभम् ॥ ३९ ॥
त्रिलोकनपदैश्शश्वत्सङ्कुष्टं तं तु भावयेत् ।
समस्ते प्राक्स्वरूपेण तन्मध्ये त्वासनं प्रभोः ॥ ४० ॥
दत्वा तदुपरि ब्रह्मन् स्मरेन्नारायणं प्रभुम् ।

---

1 ज A.

चन्द्रकोटिसमं शुद्धसुधाधारागणावृतम् ॥ ४१ ॥
साहंशक्तिसमूहाढ्यं प्रोद्गिरन्तं सुधारसम् ।
एवं कृते सति भवेत्तीर्थं नारायणात्मकम् ॥ ४२ ॥
निमज्जनं ततः कुर्यादुन्मज्जनसमन्वितम् ।
गन्धैस्सामलकैर्हृद्यैः पवित्रैर्विविधैः शुभैः ॥ ४३ ॥
चक्रवर्त्युपचारेण मन्त्री स्नायादतन्द्रितः ।

[ अथ स्नानोत्तराङ्गविधिः ]

ततश्चान्तर्जलस्थश्च स्मरेन्मन्त्रं स्वशक्तितः ॥ ४४ ॥
भास्वद्भास्वररूपोऽसौ उदेति हृदयान्तरे ।
हृदयादग्रतश्चान्ते द्वादशान्तेन दूरतः ॥ ४५ ॥
परमं पुरुषं दृष्ट्वा प्रत्यक्षस्थं तु नारद ।
समुत्थाय जलात्पश्येद्गगनस्थं तमेव हि ॥ ४६ ॥
ततोऽप्सु तारमासाद्य उपविश्य यथासुखम्
न्यसेदङ्कुशमुद्राग्रे हृन्मन्त्रं सितविग्रहम् ॥ ४७ ॥
स्वेनानिलेन संयुक्तं रेचयेत्तीर्थमध्यतः ।
पूरकेण समाकृष्य मुद्रायुक्तेन तत्पुनः ॥ ४८ ॥
एवञ्चोपगतं तीर्थं पुरा कृत्वा तु नारद ।
प्रणवेनोपचाराख्यहृदयेनाचमेत्ततः ॥ ४९ ॥
सुप्रसन्नेन तोयेन जान्वन्तस्थेन पाणिना ।
एकेन पाद्यमन्त्रेण सोपचारहृदा द्विज ॥ ५० ॥
ध्यात्वा तत्र स्थितं देवं साङ्गं सपरिवारकम् ।
जप्यमानश्च मन्त्रोऽयमुपस्थानं तु कारयेत् ॥ ५१ ॥
प्रणवेन[1] ततस्सर्वान्पितृदेवांश्च तर्पयेत् ।
तिलमिश्रेण विधिवत्सन्त्यजेत्स्नानकर्पटम् ॥ ५२ ॥
सुधौतं परिधायाथ वस्त्रयुग्ममखेददम् ।
अथवा तदधश्शाटीं योगपट्टकसंयुताम् ॥ ५३ ॥
नैकवस्त्रेण वै यस्माद्भवितव्यं कदाचन ।
स्थानेऽस्त्रशोधितेऽन्यस्मिन्ननन्तासनसंस्थितम् ॥ ५४ ॥

1 भं A.

आधारमासनं ध्यात्वा जलमध्येऽच्युतस्य च ।
मन्त्रग्रामसमोपेतमाहूय विनिवेश्य तम् ॥ ५५ ॥
तर्पयेदुदकेनैव विष्वक्सेनावसानकम् ।
स्वेन स्वेन तु मन्त्रेण पाणिभ्यामग्रतः क्रमात् ॥ ५६ ॥
देवताश्च मुनीन्नागान् ग्रहभूतवियच्चरान् ।
सन्तर्प्य स्थावरान्तांश्च स्ववंशं तर्पयेत्क्रमात् ॥ ५७ ॥
व्रजन्तं सासनं देवं जलमध्यात्ततस्स्मरेत् ।
तीर्थशुद्धौ पुरा मन्त्रो न्यस्तोऽसावपि दिक्षु वै ॥ ५८ ॥
प्रेरयन्पूर्ववद्देवान्प्राणाग्रेणानिलं[1] द्विज ।
तमेकीकृत्य वै तेन त्यक्त्वा तोयं तु शुक्रवत् ॥ ५९ ॥
आपूर्य हृदि विन्यस्येत् सोपसंहारमुद्रया ।
इत्युक्तमौदकं स्नानमथ मान्त्रं निबोध मे ॥ ६० ॥

[ मन्त्रस्नानम् ]

तोयाभावे च यत्कुर्याद्दुर्गे काले च शीतले ।
गमने क्षिप्रसिद्धौ वा गुरुकार्ये स्वतन्त्रताम् ॥ ६१ ॥
प्राप्तां वा वीक्ष्य विप्रेन्द्र निशाभागे दिनस्य वा ।
प्रक्षाल्य पादावाचम्य प्रोद्धृतेन तु वारिणा ॥ ६२ ॥
[2]स्नानं दश दिशः प्राग्वत्संशोध्योपविशेत्ततः ।
अस्त्रं हस्ततले योज्यं क्रमान्न्यासं ततस्तनौ ॥ ६३ ॥
मूलमन्त्रादि तत्कुर्यात्सर्वमन्त्रगणेन तु ।
केवलादुदकस्नानात्संस्कारपरिवर्जितात् ॥ ६४ ॥
प्रभासादिषु तीर्थेषु यत्फलं स्नातकस्य च ।
ज्ञेयं शतगुणं तस्मान्मन्त्रग्रामस्य नारद ॥ ६५ ॥

[ ध्यानस्नानम् ]

ध्यानस्नानमथो वक्ष्ये द्वाभ्यामपि परं तु यत् ।
खस्थितं पुण्डरीकाक्षं मन्त्रमूर्त्तिं प्रभुं स्मरेत् ॥ ६६ ॥
तत्पादोदकजां धारां पतमानां स्वमूर्धनि ।
चिन्तयेद्ब्रह्मरन्ध्रेण प्रविशन्तीं स्वकां तनुम् ॥ ६७ ॥
तया संक्षालयेत्सर्वमन्तर्देहगतं मलम् ।

---

1 न्या C. L. 2 स्था A.

तत्क्षणाद्विरजा मन्त्री जायते स्फटिकोपमः ॥ ६८ ॥
इदं स्नानं परं मान्त्रात्स्नानाच्छतगुणं स्मृतम् ।
तस्मादेकतमं कार्यं स्नानं श्रद्धापरेण तु ॥ ६९ ॥
स्नानपूर्वाः क्रियास्सर्वा यतस्सम्यक्फलप्रदाः ।
तस्मात्स्नानं पुरा कुर्याद्य इच्छेच्छ्रेय आत्मनः ॥ ७० ॥
स्नानेन निर्मलो जन्तुः कृतमात्रेण जायते ।
द्विजेन्द्र निर्विवेकात्मा किं पुनर्यः क्रियापरः ॥ ७१ ॥
वर्णधर्मक्रमोपेतस्साधुमार्गव्यवस्थितः ।

इति श्री पाञ्चरात्रे जयाख्यसंहितायां स्नानविधिर्नाम नवमः पटलः ।

---

अथ समाधिख्यापन नाम दशमः पटलः ।

[ ध्यानार्थं निर्जनस्थान प्रति गमनम् ]

श्रीभगवान्—

सास्त्रं दूर्वाङ्कुरं दत्वा पुष्पं पत्रं तिलांस्तु वा ।
सोदकान्[1]आत्मनो मूर्ध्नि शिखास्थाने च नारद ॥ १ ॥
ततश्चोदकसम्पूर्णं भाण्डमादाय पाणिना ।
एकान्तनिर्जनं यायान्मनोज्ञं दोषवर्जितम् ॥ २ ॥
हृन्मध्यस्थं स्मरे(र?)न्मन्त्रं प्रबुद्धानलविग्रहम् ।
दिगन्तरमवीक्षन्वै मौनी संरोधितानिलः ॥ ३ ॥

[ स्थानप्राप्तिसमये कर्तव्यांशः ]

प्राप्य स्थानं स्वमन्त्रं तु नासाग्रेण विरेचयेत् ।
बहिरस्त्रं च विन्यस्य चरणेन हनेत्क्षितिम् ॥ ४ ॥
मन्त्रपूर्वं स्मरेद्विष्णुं सकलं गरुडासनम् ।

[ दर्भाद्यासनविकल्पः ]

एकदेशं समासाद्य बध्नीयाद्रुचिरासनम् ॥ ५ ॥
दर्भे चर्मणि वस्त्रे वा फलके यज्ञकाष्ठके ।

[ गुरुस्मरणपूर्वकमानसक्रियानिर्वहणम् ]

अभिवन्द्य हरिं भक्त्या मनसा गुरुसन्ततिम् ॥ ६ ॥
गृहीत्वा मानसीमाज्ञां तेभ्यस्तु शिरसा नतः ।
मानसीं निर्वहेत्सर्वां क्रियां विप्र यथास्थिताम् ॥ ७ ॥

---

1 न्या C. L.

[ आसनशुद्धिः ]

मूलमन्त्राभिजप्तेन तोयेन प्रोक्ष्य चासनम् ।
च्छोटिकां मन्त्रसंयुक्तां दद्यात्तच्छुद्धये पुनः ॥ ८ ॥

[ करशुद्धिः ]

हस्तशुद्धिं ततः कुर्याद्यथा तच्छृणु नारद ।
द्वे तले हस्तपृष्ठे द्वे सर्वाश्चाङ्गुलयस्तथा ॥ ९ ॥
अस्त्रमन्त्रेण संशोध्य ध्यानोच्चारप्रयोगतः ।
कृत्वैवं करशुद्धिं च स्थानशुद्धिं समाचरेत् ॥ १० ॥

[ स्थानशुद्धिः ]

ध्यात्वा देवं ज्वलद्रूपं सहस्रार्कसमप्रभम् ।
ज्वालाकोटिसमाकीर्णं वमन्तं ज्वलनं मुखात् ॥ ११ ॥
तेन संपूरयेत्सर्वमाब्रह्मभुवनान्तिमम् ।
दिगोघं प्रज्वलन्तं च भावयेन्मन्त्रतेजसा ॥ १२ ॥
क्ष्मामण्डलमिदं सर्वं स्मरन्पक्वं च वह्निना ।
मन्त्रजेन द्विजश्रेष्ठ मृण्मयं भाजनं यथा ॥ १३ ॥
स्थानशुद्धिर्भवत्येवं सुधाकल्लोलसेचनात् ।
भूतशुद्धिं शृणु मुने यथावदनुपूर्वशः ॥ १४ ॥

[ भूतशुद्धिप्रकरणम् ]

पृथ्व्यप्तेजोनिलाकाशं शरीरं भूतपञ्चकम् ।
इन्द्रजालोपमं विद्धि ज्ञानाद्यैरुज्झितं गुणैः ॥ १५ ॥
मलिनश्चास्वतन्त्रं च रेतोरक्तोद्भवं क्षयि ।
यावन्न शोधितं सम्यक् धारणाभिर्निरन्तरम् ॥ १६ ॥
तावदेतदयोग्यं स्यान्मन्त्रन्यासादिवस्तुषु ।

[ पृथिव्यादिभूतानां बीजानि ]

शङ्करश्चाग्निरूपश्च [1]सोमः सूर्यस्तदन्तकः ॥ १७ ॥
वर्णपञ्चकमेतद्वै युक्तं कुर्यात्क्रमेण तु ।
धरेशेन वराहेण अनलेनाथ कम्बुना ॥ १८ ॥
प्रधानेन द्विजश्रेष्ठ सर्वेषां योजयेत्ततः ।
त्रैलोक्यैश्वर्यदोपेतमादिदेवं च मूर्धनि ॥ १९ ॥

---

1 सोमसूर्यावनन्तकः A.

पृथ्वीकाग्निमरुद्व्योमबीजान्येतान्यनुक्रमात् ।
पृथ्व्यादिसंज्ञायुक्तानि हुंफडन्तानि नारद ॥ २० ॥
प्रागोङ्कारेण युक्तानि भूतशुद्धौ त्रिधोच्चरेत् ।
भूतेश्वराणां पञ्चानां परत्वेन क्रमात्स्थिताः ॥ २१ ॥

[ पृथिव्यादिभूतानां देवताः ]

अनिरुद्धादयः पञ्च सत्यपूर्वाः पुरोदिताः ।
शक्तित्वेन च वर्तन्ते तैश्च तान्व्याहरेत्क्रमात् ॥ २२ ॥

[ पृथिव्यादिमहाभूताना स्वविग्रहे प्रवेशन–तद्व्यापन–तद्विलयनप्रकाराः ]

सौषुम्नाद्दक्षिणद्वारान्निर्गमय्य हरिं बहिः ।
सहस्ररविसङ्काशं वृत्तमण्डलमध्यगम् ॥ २३ ॥
तप्तकाञ्चनवर्णाभमासीनं परमे पदे ।
मन्त्रात्मानं तु तं ध्यात्वा ह्युपरि द्वादशाङ्गुले ॥ २४ ॥
प्रभाचक्रं तु तदधस्तत्त्वाधिष्ठातृसंयुतः ।
निष्कलं मन्त्रदेहं तु ध्यात्वा तु तदधः क्रमात् ॥ २५ ॥

[ तत्रादौ पृथिवीतत्त्वनिलयनम् ]

तुर्यश्रां पीतभां भूमिं चिन्तयेद्वज्रलाञ्छिताम् ।
शब्दाद्यैः पञ्चभिर्युक्तां नगद्रुमसमाकुलाम् ॥ २६ ॥
पुरप्राकारसुसरिद्द्वीपार्णवपरिष्कृताम् ।
संविशन्तीं स्मरेद्बाह्यात्पूरकेण स्वविग्रहे ॥ २७ ॥
प्रोच्चारयंश्च तन्मन्त्रं विश्रान्तामथ चिन्तयेत् ।
जान्वोः पादतलं यावत्तया व्याप्तं क्रमेण तु ॥ २८ ॥
कुम्भकेन द्विजश्रेष्ठ मन्त्रमूर्तौ स्वके ततः ।
शनैः शनैर्लयम् यातां गन्धशक्तौ च मन्त्रराट् ॥ २९ ॥

[ जलतत्त्वनिलयनम् ]

गन्धशक्तिं च तां पश्चाद्रेचकेन बहिःक्षिपेत् ।
तोयाख्ये च महाधारे ततस्तोयं च वैभवम् ॥ ३० ॥
समुद्रससरित्स्रोतो रसषट्कं च सौषधीः ।
यानि यान्यम्बुभूतानि भूतानि भुवनान्तरे ॥ ३१ ॥
अर्धचन्द्रसमाकारं कमलध्वजशोभितम् ।
वारुणं विभवं बाह्ये ध्यात्वा तेनाथ विग्रहम् ॥ ३२ ॥

संपूर्य पूरकाख्येन करणेन शनैश्शनैः ।
ऊरुमूलाच्च जान्वन्तं शरीरं मण्डलं स्वकम् ॥ ३३ ॥
तेनाखिलं तु संव्याप्तं कुम्भकेन स्मरेद्द्विज ।
तन्मध्ये वारुणं मन्त्रं धारणाख्यं विचिन्त्य च ॥ ३४ ॥
अम्मयं विभवं सर्वं तन्मध्ये विलयं गतम् ।
ततस्तं रसशक्तौ च सा शक्तिर्वह्निमण्डले ॥ ३५ ॥

[ तेजस्तत्त्वनिलयनम् ]

रेचकेन विनिक्षिप्य ततो वान्हं च वैभवम् ।
त्रिकोणभुवनाकारं दीप्तिमद्भिर्विभूषितम् ॥ ३६ ॥
विद्युचन्द्रार्कनक्षत्रमणिरत्नैश्च धातुभिः ।
स्वप्रकाशशरीरैस्तु अशरीरैश्च खेचरैः ॥ ३७ ॥
चिन्हितं स्वस्तिकैर्दीप्तैर्व्याप्यैवं विभवं महत् ।
तैजसं मुनिशार्दूल तन्मात्रं चाथ संस्मरेत् ॥ ३८ ॥
तन्मण्डलान्तरस्थं तु प्रोच्चरन्वै तमेव हि ।
प्रविष्टं पूर्ववद्ध्यायेत्तेनैव करणेन तु ॥ ३९ ॥
आनाभेः पायुपर्यन्तं व्याप्तं कृत्वाऽवधार्य[1] च ।
तं विप्र विभवं सर्वं तैजसं परिभावयेत् ॥ ४० ॥
तन्मन्त्रविग्रहे श्रान्तं मन्त्रं तच्चानलात्मकम् ।
रूपशक्तौ लयं यातं शक्तिस्संविन्मयी च सा ॥ ४१ ॥

[ वायुतत्त्वनिलयनम् ]

तया मन्त्रशरीरं स्वं स्वशक्त्या विलयीकृतम् ।
रेचकेन कृतां शक्तिं वाय्वाधारे बहिः क्षिपेत् ॥ ४२ ॥
ततस्तु वायवीयं वै वैभवं बाह्यतः स्मरेत् ।
वृत्तं राजोपलाभं तु बिम्बैर्युक्तं तु तैजसैः ॥ ४३ ॥
पूर्णं नानाविधैर्गन्धैरनेकैस्तद्गुणैस्तथा ।
स्वमन्त्रेण समाक्रान्तं धारणाख्येन तं स्मरेत् ॥ ४४ ॥
तथा स्वरूपं तन्मन्त्रं ध्यात्वोच्चार्य समाहरेत् ।

---

1 पिधाय A.

पूर्वोक्तकरणेनैवं घ्राणाग्रेण शनैश्शनैः ॥ ४५ ॥
आकण्ठान्नाभिदेशान्तं तेन व्याप्तं तु भावयेत् ।
प्रागुक्तकरणेनैव वायव्यं विभवं ततः ॥ ४६ ॥
अधिष्ठातृलयं यातं स्मृत्वा तं च महामुने ।
स्पर्शाख्यायां महाशक्तौ तां शक्तिमविनश्वरीम् ॥ ४७ ॥

[ आकाशतत्त्वनिलयनम् ]

व्याप्तां नित्यामदृश्यां च स्वशक्तिविभवान्विताम् ।
शब्दाख्ये तु महाधारे निक्षिपेद्व्योममण्डले ॥ ४८ ॥
ध्यात्वाऽथ विभवं सर्वं व्योमाख्यं विग्रहाद्बहिः ।
नानाशब्दसमाकीर्णं नीरूपं चाञ्जनप्रभम् ॥ ४९ ॥
अविग्रहैश्शब्दमयैः [1]पूर्णं सिद्धैरसङ्ख्यकैः ।
तन्मध्ये धारणामन्त्रं व्योमाख्यं संस्मरेद्द्विज ॥ ५० ॥
धारयन्तं स्वमात्मानं स्वसामर्थ्येन सर्वदा ।
शब्दमत्रामरूपं तु व्यापकं विभवेष्वपि ॥ ५१ ॥
धिया च संपरिच्छन्नं कृत्वा विन्यस्य विग्रहे ।
प्रागुक्तकरणेनैव तेन व्याप्तं तु भावयेत् ॥ ५२ ॥
आकर्णाद्ब्रह्मरन्ध्रान्तं व्योमाख्यं विभवेन च ।
सन्धार्य कुम्भकेनैव यावत्कालं तु योगिना ॥ ५३ ॥
ध्यायेत्परिणतं पश्चात्स्वमन्त्रे तु तथा मुने ।
व्योमाख्यं धारणामन्त्रं शब्दशक्तौ लयं गतम् ॥ ५४ ॥

[ शब्दशक्तेः क्रमात् गन्धादिशक्तिनिलयनास्पदभूताया निष्कलेऽनुप्रवेशभावनम् ]

तां शक्तिं ब्रह्मरन्ध्रेण प्रयान्तीमनुभावयेत् ।
युक्तां शक्तिचतुष्केण गन्धाद्येनाविनश्वरीम् ॥ ५५ ॥
आश्रयेन्निष्कळं मन्त्रं व्योमातीतं निरञ्जनम् ।
शक्तयो याश्च सत्याद्यास्तासामपि परश्च यः ॥ ५६ ॥
षट्कं (ष्ठं ?) तं निष्कळं विद्धि व्याप्तिः प्रागुदिताऽस्य च ।
समस्तं विभवं भौतमेवमस्तं नयेत्क्रमात् ॥ ५७ ॥

1 पूर्व CL.

[ जीवस्य पदात्पदान्तरप्रापणक्रमेण देहात् स्थूलात् प्रभाचक्रविशेषप्रापणेन कैवल्यस्थितिप्रापणम् ]

चैतन्यं जीवभूतं यत्प्रस्फुरत्तारकोपमम् ।
भावनीयं तु विश्रान्तं निस्सृतं भूतपञ्जरात् ॥ ५८ ॥
निष्प्रपञ्चे परे मन्त्रे पञ्चशक्त्याख्यविग्रहे ।
अनेन क्रमयोगेन जीवमात्मानमात्मना ॥ ५९ ॥
इक्षते(क्षेत?) तद्धृदाकाशे अचलं सूर्यवर्चसम् ।
स्फुरद्द्युतिसमाकीर्णमीश्वरं व्यापकं परम् ॥ ६० ॥
ततो मन्त्रशरीरस्थं समाधिं चाभ्यसेत्परम् ।
परं मन्त्रशरीरं यद्वचक्तमक्षरसन्ततौ ॥ ६१ ॥
सूर्यादिव्योमपर्यन्तमतीतं शक्तिकारणैः ।
हेयं चेत्थमिदं बुध्वा यदा तत्स्थानबृंहितः ॥ ६२ ॥
अतृप्तोऽकृतकृत्यश्च मन्त्रहृत्पद्मसेवनात् ।
षट्पदी(?)ह्यात्मतत्त्वं च ज्ञानरज्वाऽवलंब्य च ॥ ६३ ॥
हृत्कोटरोर्ध्वान्निर्यान्तं स्वात्मानं स्वात्मना स्मरेत् ।
भारूपान्नाडिमार्गेण मन्त्रवह्नेश्शिखा हि सा ॥ ६४ ॥
पद्मसूत्रप्रतीकाशा सुषुम्ना चोर्ध्वगामिनी ।
तद्ब्रह्मरन्ध्रगां स्मृत्वा सुपथा तेन नारद ॥ ६५ ॥
शनैश्शनैस्स्वमात्मानं रेच्य विज्ञानवायुना ।
मान्त्रं कारणषट्कं च एवमव्यापकं न्यसेत् ॥ ६६ ॥
प्राप्नुयाच्च तदूर्ध्वात्तु यः परात्प्रभुविग्रहात् ।
उदितं (तो ?) द्विजशार्दूल तेजःपुञ्जो ह्यनूपमः ॥ ६७ ॥
तत्प्रभाचक्रनाभिस्थं स्वानन्दानन्दनन्दितम् ।
एवं पदात्पदस्थस्य आत्मतत्त्वस्य नारद ॥ ६८ ॥
तत्त्व(स्य ?)निर्मुक्तदेहस्य केवलस्य चिदात्मनः ।
य उदेति महानन्दः सा शक्तिर्वैष्णवी परा ॥ ६९ ॥
अलुप्तकर्मकर्तारं जीवं कृत्वा तमात्मसात् ।
यत्रोदिता च तत्रैव पुनरेवावतिष्ठते ॥ ७० ॥
तच्च( तं च ? ) सङ्कल्पनिर्मुक्तमवाच्यं विद्धि नारद ।

[ व्यक्ततया भावितस्यास्य भौतिकदेहस्य प्रज्वालन–भस्मीकरणभावनम् ]

एवं स्वस्थानमासाद्य त्यक्त्वा भौतं च विग्रहम् ॥ ७१ ॥
तत्र स्थितो देहपिण्डं शक्तितन्मात्रवर्जितम् ।
षाट्कौशिकमसारं च निर्दग्धतृणरूपिणम्[1] ॥ ७२ ॥
इच्छानिर्मथनोत्थेन मन्त्रजेन तु वह्निना ।
अशेषभुवनाधारं चतुर्गतिसमन्वितम् ॥ ७३ ॥
लोकेशोपरिसंस्थं च व्योम्नि तस्योपरि न्यसेत् ।
प्रणवादिनमोऽन्तं च इच्छाग्नेर्वाचकः स्वयम् ॥ ७४ ॥
तेनाङ्घ्रिदेशादारभ्य तं पिण्डं ज्वलितं स्मरेत् ।
भस्मराशिसमप्रख्यं शान्ताग्निं तदनु द्विज ॥ ७५ ॥
साह्लादेन च सूक्ष्मेण व्यापिनोङ्कारपूर्विणा ।
नमोऽन्तेन तु तद्भस्मपातं ध्यात्वाऽन्वितस्ततः ॥ ७६ ॥

[ भस्मावशेषतया भावितस्य समाप्लावनभावना ]

ध्यानजेनोदकेनाथ भूतिं संप्लाव्य दिग्गताम् ।
विनिपातात्स्वमन्त्रेण सिक्तेन क्षीररूपिणा ॥ ७७ ॥

[ अथापूर्वतेजोमयशरीरसृष्टिभावनाक्रमः ]

वराहममृतारूढं त्रैलोक्यैश्वर्यदान्वितम् ।
दीपकं द्वितयेनैतत्संपुटीकृत्य पूर्ववत् ॥ ७८ ॥
तेन क्षीरार्णवाकाराद्ध्यायेद्विश्वं चराचरम् ।
पात्यमानं तदूर्ध्वे तु धारासङ्घो द्विजामृतः ॥ ७९ ॥
तुर्यस्थानाद्विनिष्क्रान्तो भावनीयो मुहुर्मुहुः ।
तत्राधारमयीं शक्तिं मध्ये विन्यस्य वैष्णवीम् ॥ ८० ॥
बीजभूतां च सर्वस्य तदुत्थं चाम्बुजं स्मरेत् ।
षडध्वतत्त्वभूतं च सितं तेजोमयं शुभम् ॥ ८१ ॥
मण्डलत्रितयाकीर्णं स्फुरत्किरणभास्वरम् ।
मन्त्रात्मानं च तन्मध्ये ध्यायेन्नारायणं प्रभुम् ॥ ८२ ॥
निष्कलं केवलं शुद्धं पञ्चसन्मन्त्रविग्रहम् ।
तन्मन्त्रशक्तिभिर्भूयो मूर्च्छितं भावयेद्द्विज ॥ ८३ ॥
व्योमादिपञ्चभूतीयं मन्त्रमीश्वरपञ्चकम् ।

---

1 निर्दण्ड S.

तेभ्योऽथ प्रसरन्तं च व्योमाद्यं विभवं स्मरेत् ॥ ८४ ॥
संयोगजनितं पिण्डं ध्यायेद्विभवपञ्जरात् ।
सहस्रसूर्यसङ्काशं शतचन्द्रगभस्तिमत् ॥ ८५ ॥
निर्मलस्फटिकप्रख्यं जरामरणवर्जितम् ।
जनित्वैवं सपिण्डं तु परमं भोगमोक्षयोः ॥ ८६ ॥
साधनं मुनिशार्दूल सहजं सर्वदेहिनाम् ।
तमासाद्य क्रमेणैवं सिसृक्षालक्षणेन च ॥ ८७ ॥
स्वपादान्निस्तरङ्गाच्च कृत्वा शक्त्या सहोदयम् ।

[ जीवस्य सृष्टे शरीरे प्रवेशनक्रमः ]

स्वानन्दं [1]च महानन्दात्स्वन[2]न्ताच्चाश्रयेत्ततः ॥ ८८ ॥
मारीचं नाभसं चक्रं तस्माद्रूपं स्वकं च यत् ।
सूर्यकोटिकराभासं प्रस्फुरन्तं स्वभाससा ॥ ८९ ॥
कदम्बगोळकाकारं निशाम्बुकणनिर्मलम् ।
एवमात्मानमानीय स्वस्थानात्स्वात्मना द्विज ॥ ९० ॥
विशेन्मन्त्रशरीरं स्वं ब्रह्मरन्ध्रेण पूर्ववत् ।
ज्योत्स्नानाडीपथेनैव पुर्यष्टककजान्तरम् ( ? ) ॥ ९१ ॥
स्ववाचकं भावयन्वै ध्वनिना निष्कळेन तु ।

[ आत्ममन्त्रः ]

अशेषभुवनाधारं विश्वाप्यायकरेण तु ॥ ९२ ॥
अङ्कयेदमृताख्यं च तदन्ते चात्मने नमः ।
स तारकस्त्वयं मन्त्रो विज्ञेयो ह्यात्मवाचकः ॥ ९३ ॥
ततस्तु निष्कळो मन्त्रो यावद्भानुं च विग्रहः ।
पञ्चकं चाभिमानं तु आसाद्यालोकविग्रहम् ॥ ९४ ॥
स्वमन्त्रादमृतौघेन सेचयेद्विग्रहं स्वकम् ।
ततस्स्वतन्त्रं तं बिम्बमाकृष्य हृदि विन्यसेत् ॥ ९५ ॥
निस्तरङ्गा परा शक्तिर्महानन्दमयी च सा ।
स्वानन्दाच्च प्रभाचक्रं रूपमात्मीयभास्वरम् ॥ ९६ ॥
सौषुम्नस्तादृशो मार्गः पिण्डमन्त्रश्च निष्कळः ।

---

1 चिन्म A. 2 त्स्वानन्दा A.

शक्त्याद्यो मन्त्रसङ्घोऽथ धारणेश्वरपञ्चकम् ॥ ९७ ॥
तेषां विभवसङ्घो यः पिण्डस्तत्सामुदायिकः ।
स्मरेज्ज्वालीकृतं सर्वमपृथक्च पृथक् स्थितम् ॥ ९८ ॥
स्थूलसूक्ष्मपराख्येन त्रिविधेन तु नारद ।
करणेनोदिता सम्यक्शुद्धिरेषा च भौतिकी ॥ ९९ ॥
भक्तस्त्वं भावितात्मा च स्थिरबुद्धिरतन्द्रितः ।
प्रियोऽपि मे यथा तेन सरहस्या प्रकीर्तिता ॥ १०० ॥
यथा त्वं मयि विप्रेन्द्र त्वय्येवं यो भविष्यति ।
तस्येदं प्रकटीकुर्यान्नेतरस्याधरस्य च ॥ १०१ ॥
परं भवहर पुण्यं समाधिं भूतशुद्धिदम् ।
केवलं यस्समभ्यस्येत्स याति ब्रह्म शाश्वतम् ॥ १०२ ॥
अनेन किं पुनर्विप्र चित्तं विग्रहसंयुतम् ।
संस्तुत्य यो यजेद्देवं भावितात्मा प्रसन्नधीः ॥ १०३ ॥

इति श्रीपाञ्चरात्रे जयाख्यसंहितायां समाधिख्यापनं नाम दशमः पटलः ।

---

अथ मन्त्रन्यासविधिर्नाम एकादशः पटलः ।

संशुद्धविग्रहो मन्त्री मन्त्रन्यासं समाचरेत् ।
येन विन्यस्तमात्रेण[1] देवदेवसमो भवेत् ॥ १ ॥
पूजादौ सर्वकार्याणामधिकारश्च जायते ।
भवेद्वै सर्वसिद्धीनामाविर्भावस्तु येन च ॥ २ ॥
यं कृत्वा निर्भयस्तिष्ठेद्देशे दुष्टसमाकुले ।
विजयश्चापमृत्यूनां स्याद्येन विहितेन च ॥ ३ ॥

[ आसनपरिकल्पनम् ]

क्षितावुपरि विन्यासं यत्पुरा [2]फलकोदितम् ।
तस्मिंश्चोपरि विन्यासं समुद्रं पद्मसंयुतम् ॥ ४ ॥
स्वेन स्वेन तु मन्त्रेण ध्यानयुक्तेन यत्नवान् ।
तार्क्ष्यं चैव ततो न्यस्य ध्यात्वा चोपविशेत्ततः ॥ ५ ॥

[ आसनाद्बहिः प्राकारपरिकल्पनम् ]

दिशो विरेच्य चास्त्रेण पुनरेव मुहुर्मुहुः ।

---

1 मन्त्रेण A. 2 फलकादिकम्

शरजालोपमं स्मृत्वा प्राकारं चासनाद्बहिः ॥ ६ ॥
समाकारं तु संस्थानं कवचेनावकुण्ठयेत् ।
ज्वलत्कञ्चुकरूपेण

[ न्यासप्रयोजनम् ]

यथा सिद्धादिषु द्विज ॥ ७ ॥
गगनस्थेष्वदृश्यः स्यादाचरेन्न्यासमात्मनः ।
अगुप्तस्य यतो वीर्यं मन्त्रजस्याहरन्ति ते ॥ ८ ॥
तस्मादनेन विधिना त्वादौ गुप्तिं समाचरेत् ।
हस्तन्यासं पुरा कृत्वा देहन्यासं समाचरेत् ॥ ९ ॥

[ हस्तन्यासः ]

अङ्गुष्ठे मूलमन्त्रं तु मूर्तिमन्त्रसमन्वितम् ।
एवमेव क्रमेणैव तर्जन्यादिषु देवताः ॥ १० ॥
कनिष्ठान्तासु वै सर्वा न्यस्य चाङ्गानि योजयेत् ।
कनिष्ठिकाद्यासु ततो हृदयादीन्यनुक्रमात् ॥ ११ ॥
अस्त्रमङ्गुष्ठके यावत्कराग्रेषु च लोचनम् ।
नारसिंहं दक्षिणे हस्ते वामे च कपिलं न्यसेत् ॥ १२ ॥
वामहस्तादि चोभाभ्यां वराहं चाङ्गुलीषु च ।
कौस्तुभं दक्षिणतले वनमालां तथाऽपरे ॥ १३ ॥
दक्षिणे मध्यतः पद्मं शङ्खं वामतले न्यसेत् ।
अनन्तारं च तत्रैव चक्रमस्त्रं महाप्रभम् ॥ १४ ॥
गदां च दक्षिणे हस्ते ज्वलन्तीं स्वेन तेजसा ।
अङ्गुष्ठाद्दक्षिणादादौ वामान्तं मूलदेशतः ॥ १५ ॥
गारुडं विन्यसेन्मन्त्रं दशस्वङ्गुलिषु क्रमात् ।
वामहस्ततले पाशमङ्कुशं दक्षिणे तथा ॥ १६ ॥
क्रमेण हृदयाद्येन उभयोर्हस्तयोर्न्यसेत् ।
सत्यादि चानिरुद्धान्तमौपाङ्गं बीजपञ्चकम् ॥ १७ ॥
नखाद्यामणिबन्धान्तं कृत्स्ने पाणियुगे ततः ।
न्यसेत्सप्ताक्षरं मन्त्रं सर्वमन्त्रोपरि स्थितम् ॥ १८ ॥
अनेन विधिना पूर्वं हस्तन्यासं समाचरेत् ।

[ देहन्यासाद्धस्तन्यासस्य प्राथम्ये कारणम् ]

वैभवी [1]परमा शक्तिर्हृच्चक्रकुहरान्तगा ॥ १९ ॥
वायव्यं रूपमास्थाय दशधा संव्यवस्थिता ।
इच्छया स्वप्रवाहेण पाणिमार्गेण निर्गताः ॥ २० ॥
नाडीदशकमाश्रित्य ता एवाङ्गुल्यो मताः ।
अत एव द्विजश्रेष्ठ शक्त्याख्ये प्रभुविग्रहे ॥ २१ ॥
पूर्वं मन्त्रगणं न्यस्य ततो भूतमये न्यसेत् ।

[ देहन्यासः ]

विग्रहे मन्त्रसङ्घातं यथावदवधारय ॥ २२ ॥
आमूर्ध्नश्चरणान्तं च मूलमन्त्रं पुरा तनौ ।
व्यापकत्वेन विन्यस्य पादाद्भूयश्शिरोऽन्तिमम् ॥ २३ ॥
मूर्तिमन्त्रेण वै कुर्यान्न्यासं सर्वाङ्गकं ततः ।
मूर्ध्नि वक्त्रेऽसयुग्मे च क्रमात्सव्येतरे हृदि ॥ २४ ॥
पृष्ठे नाभौ तथा कट्यां जानुनोरथ पादयोः ।
क्रमेण ह्यवसानं च नाद्यं द्वादशवर्णकम् ॥ २५ ॥
मूर्तिमन्त्रं तु विन्यस्य देवतां तु ततो न्यसेत् ।
वामस्कन्धे तथा लक्ष्मीं कीर्तिं दक्षिणतो न्यसेत् ॥ २६ ॥
जयां दक्षिणपाणिस्थां मायां वामे तथा न्यसेत् ।
हृदयादीनि चाङ्गानि विन्यसेत्तदनन्तरम् ॥ २७ ॥
स्तनान्तरे तु हृन्मन्त्रं शिरोमन्त्रं च मूर्धनि ।
चूडिकां च शिखास्थाने स्कन्धयोः कवचं ततः ॥ २८ ॥
नेत्राभ्यां विन्यसेन्नेत्रमस्त्रं पाणितले द्विज ।
नृसिंहं दक्षिणे श्रोत्रे कपिलञ्च कृवाटिके ॥ २९ ॥
वामश्रोत्रावधौ न्यस्य वाराहं मन्त्रनायकम् ।
वक्षसः कौस्तुभं मध्ये कण्ठे च वनमालिकाम् ॥ ३० ॥
पद्मादींश्च ततः प्राग्वदूरुभ्यामन्तरे द्विज ।
गरुडाख्यं महामन्त्रमथोपाङ्गं गणं न्यसेत् ॥ ३१ ॥
क्रमेण वाऽनिरुद्धेन प्रथमं द्विजसत्तम ।
पादयोर्बस्तिशीर्षे च नाभौ हृदि शिखावधौ ॥ ३२ ॥

---

1 चरमा C. L.

सत्याद्येन क्रमेणैव भूयस्तत्पञ्चकं न्यसेत् ।
ब्रह्मरंध्रान्तरे चैव हृन्मध्ये नाभिपुष्करे ॥ ३३ ॥
नाभिमेढ्रान्तरे चैव पादयोः क्रमयोगतः ।
योजयेच्च ततो देहे आमूर्ध्नश्च तनुत्रवत् ॥ ३४ ॥
सप्ताक्षरं महामन्त्रं विष्णुं नारायणं प्रभुम् ।
सर्वे मन्त्रास्तदन्तस्थास्[1]तेषामन्तर्गतश्च सः ॥ ३५ ॥
अस्यैव मन्त्रसङ्घस्य परमं करणञ्च सः ।
सर्वेषां वर्तते मूर्ध्नि तस्मात्सर्वोपरि न्यसेत् ॥ ३६ ॥
शक्तिचक्रं[2] हृदन्नाभिं(?)नाना तु मुनिसत्तम ।
न्यस्तमात्रेण वै तेन सन्धानमुपपद्यते ॥ ३७ ॥
एवं न्यासं पुरा कृत्वा करयोर्विग्रहे ततः ।

[ तत्तन्मुद्राप्रदर्शनम् ]

मूलमन्त्रादिसर्वस्य न्यस्तमन्त्रगणस्य च ॥ ३८ ॥
मुद्रां प्रदर्शयेत्स्वां स्वां मन्त्रन्याससमन्विताम् ।

[ साधकेन कर्तव्यध्यानप्रकारः ]

ततस्सविग्रहं ध्यायेदात्मानं विष्णुरूपिणम् ॥ ३९ ॥
पूर्वोक्तध्यानयोगेन षाड्गुण्यमहिमावृतम् ।
स्वरूपं विश्वरूपं वा यथाभिमतरूपकम् ॥ ४० ॥
अहं स भगवान्विष्णुरहं नारायणो हरिः ।
वासुदेवो ह्यहं व्यापी भूतावासो निरञ्जनः ॥ ४१ ॥
एवं रूपमहङ्कारमासाद्य सुदृढं मुने ।
तन्मयश्चाचिरेणैव जायते साधकोत्तमः ॥ ४२ ॥
न्यासाद्ध्यानात्तथा भावान्मध्यमाच्चापि योगजात् ।
इति संक्षेपतः प्रोक्तं न्यासकर्म मया च ते ॥ ४३ ॥
समाचर यथान्यायं गोपयस्व च यत्नतः ।

इति श्रीपाञ्चरात्रे जयाख्यसंहितायां मन्त्रन्यासविधिर्नाम एकादशः पटलः ।

---

1 सर्वेष्व A. 2 शक्तिश्च Y.

अथ मानसयागाख्यान नाम द्वादशः पटलः ।

श्रीभगवान्—

एवं विष्णुमयो भूत्वा स्वात्मना साधकः पुरा ।
मानसेन तु यागेन ततो विष्णुं समर्चयेत् ॥ १ ॥

[ मानसयागोपक्रमे अवयवविभागशः स्थानभेदेन आधारशक्त्यादिपद्मान्ताना षण्णां कल्पनाप्रकारः ]

नाभिमेढ्रान्तरे ध्यायेच्छक्तिं चाधाररूपिणीम् ।
कालाग्निं च तदूर्ध्वे तु अनन्तं तस्य चोपरि ॥ २ ॥
तदूर्ध्वे वसुधां देवीं चतुर्भिः पूरितां स्मरन् ।
कन्दान्नाभ्यवसानाच्च चतुर्द्धा भाजितैः पदैः ॥ ३ ॥
नाभौ क्षीरार्णवं ध्यात्वा ततः पद्मं समुत्थितम् ।
सहस्रदळपर्यन्तं सहस्रकिरणावृतम् ॥ ४ ॥

[ पद्मस्योपरिपीठकल्पनम् ]

सहस्ररश्मिसङ्काशं तत्पृष्ठे चासनं न्यसेत् ।

[ तस्य पीठस्य धर्मादिषोडशपादपरिकल्पनाप्रकारः ]

धर्मं ज्ञानं च वैराग्यमैश्वर्यं च चतुर्थकम् ॥ ५ ॥
अवतार्य स्वमन्त्रेण आग्नेयादिचतुष्टये ।
चतुष्कमेतद्विन्यस्य यावदीशानगोचरम् ॥ ६ ॥
पीठपादचतुष्के तु सितास्सिह्माननना अमी ।
शरीरात्पुरुषाकाराः परोत्साहसमन्विताः ॥ ७ ॥
तत्पूर्वदिग्विभागादि यावदुत्तरगोचरम् ।
न्यस्याधर्मं तथाऽज्ञानमवैराग्यमनैश्वरम् ॥ ८ ॥
पुरुषाकृतयस्त्वेते बन्धूककुसुमोज्वलाः ।
प्रागीशानदिगन्ते तु प्रागाग्नेयदिगन्तरे ॥ ९ ॥
यातुवारुणमध्ये तु वायव्यवरुणान्तरे ।
ऋग्वेदाद्यं चतुष्कं तु पीतं हयनराकृतिम् ॥ १० ॥
ईशानसोमदिग्मध्ये अन्तकाग्निदिगन्तरे ।
याम्यराक्षसमध्ये तु सौम्यसामीरणान्तरे ॥ ११ ॥
कृताद्यं युगसङ्घं च कृष्णं वृषनराकृतिम् ।
सर्वे चतुर्भुजास्त्वेते द्वाभ्यां सन्धारयन्ति च ॥ १२ ॥

पीठमञ्जलिना द्वाभ्यां प्रणमन्ति जगत्प्रभुम् ।

[ धर्मादिपीठस्योपरि अवयवविभागशः स्थानभेदेन सितकमलसूर्येन्द्वग्निपक्षिराजान्तासनपञ्चकस्योपर्युपरि परिकल्पनप्रकारः ]

एषामुपरि विन्यस्य सितपद्मादितत्त्रयम् ॥ १३ ॥
प्रागुक्तैस्स्वोदितैर्मन्त्रैरुपर्युपरि नारद ।
तत्पृष्ठे पक्षिराजं च वराहं [1]तूभयं न्यसेत् ॥ १४ ॥
आनाभि हृदयान्तं च पञ्चधा सुसमैः पदैः ।
विकल्प्य भावयेद्व्याप्तिमस्य मन्त्रासनस्य च ॥ १५ ॥

[ आधारशक्तिप्रभृति पक्षिराजान्तेष्वेकादशपदेषु भूतपञ्चकप्रभृतीश्वरपर्यन्तानां तत्त्वानां क्रमाद्व्याप्तिः ]

आधारशक्तेरारभ्य यावन्मान्त्रं परं पदम् ।
भूतान्याधारशक्तौ तु तन्मात्राः कालपावके ॥ १६ ॥
वागादिकं तथैवाक्षमनन्तं व्याप्य संस्थितम् ।
श्रोत्रादिकं धरण्यां च मनः क्षीरार्णवे द्विज ॥ १७ ॥
अनन्तदळपद्मे तु अहङ्कारस्समाश्रितः ।
द्विरष्टकं च धर्माद्यमधिष्ठाय च धीस्स्थिता ॥ १८ ॥
तदूर्ध्वपद्मे प्रकृतिर्गुणसाम्याऽविभागिनी ।
[2]धामत्रयाश्रितः कालो भावाख्ये पुरुषः स्थितः ॥ १९ ॥
गरुडश्चेश्वरेणैव प्रभुत्वेन त्वधिष्ठितः ।
एकादशपदं ह्येवं मन्त्रमूर्तौ जनार्दने ॥ २० ॥
आसीनं च शरीरस्थमविभक्तं विभक्तिमत् ।

[ विष्णोर्ध्यानोपक्रमः ]

विष्णुं विश्वात्मकं देवमीश्वराधारविग्रहम् ॥ २१ ॥
स्वस्थानाच्च समायान्तं प्राक्प्रवाहेण भावयेत् ।

[ प्रथमं मन्त्रात्परतरस्वरूपस्य भावनम् ]

मरीचिचक्रपर्यन्तं मन्त्रात्परतरस्थितिम् ॥ २२ ॥
परसूक्ष्मविभागेन ततो मन्त्रात्मना स्मरेत् ।

[ परसूक्ष्मोभयात्मनाऽवस्थितस्य मन्त्रात्मस्वरूपस्य भावनम् ]

परं ज्योतिर्मयं रूपमाह्लादानन्दलक्षणम् ॥ २३ ॥

---

1 तु ह्य A. 2 सी C L.

सूक्ष्मं चिच्छक्तिलक्ष्यं तु लिङ्गमात्रं प्रकाशवत् ।

[ स्थूलस्वरूपस्य स्मरणम् ]

ततः स्थूलवपुर्ध्येयो नानारूपविभागशः ॥ २४ ॥

[ परसूक्ष्मात्मनाऽवस्थितस्य मन्त्रमूर्तेर्विष्णोरैश्वर्यम् ]

वालाग्रशतभागश्च प्रधानपुरुषेश्वरः ।
गुणभोक्ता गुणाधारो गुणवान्निर्गुणस्तथा ॥ २५ ॥
देहेश्वरस्सविख्यातस्सर्वदेवमयः प्रभुः ।
अङ्गुष्ठमात्रः पुरुषस्सर्वदेहेषु तिष्ठति ॥ २६ ॥
मणिर्यथा विभागेन नीलपीतादिभिर्युतः ।
रूपभेदमवाप्नोति ध्यानभेदात्तथा विभुः ॥ २७ ॥
ब्रह्माद्यं तथा रुद्रश्चन्द्रसूर्यौ प्रजापतिः ।
परमात्मसमुद्भूतमन्त्राज्जातास्तदात्मकाः ॥ २८ ॥

[ लक्ष्म्यादिभिः सहैवपूज्यत्वम् ]

बुद्धिस्सन्तारिका या वै परे तद्धर्मधर्मिणी ।
तत्ज्ञा वा ( सा ? )प्राग्विभागेन प्रभा चन्द्रमसो यथा ॥ २९ ॥
अवस्थिता चतुर्धा वै शक्तित्वेन जगद्गुरोः ।
ज्ञानक्रियास्वरूपेण ईशित्वानुग्रहात्मना ॥ ३० ॥
पञ्चैव बुद्धिपूर्वास्ताः प्रागुक्तासु च शक्तिषु ।
विकारत्वेन वर्तन्ते आसामपि च नारद ॥ ३१ ॥
बुद्धिं विना चतसृणां विकृतिश्चापि नश्वरी ।
व्यवस्थिताश्चतुर्धा या लक्ष्म्याद्या देवतास्तु ताः ॥ ३२ ॥
ताभिस्सह सदा पूज्यस्साङ्गो हृत्पद्मकोटरे ।

[ परमात्मनः शक्तिभूताना लक्ष्म्यादीना धर्मज्ञानादिविकृत्यष्टकमूलप्रकृतित्वम् ]

एतासां हि विकारश्च श्रेयोमार्गनियामकाः ॥ ३३ ॥
सदैव मत्प्रपन्नानां जनानां येऽनुरागिणः ।
संस्थिताश्च जगत्यस्मिन् धर्मज्ञानादयस्तु ते ॥ ३४ ॥
एतेषां वै द्विजश्रेष्ठ विकारत्वेन संस्थितम् ।
अधर्माद्यं चतुष्कं तु अश्रेयः पथयोजकम् ॥ ३५ ॥
गुर्वग्निमन्त्रशास्त्राणां दूषकादिषु जन्तुषु ।
शेषं मायामयं सर्वं तां मायां विद्धि मामकीम् ॥ ३६ ॥

पृथग्रूपं तथैक्यं च आभ्यामुक्तं पुरा मया ।

[ हृत्पुण्डरीकमध्येऽवस्थापितस्य मन्त्रात्मनः परस्य चैतन्यज्योतिषो विष्णोः प्रभावविशेषः ]

एवं [1]प्रकीर्तितं [2]सङ्घं मन्त्रचक्रं परात्मकम् ॥ ३७ ॥
हृत्पुण्डरीकमध्यस्थं चैतन्यज्योतिरव्ययम् ।
कदम्बगोळकाकारं विश्वरूपं मणिप्रभम् ॥ ३८ ॥
रत्नदीपसमाकारमच्छिन्नप्रसरं महत् ।
श्रोत्रपूर्वैः खरन्ध्रैश्च रश्मयस्तस्य निर्गताः ॥ ३९ ॥
छिद्रपूर्णाद्यथा कुम्भान्महादीपयुताद्द्विज ।
याति भासां गणो बाह्ये शरीरादेवमेव हि ॥ ४० ॥
मन्त्रो रश्मिसमूहस्तु नाडीभिः प्रसरेद्बहिः ।

[ स्थैर्यादीना पृथिव्यादिगुणानामपि परमात्मैकाश्रयत्वम् ]

अप्रत्यक्षस्सदाऽक्षाणां मन्त्रात्माऽयमपि द्विज ॥ ४१ ॥
तथाऽप्यनेन न्यायेन प्रत्यक्षमुपल[3]क्ष्यते ।
बहिस्स्थितं यद्भूतानां क्ष्मादीनां गुणपञ्चकम् ॥ ४२ ॥
तेन तच्चोपलब्धव्यं प्रत्यक्षेण परोक्षगम् ।
तस्य भौमो गुणस्थैर्यं तद्गुणेन हि सा स्थिरा ॥ ४३ ॥
परस्परानुभावेन संवृत्तौ तदुपारुहेत् ।
आह्लादो यस्तदीयोऽपि सतोये चोपलभ्यते ॥ ४४ ॥
तोये गुणस्तु तस्यास्ति कथं स्यादन्यथा मुने ।
स्मृतमात्रेण मन्त्रेण आह्लादो मानसो महान् ॥ ४५ ॥
रूपात्मना परिणतस्सचाग्नौ पारमेश्वरः ।
यो रूपाख्यो गुणश्चाग्नेस्समन्त्रात्मनि तिष्ठति ॥ ४६ ॥
तेजो विना यतो ध्यानं कुतश्चिन्नोपलभ्यते ।
स्पर्शधर्मो हि यो वायोस्स तदीयो महामते ॥ ४७ ॥
यो वायव्यो गुणस्सूक्ष्मस्स च [4]मन्त्रतनौ स्थितः ।
स चान्तःकरणे चैव संहृते स्यात्तदुत्थितः ॥ ४८ ॥
यदाकाशस्य शून्यत्वमस्ति तस्मात्तदुद्भवः ।
स मन्त्रात्मनि संविष्टो गुणो ह्यस्मिन्महामते ॥ ४९ ॥

1 प्रव CL. 2 सर्वं A. 3 म्य CL. 4 मान्त्रे CL.

अग्राह्यत्वाच्च करणैः प्राकृतैर्भावनां विना ।
इत्येवं मन्त्रसामर्थ्यं पुरा ज्ञात्वा यथार्थतः ॥ ५० ॥

[ मुद्रामन्त्रपूर्वकमावाहनम् ]

सन्निधानं भवेद्येन पूजाकाले ह्युपस्थिते ।
मुद्रासमन्वितो मन्त्रो य आवाहनसंज्ञितः ॥ ५१ ॥
पूरकेण द्विजश्रेष्ठ मनसा समुदीरयेत् ।
समाहूय ततः पश्चान्मूर्तिमन्त्रेण चेतसा ॥ ५२ ॥
ध्यानोक्तां कल्पयेन्मूर्त्तिं तस्य हृत्पद्ममध्यगाम् ।
परेणाधिष्ठितं ध्यायेन्मूलमन्त्रं ज्वलत्प्रभम् ॥ ५३ ॥

[ आवाहितस्य तस्य संमुखीकरणम् ]

सम्मुखीकरणं कुर्यान्मन्त्रमूर्त्तेर्द्विजात्मनः ।
आत्ममन्त्रादितो भूयो मन्त्रैस्सर्वैश्च पूर्ववत् ॥ ५४ ॥
करन्यासं विना देहे न्यासं तस्य च संस्मरेत् ।
पुष्पमर्घ्यं तथा धूपं दीपं माल्यं विलेपनम् ॥ ५५ ॥
चेतसा सादरेणैव पाद्यपूर्वं च भक्तितः ।
प्रणाममथ चाष्टाङ्गं जयशब्दांश्च मानसान् ॥ ५६ ॥
कृत्वा भगवते ब्रह्ममुद्रां वै संप्रदर्शयेत् ।
स्वागतं तव देवेश सन्निधिं भज मेऽच्युत ॥ ५७ ॥
गृहाण मानसीं पूजां यथार्थपरिभाविताम् ।
ज्ञात्वा तु सुप्रसन्नं तं प्रसादाभिमुखं [1]प्रभुम् ॥ ५८ ॥

[ अथ विस्तरेण मानसयागारम्भः ]

विस्तरेण द्विजश्रेष्ठ मानसं यागमारभेत् ।
सङ्कल्पजनितैर्द्रव्यैः पवित्रैरक्षयैः शुभैः ॥ ५९ ॥
सर्वकामप्रदं देवं मन्त्रमूर्त्तिधरं यजेत् ।
अभ्यङ्गोद्वर्तने पूर्वं स्नानं चाथ विलेपनम् ॥ ६० ॥
वस्त्रपूर्वाणि माल्यानि सुगन्धानि निवेद्य च ।
हारकेयूरकटकैर्मकुटैर्भूषितं स्मरेत् ॥ ६१ ॥
चित्रेण कटिसूत्रेण हेमरत्नमयेन च ।
माणिक्यरचितैश्शुद्धैर्मुक्ताहारैश्च भूषयेत् ॥ ६२ ॥

1 वि A.

संपूर्णेन्दुसमानं च हेमदण्डसमन्वितम् ।
छत्रं निवेदयेद्विष्णोर्मायूरं व्यजनं शुभम् ॥ ६३ ॥
कर्पूरचूर्णसंमिश्रं सुगन्धि मधुरं बहु ।
धूपं भगवते दत्वा दीपमालां घृतेन च ॥ ६४ ॥
मधुसर्पिःप्लुतं चाथ मधुपर्कं निवेद्य च ।
पशुं च विविधं मूर्तं पावनं शकुनिं तथा ॥ ६५ ॥
औषधीश्शालिदूर्वां च सत्फलाढ्यं वनस्पतिम् ।
मूर्तं निवेदयेत्पूर्वमिदमन्नं चतुर्विधम् ॥ ६६ ॥
नैवेद्यं विविधं शुद्धं भक्ष्यभोज्यान्यनेकशः ।
हृद्यानि फलमूलानि षड्ऋतुप्रभवानि च ॥ ६७ ॥
षड्रसानि च चित्राणि पानान्यथ निवेद्य च ।
सर्वाण्यात्मोपभोग्यानि भक्तिश्रद्धावशाद्द्विज ॥ ६८ ॥
प्राग्दिक्ष्वप्यविरुद्धानि देवाय विनिवेदयेत् ।
तन्त्रीवाद्यान्यनेकानि नृत्तगेयान्वितानि च ॥ ६९ ॥
भेरीपटहघोषादिस्तुतिपाठान्वितानि च ।
चिन्तयेद्देवदेवस्य लोकत्रयगतानि च ॥ ७० ॥
किङ्किणीजालयुक्तेन चामरेणोपवीज्य च ।
वितानकं पताकाश्च ध्वजानि विविधानि च ॥ ७१ ॥
विनिवेद्य विभोर्भक्त्या प्रसन्नेनान्तरात्मना ।
गजाश्वधेनुयानानि सुवस्त्रालङ्कृतानि च ॥ ७२ ॥
निवेद्य चान्तरा तानि ग्राहयन्तं स्मरेत्ततः ।
आत्मानं ससुतान्दारांस्तस्मै च नमसा युतान् ॥ ७३ ॥
निवेद्य प्रणतो मूर्ध्ना आनन्दाश्रुसमन्वितः ।
कामधेनुमयीं मुद्रां मनसा मन्त्रसंयुताम् ॥ ७४ ॥
बध्वा संचिन्तयेद्विष्णोस्सर्वकामप्रपूरणीम् ।
हृद्व्योमपुष्कराग्रस्थं देवमिष्ट्वा जगद्गुरुम् ॥ ७५ ॥
समस्तमन्त्रदेहं तु सकळं निष्कळात्मकम् ।

[ लक्ष्म्याद्यङ्गपूजनम् तत्रलययागादिभेदः ]

शक्तयश्चाङ्गषट्कं च लांछनं कमलादिकम् ॥ ७६ ॥
भूषणं कौस्तुभाद्यं च वदनानां तथा त्रयम् ।

सत्याद्या मूर्तयश्चैव देहे देवस्य भाविताः ॥ ७७ ॥
व्यापय्य च तथात्वेन स्वे स्वे स्थाने तथात्मकाः ।
तद्देहसंस्थितास्सर्वे पूजनीयाः क्रमेण तु ॥ ७८ ॥
परिवारं विना मन्त्रैः स्वैः स्वैः पुष्पानुलेपनैः ।
लययागो ह्ययं विप्र लक्ष्म्यादिष्वनुकीर्तितः ॥ ७९ ॥
तस्माद्धृत्कर्णिकाधारे मूर्तौ वा यत्र कुत्र चित् ।
मूलमन्त्रशरीरस्थं परिवारं यजेत्सदा ॥ ८० ॥
याग एष लयाख्यस्तु संक्षिप्तस्सर्वसिद्धिदः ।
मन्त्रराट् कर्णिकामध्ये लक्ष्म्याद्याः केसरादिषु ॥ ८१ ॥
साकाराः केवलास्सर्वे यत्र भोगाभिधस्स तु ।
केवलेन च यागेन पृथग्भूतेन नारद ॥ ८२ ॥
पूजनं कमलादीनामधिकाराभिधस्स तु ।
सांप्रतं सर्वमन्त्राणां भोगयागार्थमेव च ॥ ८३ ॥
हृत्पद्मे तु विभागेन विन्यासमवधारय ।
पूर्वभागे विभोर्लक्ष्मीं केसरस्थां च विन्यसेत् ॥ ८४ ॥
कीर्तिं दक्षिणतस्तस्य पृष्ठतस्तु जयां हरेः ।
तस्यैव चोत्तरे भागे मायां केसरगां न्यसेत् ॥ ८५ ॥
विदुक्ष्वङ्गानि विन्यस्य केसरेषूपरि द्विज ।
पूर्वयाम्यान्तरे विष्णोर्हृन्मन्त्रं विनिवेश्य च ॥ ८६ ॥
शिरःपूर्वोत्तरे दद्याच्छिखां पश्चिमदक्षिणे ।
पश्चिमोत्तरदिङ्मध्ये कवचं विन्यसेद्विभोः ॥ ८७ ॥
अग्रतः केसरोद्देशे नेत्रं दिक्ष्वस्त्रमेव च ।
दक्षिणे मन्त्रनाथस्य पद्मपत्रे नृकेसरी ॥ ८८ ॥
कपिलः पश्चिमेन्यस्यो वराहश्चोत्तरे दळे ।
कौस्तुभं वनमालां च विभोः पूर्वदळान्तरे ॥ ८९ ॥
नृसिंहक्रोडमन्त्राभ्यां समीपे तद्दलद्वये ।
पद्मशङ्खौ तु विन्यस्य गदाचक्रे तथैव च ॥ ९० ॥
समीपे रत्नमालां च गरुडं नातिदूरतः ।
पाशं च तत्समीपेतु गदाया निकटेऽङ्कुशम् ॥ ९१ ॥
अनिरुद्धाद्युपाङ्गानि पत्राग्रेषु तु विन्यसेत् ।

सौम्माप्यदक्षिणे पूर्वे कर्णिकासंस्थितस्य च ॥ ९२ ॥
तदीशपत्रादारभ्य दलाग्रेषु चतुर्ष्वपि ।
सत्यमन्त्रं तु विन्यस्य यावद्वायुदळावधि ॥ ९३ ॥
ब्रह्मरन्ध्राद्विनिष्क्रान्ते मूलमन्त्रस्य नारद ।
प्रभानाळे निराधारे प्रचरद्रश्मिपल्लवे ॥ ९४ ॥
आनन्दकेसराकीर्णे महानन्दाख्यकर्णिके ।
न्यसेत्सप्ताक्षरं मन्त्रं निष्कळं तु च केवलम् ॥ ९५ ॥
यद्वै तद्भावभावित्वमेतावत्तस्य पूजनम् ।
सङ्कल्पजनितैर्भोगैर्विकल्पपदवर्तिभिः ॥ ९६ ॥
कथं स्यात्पूजनं तस्य यतस्तेभ्यः स्थितः परे ।
न्यस्यैवं मन्त्रसङ्घं तु पूर्ववत्पूजयेत्क्रमात् ॥ ९७ ॥
ध्यात्वैकैकं स्वमन्त्रेण तद्ध्यानमवधारय ।
भोगस्थाने च मन्त्राणां यत्सदा संप्रयोजयेत् ॥ ९८ ॥
यत्पूर्वं कथितं रूपं मन्त्राणां निष्कळं मया ।
सकळेन बहिस्थेन छुरितं भावयेत्ततः ॥ ९९ ॥
निर्मलं स्फटिकं यद्वदुपरागेण केनचित् ।
स्फटिकं चोपरागस्य नान्तरं संविशेद्यथा ॥ १०० ॥
उपरागस्त्वनिच्छातस्संविशेत्स्फटिकान्तरम् ।
एवं हि सकळं रूपं निष्कळेन [1]सह स्मरेत् ॥ १०१ ॥
भोगस्थानगतस्यैव विद्धि तच्चोभयात्मकम् ।
अधिकारपदस्थस्य मन्त्रस्य मुनिसत्तम ॥ १०२ ॥
सकळं योजयेद्ध्यानं तस्य हृद्ब्रह्ममध्यगम् ।
निराधारस्थितं ध्यायेत्तद्रूपं निष्कळं तु तत् ॥ १०३ ॥
भिन्नात्मभ्यां ततस्ताभ्यामेकत्वेन स्थितिं पुरा ।
इति चेतसि वै कृत्वा ततस्संपूजयेद्द्विज ॥ १०४ ॥
पादपश्च यथा भौमैर्गुणैर्दूरतरे स्थितः ।
पादपीयैर्गुणैस्तद्वद्दूरे तिष्ठति मेदिनी ॥ १०५ ॥
सकलाकलमन्त्राभ्यामविनाभाव ईदृशः ।
केवलात्सकलाद्ध्यानात्पदसिद्धिर्न जायते ॥ १०६ ॥

1 बहि. Y

स्वभावनिष्कळान्मन्त्रात्तद्वद्दूरे च सिद्धयः ।
अत एव क्रमाद्ध्यातैः पूजितैस्तोषितैस्ततः ॥ १०७ ॥

[ विशेषपूजनम् ]

विशेषपूजनं विप्र कल्पयेदच्युतस्य तु ।
सौवर्णपुष्पसंपूर्णमञ्जलिं संप्रसार्य च ॥ १०८ ॥
मूलमन्त्रं समुच्चार्य प्रयत्नात्पूरकादिभिः ।
दीर्घघण्टारवप्रख्यं यावत्तत्संभवावधि ॥ १०९ ॥
स्फुरद्रश्मिचयाकीर्णमग्न्यर्केन्दुशतप्रभम् ।
ध्यात्वा नारायणं देवमञ्जलौ सन्निरोधयेत् ॥ ११० ॥
तमञ्जलिं क्षिपेन्मूर्ध्नि तस्मिन्वै मन्त्रविग्रहे ।
अर्घ्यं निवेदयेद्भूयः पुनः पुष्पाञ्जलिं शुभम् ॥ १११ ॥
मुद्रां सन्दर्श्य मूलाख्यां मानसं जपमारभेत् ।
संख्याहीनं यथाशक्ति घण्ठाख्यकरणेन च ॥ ११२ ॥
भोगस्थानगतानां च लक्ष्म्यादीनां क्रमेण च ।
मनसा दर्शयेन्मुद्रां जपं कुर्यात्सकृत्सकृत् ॥ ११३ ॥
स्तोत्रमन्त्रैः पवित्रैश्च स्तुत्वा सम्यक्प्रसादयेत् ।
एवं क्रमेण विप्रेन्द्र कृत्वा यागं तु मानसम् ॥ ११४ ॥

[ अथ मानस होमप्रकारः ]

होमं तथाविधं कुर्यान्मोक्षलक्ष्मीप्रदं शुभम् ।
नाभिचक्रान्तरस्थं तु ध्यायेद्वन्हिग्र(गृ ?)हं मुने ॥ ११५ ॥
त्रिकोणं त्रिगुणेनैव अव्यक्तेनावृतं परि ।
ध्यानारणिं तु निर्मथ्य चिदग्निमवतार्य च ॥ ११६ ॥
सुशुद्धं संस्कृतं दीप्तं सदैवोर्ध्वशिखं द्विज ।
वासुदेवात्मकं यस्मात्स वसत्यन्तरात्मसु ॥ ११७ ॥
प्रोचरेन्मूलमन्त्रं तु यावच्छब्दस्य गोचरम् ।
तत्रस्थमाहरेद्दिव्यमाह्लादाज्यामृतं परम् ॥ ११८ ॥
ब्रह्मसर्पिःसमुद्राद्यन्निस्तरङ्गात्परिस्रुतम् ।
गृहीत्वाऽमृतमार्गेण ब्रह्मरन्ध्रेण संविशेत् ॥ ११९ ॥
हृदयान्मध्यमार्गेण चिन्मयेन सदीप्तिना ।
प्रोल्लसन्तं स्मरेन्मन्त्रं ब्रह्मशक्त्युपबृंहितम् ॥ १२० ॥

स्वकारणाग्नौ नाभिस्थे य ऊर्ध्वेन्धनवत्स्थितः ।
स्वभावदीप्तब्रह्माग्नौ परितश्चोदरोज्वलम् ॥ १२१ ॥
स्मृत्वा मन्त्रं तु तन्मूर्ध्नि पतमानं द्विजाम्बरात् ।
चिन्तयेदमृतंत्वाज्यं पुरा यच्चाहृतं द्विज ॥ १२२ ॥
चिदग्निमेव सन्तर्प्य नाभौ मन्त्रस्वरूपिणम् ।
ज्वालाग्रावस्थितं चैव भूयो हृत्पङ्कजे स्मरेत् ॥ १२३ ॥
प्रोच्चारयंश्च मन्त्रेशं प्लुतं ध्यानसमन्वितम् ।
कृत्वैवमेकसन्धानं स्थानद्वयगतस्य च ॥ १२४ ॥
विष्णोर्मन्त्रस्वरूपस्य नानामन्त्रात्मकस्य च ।
सर्वं तु सन्यसेत्पश्चात्तस्मिन्मन्त्रकृतं च यत् ॥ १२५ ॥
तोयपुष्पाक्षतैः पूर्णं भावयेद्दक्षिणं करम् ।
तन्मध्ये निष्कळं मन्त्रं संस्मरेत्किरणाकुलम् ॥ १२६ ॥
यागोत्थां फलसंपत्तिं लक्ष्मीरूपां विचिन्त्य च ।
मूलमन्त्रं समुच्चार्य पाणिमध्ये तथा स्मरेत् ॥ १२७ ॥
भूयश्च निष्कळं मन्त्रं तस्यामुपरि भावयेत् ।
सशीर्षे जानुनी भूमौ कृत्वा विष्णोर्निवेदयेत् ॥ १२८ ॥
प्रसादाभिमुखेनाथ तेन तच्चात्मसात्कृतम् ।
भावनीयं द्विजश्रेष्ठ परितुष्टेन चादरात् ॥ १२९ ॥
अयं यो मानसो यागो जराव्याधिभयापहः ।
पापौघसर्गशमनो भवाभावकरो द्विज ॥ १३० ॥
सतताभ्यासयोगेन देहपातात्प्रमोचयेत् ।
यस्त्वेवं परया भक्त्या सकृदाचरते नरः ॥ १३१ ॥
क्रमोदितेन विधिना तस्य तुष्याम्यहं मुने ।
याजकानां च सर्वेषां प्रधानत्वेन वर्तते ॥ १३२ ॥
तारयेत्स्वपितॄन्यातानेष्यांश्चैव तु सांप्रतात् ।
किं पुनर्नित्ययुक्तो यस्तद्भावगतमानसः ॥ १३३ ॥
मन्त्राराधनमार्गस्थश्रद्धाभक्तिसमन्वितः ।
न तस्य पुनरावृत्तिस्स याति परमं पदम् ॥ १३४ ॥
ज्ञात्वैवं यत्नतो नित्यं कुर्याद्यागं तु मानसम् ।
इदं रहस्यं परमं मयोक्तं तेऽद्य नारद ॥ १३५ ॥

नाशिष्याणां च वक्तव्यं नाभक्तानां कदाचन ।
अत्यन्तभवभीतानां भक्तानां भावितात्मनाम् ॥ १३६ ॥
इदं रहस्यं वक्तव्यं सम्यग्भावं परीक्ष्य च ।

इति श्रीपाञ्चरात्रे जयाख्यसहिताया मानसयागो नाम द्वादशः पटलः ।

---

अथ बाह्ययागाख्यान नाम त्रयोदशः पटलः ।

श्रीभगवान्

पुराऽनेन[1] विधानेन कृत्वा यागं तु मानसम् ।
कर्मणा भक्तियुक्तेन मण्डलस्थं यजेत्ततः ॥ १ ॥
हृत्पुण्डरीकमध्ये य इष्टो मन्त्रगणः पुरा ।
प्रस्फुरन्तं तमत्रैव प्राणापानगतं स्मरेत् ॥ २ ॥
विसर्जयेन्न तं यावन्न कृता बाह्यतः क्रियाः ।
न्यसनीयो ह्ययं[2] यस्मादर्घ्यपात्रे द्विजोत्तम ॥ ३ ॥
मण्डले ह्यक्षसूत्रे च कुण्डमध्यगतेऽनले ।

[ प्रश्नप्रतिवचनमुखेन बाह्ययागस्यावश्यकत्वनिरूपणम् ]

[ नारदः ]

भगवंस्त्वत्प्रसादेन ज्ञातो ह्यज्ञाननाशनः ॥ ४ ॥
ज्ञानविज्ञानसहितो ह्ययागस्सर्वसिद्धिदः ।
किमर्थं बाह्यतः पूजा कार्या वै मण्डलान्तरे ॥ ५ ॥
एतदाचक्ष्व भगवंस्तत्र मे संशयो महान् ।

श्रीभगवान्—

बाह्योत्था वासना विप्र बहुजन्मार्जिता दृढा ॥ ६ ॥
लोलीकृतोऽनया ह्यात्मा शुद्धोऽशुद्धस्वरूपया ।
या मन्त्रविषया शुद्धा क्रिया शान्तस्वरूपदा ॥ ७ ॥
समुत्थानविनाशार्थमस्यास्सा संप्रकीर्तिता ।
स बाह्याभ्यन्तराभ्यां च क्रियाभ्यां तन्मयो भवेत् ॥ ८ ॥
दृढोत्थवासनानां च तानवं स्याच्छनैश्शनैः ।
यन्मयस्साधको विप्र देहस्थस्सांप्रतो भवेत् ॥ ९ ॥
तन्मयो देहपातात्स्यादित्येतत्कथितं मया ।

नारदः—

ब्रूहि मे देवदेवेश मण्डले यजनं यथा ॥ १० ॥

---

1 तेन S. 2 सौ C. L.

स्वरूपं मण्डलस्यापि यदि सानुग्रहोऽसि मे ।

श्री भगवान्

[ मण्डल विन्यासः ]

शृणु मण्डलविन्यासं विष्णोरद्भुततेजसः ॥ ११ ॥
प्रवक्ष्यामि समासेन येन श्रेयो ह्यवाप्स्यसि ।
परीक्ष्य विविधामुर्वीं गन्धवर्णरसान्विताम् ॥ १२ ॥
लाङ्गलाद्यैः पुरा यत्नात्कृत्वा तु परिशोधिताम् ।
दुष्टशल्यविनिर्मुक्तां हस्तिभारवतीं दृढाम् ॥ १३ ॥
तत्पृष्ठे मण्डपं कुर्यात्सुधाधवलितं शुभम् ।
वितानकपताकाभिर्वस्त्रैश्च सुपरिष्कृतम् ॥ १४ ॥
तत्रादौ लक्षयेद्बुध्या ब्रह्मस्थानं प्रयत्नतः ।
वृक्षजाम्(?)उन्नतां कुर्याद्वेदिं याग(गे?)द्विजाधिका(यता?)म् ॥१५॥
अस्त्राभिमन्त्रितं कृत्वा पञ्चगव्यं तु तेजसा ।
उपलिप्याग्रतस्सूत्रं वेदिकामभिमन्त्र्य च ॥ १६ ॥
दद्यात्पूर्[1]वपरं सूत्रं तत्र मध्ये च नारद ।
अष्टहस्तं तदर्द्धं वा चतुरस्रं तु साधयेत् ॥ १७ ॥
मानादर्धार्धसूत्रेण ब्रह्मस्थानस्थितेन च ।
दिग्द्वयान्मध्यसूत्रं तु चिन्हीकृत्य समं यथा ॥ १८ ॥
चिन्हाचिन्हगतं[2] सूत्रं कृत्वा तदनु नारद ।
उल्लङ्घ्योल्लङ्घ्य वै कुर्याल्लांछने सौम्ययाम्यगे ॥ १९ ॥
एवमेवापरे चिन्हे तद्वत्तस्मिंश्च दिग्द्वये ।
कुर्यात्तेनैव सूत्रेण चिन्हा[3]चिन्हगतेन च ॥ २० ॥
प्रसार्योर्द्धस्थितं सूत्रं मत्स्यसन्धिद्वये द्विज ।
दक्षिणोत्तरदिग्यातं प्राक्पूर्वापरसंस्थितम् ॥ २१ ॥
ततो मानार्धसूत्रेण चिन्हयेद्दिक्चतुष्टयम् ।
तेषु चिन्हेषु वै पृष्ठे कृत्वा तच्चाथ सूत्रकम् ॥ २२ ॥
सल्लांछ्य कोणभागान्वै पूर्वतुल्यैस्तु लांछितैः ।
दिग्दळस्थेन सूत्रेण ततस्सूत्रचतुष्टयम् ॥ २३ ॥
दद्याद्वै क्षेत्रसिध्यर्थं कोणात्कोणे च नारद ।

1 पूर्वा A 2 चि C. I. 3 चि C. L.

समैः पदैस्तु तत्क्षेत्रं कृत्वा षोडशधा ततः ॥ २४ ॥
चतुर्भिस्तु पदैर्मध्ये पद्ममष्टदळं लिखेत् ।
तद्वदष्टासु वै कुर्यादाशासु कमलाष्टकम् ॥ २५ ॥
दिक्षु पद्मचतुष्कं तु देवीनां पूजनाय च ।
विदुक्ष्वन्यानि चत्वारि सत्यान्ता येष्ववस्थिताः ॥ २६ ॥
तेषां मध्ये तु नवमं पूज्यते यत्र केशवः ।
मध्यमं कमलं क्षेत्रं चतुर्द्धा भ्रामयेन्मुने ॥ २७ ॥
वर्जयित्वाऽष्टमांशं तु व्योम तेनार्धतो बहिः ।
भ्रमणेनान्तरस्थेन भवति द्विज कर्णिका ॥ २८ ॥
केसराणि द्वितीयेन तृतीये पत्रसन्धयः ।
पत्राग्राणि चतुर्थेन भ्रमणोपरि कल्पयेत् ॥ २९ ॥
कोणात्कोणगतं तस्मिन्पद्मे सूत्रद्वयं क्षिपेत् ।
सूत्राणामन्तरे भूयः क्षिपेत्सूत्राष्टकं तथा ॥ ३० ॥
पद्मसन्धिस्थसूत्रेण दिक्क्रमेण दळाष्टकम् ।
भ्राम्य वृत्तार्थयोगेन एवमन्ये बहिस्थिताः ॥ ३१ ॥
पद्माः कार्याः प्रयत्नेन [1]सुसमाश्च परस्परम् ।
चतुर्धा केशरांशं तु पत्रे पत्रे विभज्य च ॥ ३२ ॥
केसरत्रितयं मध्ये एकैकेन यथा भवेत् ।
संसक्तनवपद्मे तु गर्भस्यार्धेन वीधिकाः ॥ ३३ ॥
आधाय वीधिविस्तारान् षडंशं वाऽथ पञ्चकम् ।
तेन पद्मसमूहस्य चतुरश्रं लिखेद्बहिः ॥ ३४ ॥
तत्रिधा विभजेद्दिक्षु पीठः स्यात्पादगात्रभृत् ।
दिग्पद्मं परितो द्वारं कुर्याद्दिक्षु चतुर्ष्वपि ॥ ३५ ॥
तस्मिन्भागद्वयेनैव कर्णं कुर्याद्द्विजोत्तम ।
चतुर्भिरुपकर्णं तु कोणं कोणं भवेत्ततः ॥ ३६ ॥
द्वाविंशतिपदैः पूर्णमेकीकृत्य विशोध्य च ।
विविक्तं पश्चिमद्वारं कुर्याद्रेखाविवर्जितम् ॥ ३७ ॥
कर्णिकां पीतवर्णेन पीतरक्तेन केसरान् ।
पत्राष्टकं सितं कुर्यादन्तराळं नभस्समम् ॥ ३८ ॥

1 समृद्धा A.

पीतेन पीठकोणादि गात्रकाण्यरुणेन तु ।
सितं द्वारचतुष्कं तु कोणात्रक्तेन भूषयेत् ॥ ३९ ॥
बाह्ये रेखात्रयं दद्याद्रक्तपीतासितान्तिमम् ।
अन्तःशक्तिगतेनैव स्वरषोडशकेन च ॥ ४० ॥

[ मण्डले प्रकारभेदा. फलभेदाश्च ]

अथवा द्वादशारं तु द्वादशस्वरभावितम् ।
अष्टारं विलिखेन्नित्यं नाभिनेमिसमन्वितम् ॥ ४१ ॥
वर्गाष्टकेन वै व्याप्ता अरा ऋज्वस्सुशोभनाः ।
चक्रनाभौ लिखेत्पद्मं पूर्वलक्षणलक्षितम् ॥ ४२ ॥
शङ्खोदरेऽथवा लेख्यं पङ्कजं सुमनोहरम् ।
कौमोदक्यां पुरो वाऽपि बिम्बे वा कौस्तुभोपमे ॥ ४३ ॥
पुष्पमालाकृतौ वाऽथ यथाकामाप्तये मुने ।
स्वलांछनाकृतौ यागे ददात्यभिमतं विदुः ॥ ४४ ॥
नवनाभौ परां सिद्धिमैहिकामुष्मिकीं लभेत् ।
पद्मोदरे कृते यागे सदा लक्ष्मीः प्रवर्धते ॥ ४५ ॥
चक्रमध्ये भवेद्राज्यं शत्रुपक्षक्षयङ्करम् ।
शान्तिकर्माणि वै शङ्खे गदायां सुभगो भवेत् ॥ ४६ ॥
कौस्तुभे राज्यलाभस्तु पुष्टिर्वै पुष्पमण्डले ।
एष पद्मोदरो यागः पद्मादेर्मध्यगः स्मृतः ॥ ४७ ॥

[ मण्डलस्येव कुम्भ पुष्पमण्डल स्थण्डिल प्रतिमादीनामपि बाह्ययाग प्रदेशत्वविधानम् ]

नानावर्णकसंयुक्तस्त्वन्यः कुम्भोदरे श्रुणु ।
सौवर्णं राजतं ताम्रं मृण्मयं वा घटं दृढम् ॥ ४८ ॥
काळमूलैस्तु रहितं त्रासमाणविवर्जितम् । (?)
क्षीरपूर्णं तु तं कुर्याद्दध्ना वा गन्धवारिणा ॥ ४९ ॥
सर्वरत्नौषधीगाढं कुशदूर्वाफलोदरम् ।
सिद्धार्थकाक्षतोपेतं कुङ्कुमोदकभावितम् ॥ ५० ॥
प्रशस्ततरुशाखाभिः कोमलाभिरलङ्कृतम् ।
शङ्खस्वस्तिकपद्मैश्च चर्चितं चन्दनेन च ॥ ५१ ॥

शोभितं च सितैर्वस्त्रैः पट्टैश्चैव स्रगादिभिः ।
तन्मध्ये चासनं पद्मं तन्मध्ये तु जनार्दनः ॥ ५२ ॥
वैनतेयोपरिस्थस्तु लक्ष्माद्याः पूर्ववत्स्थिताः ।
सङ्क्षेपपूजनार्थं तु कुम्भे यागः प्रकीर्तितः ॥ ५३ ॥
उपलिप्य स्थलं वाथ गोमयेन मृदाम्भसा ।
वर्त्तुळं परीयात्तत्र दद्याद्वा चतुरश्रकम् ॥ ५४ ॥
यथा कालोद्भवैः पुष्पैः पवित्रैः [1]कटमुक्तये ।
तत्र संपूजयेद्देवमथवा मुनिसत्तम ॥ ५५ ॥
अहतं सुसितं वस्त्रं धूपगन्धादिवासितम् ।
पृष्ठतस्तु स्थले दत्वा तत्रोपरि यजेद्धरिम् ॥ ५६ ॥
प्रतिमां कारयेद्वाऽथ धातुमृच्छैलदारुजाम् ।
सपद्मं केवलं वाऽथ भद्रपीठं प्रकल्पयेत् ॥ ५७ ॥
केवले तोयमध्ये वा दीप्तेऽग्नौ धूमवर्जिते ।
स्थितमायतने वाऽथ साकारं परमेश्वरम् ॥ ५८ ॥
शङ्खचक्रधरं विष्णुं सुरसिद्धावधारितम् ।
ऋषिभिर्मनुजैर्वाऽथ भक्तियुक्तैः प्रतिष्ठितम् ॥ ५९ ॥
तन्मूर्त्तौ च स्वमन्त्रेण यजेदावाहनं विना ।
भूमिष्ठे ह्यचले विप्र पाषाणे चक्रलांच्छिते ॥ ६० ॥
चले वा शङ्खपद्माख्यमुद्राभिर्विप्र मुद्रिते ।
तत्रोपरि यथापूर्वं तथा संपूजयेत्प्रभुम् ॥ ६१ ॥
एभिर्यागपरैर्मध्यादेकं निष्पाद्य यत्नतः ।
कर्मणा भक्तियुक्तेन पूजयेत्सर्वकामदम् ॥ ६२ ॥
यथाशक्त्युपचारेण विभवेन तु वा मुने ।

[ अथ मण्डले बाह्ययागप्रकारः ]

अर्घ्यपात्रं समादाय सुवर्णरजतादिजम् ॥ ६३ ॥
शैलं मृद्दारुजं वाऽथ पलाशांबुजपर्णजम् ।
अस्त्रोदकेन प्रक्षाल्य लेपयेत्कुङ्कुमादिभिः ॥ ६४ ॥
अनेकाङ्गं च तत्रार्घ्यं योजयेदस्त्रसंस्कृतम् ।

---

1 कूट A.

[ अर्घ्यद्रव्याणि ]

सिद्धार्थकास्तिलादूर्वास्सयवास्सिततण्डुलाः ॥ ६५ ॥
तोयक्षीरफलोपेता इदमर्घ्यमुदाहृतम् ।
आप्याय्य मूलमन्त्रेण सुधासन्दोहमूर्तिना ॥ ६६

[ अर्घ्यस्य विनियोगः ]

पात्रद्वयस्थितं तेन कृत्वा भागद्वयं मुने ।
एकस्मिन्निष्कलाधारे संस्थितं निष्कळात्मकम् ॥ ६७ ॥
मन्त्रचक्रं स्ववीर्येण प्रस्फुरत्तच्च विन्यसेत् ।
संस्थाप्य मण्डलाग्रे तु पूज्यं पुष्पादिना पुरा ॥ ६८ ॥
धारणाद्वितयेनैव अग्नीषोममयेन च ।
सम्यग्द्वितीयं संस्कुर्याद्यथावदवधारय ॥ ६९ ॥
प्रचण्डकिरणव्रातैर्भास्करीयैर्दहेत्पुरा ।
संचिन्त्य भस्मभूतं तु ततः पूर्णेन्दुरश्मिभिः ॥ ७० ॥
आपूर्यामृतकल्लोलधारापातेन नारद ।
कान्तिमच्चिन्तयेद्भूयो यदर्घ्यं भानुना तु वै ॥ ७१ ॥
मूलमन्त्रादिभिर्मुख्यैर्मन्त्रैस्तदभिमन्त्र्य च ।
बध्वाकामदुघां मुद्रां स्रवन्तीं [1]मन्त्रसंयुताम् ॥ ७२ ॥
गोरूपां हिमशैलाभां निराधारपथस्थिताम् ।
गन्धदिग्धौ करौ कृत्वा अर्घ्यपात्रोद्धृतेन च ॥ ७३ ॥
मण्डलं मण्टपं प्रोक्ष्य यागद्रव्याण्यशेषतः ।
दाहयेदस्त्रमन्त्रेण मूलेन प्लावयेत्ततः ॥ ७४ ॥
निर्मलो द्रव्यसङ्घश्च यागयोग्यो भवेत्तदा ।
नमस्कृत्य ततो विष्णुं मूलमन्त्रं समुच्चरेत् ॥ ७५ ॥

[ द्वारपूजा ]

स्वमूर्तिसंस्थितः पूज्यः पुष्पैरञ्जलिसंस्थितैः ।
अर्घ्यपात्रं समादाय पुष्पं धूपं विलेपनम् ॥ ७६ ॥
दीपनैवेद्यपर्यन्तं द्वारं बाह्यं ततो यजेत् ।

[ द्वारदेवतापूजा ]

उदुम्बरस्य मूले तु बहिर्द्वारस्य मध्यतः ॥ ७७ ॥

1 पद्म A.

भूमिष्ठं क्षेत्रपालं च पूजयेत्तदनन्तरम् ।
द्वारोपरि स्थितां लक्ष्मीमूर्ध्वसंस्थ उदुम्बरे ॥ ७८ ॥
दक्षिणोत्तरशाखाभ्यां मूले चण्डप्रचण्डकौ ।
तद्वज्जयं च विजयं बाह्ये द्वारस्य चान्तरे ॥ ७९ ॥
शाखाद्वयस्य मध्ये तु वामदक्षिणतः क्रमात् ।
गङ्गां च यमुनां चैव पूजयेत्तदनन्तरम् ॥ ८० ॥
तेनैव क्रमयोगेन द्वारस्याभ्यन्तरस्थितौ ।
निधीशौ शङ्खपद्माख्यावर्घ्यपुष्पादिभिर्यजेत् ॥ ८१ ॥

[ यागमदिरप्रवेशविधिः ]

कृत्वैव द्वारयागं तु ततः पुष्पं च सम्मुखम् ।
गृहीत्वाऽङ्गुष्ठपूर्वेण अङ्गुलीत्रितयेन तु ॥ ८२ ॥
अभिमन्त्र्य तदस्त्रेण चक्रं तदुपरि स्मरेत् ।
निशितारं ज्वलद्रूपं वर्षन्तमनलाशनिम् ॥ ८३ ॥
क्षयकृद्विघ्नजालानां क्षिपेद्यागगृहान्तरे ।
दक्षिणां तर्जनीं विप्र कुर्यादूर्ध्वमुखीं ततः ॥ ८४ ॥
शिखामन्त्रेण संयुक्तां विद्युद्विलसितप्रभाम् ।
स्मृत्वा भ्रामयमाणस्तां संविशेद्यागमन्दिरम् ॥ ८५ ॥

[ उपवेशनशेषभूतमासनप्रोक्षणादि ]

स्वासनं च ततः प्रोक्ष्य अर्घ्यपात्रोदकेन च ।
सास्त्रेण ताड्य पुष्पेण तत्पृष्ठे क्रमशो द्विज ॥ ८६ ॥
आधारशक्तिपूर्वं तु मन्त्रसङ्घं मपूजयेत् ।
उपविश्य ततः पश्चात्

[ पूजनाङ्गभूतावेक्षणप्रोक्षणविशेषौ ]

हृदयस्थं च तत्परम् ॥ ८७ ॥
तेजो नारायणाख्यं तु तत्कुर्यान्नेत्रमध्यगम् ।
वासुदेवाभिधानं तु प्रागुक्तं च समाश्रयेत् ॥ ८८ ॥
निरीक्ष्य सकलं सम्यक्स्तब्धनेत्रयुगेन च ।
मण्डलश्चार्घ्यपात्रं तु पुनः प्रोक्ष्य कुशाम्भसा ॥ ८९ ॥

[ आधारशक्त्याद्यासनकल्पनतत्पूजनक्रमः ]

पूजनं प्रारभेत्पश्चात्साध्यैः पुष्पैः क्रमेण तु ।

आधारशक्तेरारभ्य अनुसन्धानपूर्वकम् ॥ ९० ॥
युगावसानं प्राक् दत्वा स्थूलं मन्त्रासनासनम् ।
तत्रोर्ध्वे मध्यदेशेऽपि प्रागुक्तविधिना न्यसेत् ॥ ९१ ॥
द्विरष्टकं तु धर्माद्यं कान्तिमत्पररूपधृत् ।
तच्च षोडशकं न्यस्य भूयो भूयो दिगष्टके ॥ ९२ ॥
सूक्ष्मरूपधरं विप्र प्राक्पदादीशगोचरम् ।
पद्मादिवन्हिवेश्मान्तमेकैकस्मिनन्यसेत्ततः ॥ ९३ ॥
तदेव गर्भदेशस्थं ह्यनुसन्धाय विन्यसेत् ।
भावासनावसानान्तं (नं तत् ?) मन्त्रैः स्वैस्स्वैरथार्चयेत् ॥९४॥
उपर्युपरि योगेन पुष्पधूपानुलेपनैः ।

[ चतुरस्रायतमण्डलकल्पनम् ]

युगावसाने पीठस्य पृष्ठे विधिसमीपतः ॥ ९५ ॥
कल्पनाजनितं कुर्याच्चतुरस्रायतं ततः ।
मण्डलं देवदेवस्य दक्षिणे मण्डलोपरि ॥ ९६ ॥
वायव्यकोणादारभ्य यावदीशानगोचरम् ।

[ गणेशादिपूजनम् ]

तत्रादौ तु स्वमन्त्रेण गणेशं पूजयेद्द्विजः ॥ ९७ ॥
ततो वागीश्वरीं देवीं तदन्ते गरुडं यजेत् ।
पूजयेच्च ततो भक्त्या गुरुं परमसंज्ञितत् ॥ ९८ ॥
परमेष्ठी ततः पूज्यस्ततः पितृगणं यजेत् ।
आदिसिद्धसमूहं च भगवद्ध्यानतत्परम् ॥ ९९ ॥
अनुज्ञां प्रार्थयेत्तेभ्यो यथानुक्रममेव च ।

[ हृदयकमलाद्भगवत आवाहन पूजनप्रकारः ]

गृहीत्वा शिरसा तां च तत आवाहयेत्प्रभुम् ॥ १०० ॥
आवाह्य मन्त्रेण मुने मुद्रायुक्तेन भक्तितः ।
प्रोच्चार्य मूलमन्त्रं तु हृदयस्थं च सर्वगम् ॥ १०१ ॥
अवतार्य क्रमेणैव रेचकेन शनैश्शनैः ।
नाडीभ्यां सन्धिदेशेन नीरूपेणामलेन च ॥ १०२ ॥
कल्पनारहितेनैव चिद्भावाभासितेन च ।
सर्वगस्य ततो विप्र सार्घ्यं पुष्पाञ्जलिं विभोः ॥ १०३ ॥

निक्षिप्याथोमुखेनैव पाणियुग्मेन मूर्धनि ।
लययागोक्तविधिना पूजयेत्प्रथमं ततः ॥ १०४ ॥
पुष्पार्घ्यलेपनैर्धूपैर्मूलमन्त्रादिभिः क्रमात् ।

[ लक्ष्म्यादीनां ध्यानपूर्वको न्यासक्रमः ]

ततो भगवतो विष्णोर्भासा भास्वरविग्रहात् ॥ १०५ ॥
लक्ष्म्यादीन्निस्सृता ध्यायेत्स्फुलिङ्गनिचया यथा ।
भोगस्थाने यथायोगमेकैकं विन्यसेत्ततः ॥ १०६ ॥

[ मण्डले मन्त्रन्यासक्रमः ]

मण्डलोपरि मन्त्रं च यथा तदवधारय ।
ऊर्ध्वतः पद्ममध्ये तु यथा भूतं तथा न्यसेत् ॥ १०७ ॥
मूलमन्त्रं द्विजश्रेष्ठ मूर्तियुक्तं तु पूर्ववत् ।
तदग्रसंस्थिते पद्मे लक्ष्मीं वै कर्णिकान्तरे ॥ १०८ ॥
कीर्तिं दक्षिणभागस्थे पृष्ठगे तु जयां न्यसेत् ।
मायां चोत्तरपद्मे तु कर्णिकान्ते[1]ऽथ विन्यसेत् ॥ १०९ ॥
आग्नेये हृदयं मध्ये शिरस्त्वीशानपङ्कजे ।
शिखां राक्षसदिङ्मध्ये कवचं वायुगोचरे ॥ ११० ॥
अथ मध्यस्थिते पद्मे देवस्य पुरतो दळे ।
नेत्रमन्त्रं विन्यसेत्तु विदिक्पत्रेषु चास्त्रराट् ॥ १११ ॥
अत्रैव नारसिह्माख्यं( ह्मं ? ) वराहान्तत्रयं क्रमात् ।
दिक्षु पत्रत्रयं( ये ? ) विष्णोर्याम्ये प्रत्यक्तथोत्तरे ॥ ११२ ॥
लक्ष्मीकमलयन्त्रा( पत्रा ? )णां सर्वेषां कौस्तुभं न्यसेत् ।
तद्वद्धृत्पङ्कजीयानां वनमालां निवेश्य च ॥ ११३ ॥
कीर्तिपङ्कजपत्राणां पद्ममाहूय विन्यसेत् ।
शार्ङ्गं शिखाब्जपत्राणां जयाब्जे चक्रमेव च ॥ ११४ ॥
ततस्तु तत्र पद्मे तु [2]पत्रस्थां विन्यसेद्गदाम् ।
मायाम्बुजच्छदे विप्र न्यसेत्पाशं ततो द्विज ॥ ११५ ॥
शीर्षाधारे तु वै पद्मे पत्राणामङ्कुशं ततः ।
न्यसेद्द्वारचतुष्के तु समाहूय खगेश्वरम् ॥ ११६ ॥

---

1 न्तेतु Y. 2 पद्म Y.

कर्णिकायां न्यसेत्सत्यं हृन्मन्त्रस्य ततो(थो ?)परि ।
आश्रित्य दक्षिणं भागमथ ब्रह्माम्बुजोपरि ॥ ११७ ॥
[1]मूर्तं मूर्तव्यपेक्षायां न्यस्तं मन्त्रेषु नारद ।
शिरस्यूर्ध्वे तु विन्यस्य वासुदेवं तथैव च ॥ ११८ ॥
शिखायामुपरि न्यासं कुर्यात्सङ्कर्षणस्य तु ।
अथोर्ध्वे कर्णिकायास्तु प्रद्युम्नं कवचोपरि ॥ ११९ ॥
लक्ष्म्यादिष्वनिरुद्धं च आधेयत्वेन चोपरि ।
ततस्सप्ताक्षरं मन्त्रं मूलमन्त्रोपरि न्यसेत् ॥ १२० ॥
प्राच्यादावीशपर्यन्तमिन्द्राद्यं चाष्टकं बहिः ।
नागेशं विन्यसेच्छेषमधःस्थमथ चोर्ध्वगम् ॥ १२१ ॥
ब्रह्माणं च सुरेशानमेवं लोकेशसन्ततिम् ।
न्यसेत्तदनु चास्त्राणि बहिस्तेषां तु विन्यसेत् ॥ १२२ ॥
पूर्वादिक्रमयोगेन यावदीशानगोचरम् ।
अधो नागेश्वरास्त्रं च ब्रह्मास्त्रमुपरि न्यसेत् ॥ १२३ ॥
त्र्यम्बकोत्तरदिग्भ्यां तु मध्यतः खस्थितं स्मरेत् ।
विष्वक्सेनं द्विजश्रेष्ठ आयान्तं गगनान्तरात् ॥ १२४ ॥
एवं न्यासं पुरा कृत्वा मन्त्राणां मण्डलान्तरे ।

[ अथ मन्त्राणा यथान्यास ध्यानविधिः ]

ततस्संचिन्तयेद्ध्यानमेकैकस्य यथास्थितम् ॥ १२५ ॥
मूलमन्त्रस्य देवा(वी ?)नां पुरा प्रोक्तं मया मुने ।
नोक्तं यद्धृदयादीनां तदेकाग्रमनाः श्रुणु ॥ १२६ ॥

[ हृदयमन्त्रध्यानप्रकारः ]

सितशोणितवर्णाभमेकवक्त्रं चतुर्भुजम् ।
गरुडासनसंस्थं च पद्मशङ्खकरान्वितम् ॥ १२७ ॥
मुद्रालङ्कृतिमत् ध्यायेद्दक्षिणं चापरं करम् ।
वामपाणिं द्वितीयं च संयुक्तमभयेन तु ॥ १२८ ॥
सिताभरणमाल्यैश्च कर्पूरालिप्तविग्रहम् ।
सम्मुखं देवदेवस्य हृन्मन्त्रं संस्मरेत्सदा ॥ १२९ ॥

1 मूर्ति Y

[ शिरोमन्त्रध्यान प्रकारः ]

बन्धुजीवोपमं रक्तं पद्मचक्रोद्यतंद्विज ।
स्वमुद्रासंयुतं ध्यायेत्पाणिना वरदेन च ॥ १३० ॥
कुङ्कुमेन विलिप्ताङ्गं रक्तभासं मनोहरम् ।
रक्ताभरणसंयुक्तं रक्तपुष्पविभूषितम् ॥ १३१ ॥
सम्मुखं मन्त्रनाथस्य शिरोमन्त्रं च संस्मरेत् ।

[ शिखामन्त्रध्यानप्रकारः ]

चलालिपटलाभं तु पद्मकौमोदकीधरम् ॥ १३२ ॥
आत्मीयमुद्रां धर्त्तारं युक्तं चाभयपाणिना ।
युक्तं मृगमदेनैव पुष्पाद्यैरसितैश्च तम् ॥ १३३ ॥
ईषत्स्मिताननं ध्यायेच्छिखामन्त्रं च नारद ।

[ कवचमन्त्रध्यानप्रकारः ]

मधुपिङ्गलवर्णाभं शङ्खचक्रधरं तथा ॥ १३४ ॥
स्वमुद्राव्यग्रितं ध्यायेत्पाणियुग्मयुतो(तं) परम् ।
मिश्रैर्विलेपनैर्लिप्तं मिश्रैः पुष्पादिभिस्तथा ॥ १३५ ॥
निरीक्ष्य(क्ष?)माणं च विभोः कवचं संस्मरेद्द्विज ।

[ नेत्रमन्त्रध्यानप्रकारः ]

रक्तपीतप्रभं चैव गदापद्मोद्यतं क्रमात् ॥ १३६ ॥
दक्षिणापरहस्ताभ्यां युक्तं चैव स्वमुद्रया ।
सकाश्मीरेण लिप्ताङ्गं चन्दनेन सितेन च ॥ १३७ ॥
पुष्पाभरणवासोभिः पीतैर्मण्डितविग्रहम् ।
संस्मरेन्नेत्रमन्त्रं तु सुनेत्रं च स्मिताननम् ॥ १३८ ॥

[ अस्त्रमन्त्रध्यानप्रकारः ]

राजोपलद्युतिमुषं गदाचक्रोद्यतं महत् ।
युक्तं चैव स्वमुद्राभ्यां सुवर्णसदृशैः शुभैः ॥ १३९ ॥
युक्तमाभरणाद्यैश्च प्रळयानलविक्रमम् ।
अस्त्रमन्त्रं विभोर्ध्यायेत्सम्मुखं स्वामिनः सदा ॥ १४० ॥
एकवक्त्राः स्मृताः सर्वे सर्वे च गरुडासनाः[1] ।
इतीदमुक्तमङ्गानां ध्यानं पापहरं शुभम् ॥ १४१ ॥

1 ननाः Y.

नृसिंहपूर्वमन्त्राणां त्रयाणामवधारय ।

[ नृसिंहमन्त्रध्यानप्रकारः ]

प्रळयाम्बुदनिर्घोषं [1]प्रोद्वमन्तं च पावकम् ॥ १४२ ॥
पद्मशङ्खगदाचक्रधर्त्तारं परमेश्वरम् ।
द्रवच्चामीकराभासं नानाभरणभूषितम् ॥ १४३ ॥
नानाविलेपनाङ्गं च प्रभूतस्रग्धरं द्विज ।
रक्तकौशेयवसनं नृसिंहं संस्मरेद्विभुम् ॥ १४४ ॥

[ कपिलमन्त्रध्यानप्रकारः ]

उदयादित्यसङ्काशं पिङ्गलश्मश्रुलोचनम् ।
चतुर्भुजमुदाराङ्गं पद्माद्यैरुपशोभितम् ॥ १४५ ॥
सितवस्त्रोत्तरीयं च मुक्ताभरणभूषितम् ।
सितमाल्यधरं ध्यायेत्कापिलं मन्त्रनायकम् ॥ १४६ ॥

[ वाराहध्यानप्रकारः ]

राजाश्मराशिवर्णाभं पीताभरणभूषितम् ।
महाद्युतिधरं ध्यायेच्चतुर्हस्तं च नारद ॥ १४७ ॥
प्राग्वल्लाञ्छनसङ्घेन कमलाद्येन मण्डितम् ।
[2]वराहमन्त्रनाथं च मधुपिङ्गळलोचनम् ॥ १४८ ॥
चलद्विद्युद्भ्रुवं रौद्रं ज्वालाश्मश्रुसटं[3] स्मरेत् ।
बालचन्द्राग्रतुल्येन युक्तं दंष्ट्राद्वयेन तु ॥ १४९ ॥
पद्मासनोपविष्टाश्च चिन्तयन्तः स्वकारणम् ।
सम्मुखाः [4]कर्णिकाधःस्थाः स्मर्तव्याः सर्वदा मुने ॥ १५० ॥

[ कौस्तुभादिध्यानप्रकारः ]

कौस्तुभं द्विभुजं ध्यायेत्सहस्रार्कसमप्रभम् ।
नानावर्णधरां देवीं वनमालां तथैव च ॥ १५१ ॥
कान्तां कमलपत्राक्षीं प्रौढस्त्रीसदृशीं द्विज ।
पुण्डरीकप्रभं पद्मं शङ्खं कुन्देन्दुसन्निभम् ॥ १५२ ॥
राजोपलप्रभं चक्रं हेमाभां संस्मरेद्गदाम् ।
द्विरष्टवर्षवत्कान्तां कुमारीं नवयौवनाम् ॥ १५३ ॥

[ गरुडध्यानप्रकारः ]

रक्ततुण्डं महाप्राणं भीमभ्रुकुटिलोचनम् ।

1 द्वहY. 2 वाराहं A. 3 जेट Y 4. कास्तस्य Y.

द्रवच्चामीकराकारं पक्षमण्डलमण्डितम् ॥ १५४ ॥
संस्मरेद्गरुडं विप्र गृध्रवक्त्रं पृथूदरम् ।

[ पाशाङ्कुशयोर्ध्यानप्रकारः ]

नवदूर्वाङ्कुरश्यामं पाशेशं पन्नगाननम् ॥ १५५ ॥
संस्मरेदङ्कुशं कृष्णं दीर्घनासं भयानकम् ।
स्वमुद्रालङ्कृताः सर्वे द्विभुजाश्चारुकुण्डलाः ॥ १५६ ॥
ध्यातव्याः पुरुषाकाराः स्वप्रभाभिर्विराजिताः ।
एतल्लाञ्छनमन्त्राणां ध्यानमुक्तं मया मुने ॥ १५७ ॥

[ सत्यादिपञ्चकध्यानप्रकाराः ]

सत्यादीनामथ ध्यानं समासादवधारय ।
द्विभुजं संस्मरेत्सत्यं सितमिन्दुशताकृतिम् ॥ १५८ ॥
वरदाभयहस्तं च ध्यानोन्मीलितलोचनम् ।
सितकौशेयवसनं मुक्तादामाद्यलङ्कृतम् ॥ १५९ ॥
सितचन्दनलिप्ताङ्गं सितपुष्पविभूषितम् ।
ऊर्ध्वस्थं मन्त्रनाथस्य ब्रह्मपु(प ? )त्रस्थितं स्मरेत् ॥ १६० ॥
पद्मासनेनोपविष्टं प्रसन्नवदनं द्विज ।
एवं विधं ततो ध्यायेद्वासुदेवं चतुर्भुजम् ॥ १६१ ॥
शङ्खपद्मधरं चैव वरदाभयदं विभुम् ।
प्रशान्तहुतभुग्रूपं न सितं नातिचारुणम् ॥ १६२ ॥
ध्यायेत्सङ्कर्षणं देवं प्रद्युम्नं संस्मरेत्ततः ।
पीतचम्पकवर्णाभं कमलायतलोचनम् ॥ १६३ ॥
शरद्गगनसङ्काशमनिरुद्धं स्मरेत्ततः ।
वासुदेवसमाः सर्वे भुजाभरण[1]लाञ्छनैः ॥ १६४ ॥
उपविष्टास्तथैवेते ब्रह्मरन्ध्राम्बुजेषु च ।

[ सप्ताक्षरमन्त्रध्यानप्रकारः ]

सुशुद्धस्फटिकप्रख्यं नीरूपमिव (मपि ?)रूपिणम् ॥ १६५ ॥
सर्वाकारधरं चैव सर्वाकारविवर्जितम् ।
सर्वतः पाणिपादं च सर्वतोऽक्षिशिरोमुखम् ॥ १६६ ॥
प्रसन्नरश्मिजालेन स्फटिकामलरूपिणा ।

---

1 भूषण Y.

स्वदेहनिस्सृतेनैव भासितं परितः प्रभुम् ॥ १६७ ॥
प्रतिबिम्बाति वै यस्मिन्मन्त्रचक्रं यथास्थितम् ।
ध्यायेत्ससाक्षरं मन्त्रं भोगस्थानगतं मुने ॥ १६८ ॥
एवं ध्यात्वा समभ्यर्च्य यथान्यासक्रमेण च ।

[ ध्यानानानन्तर न्यासक्रमेण मन्त्रगणस्य बाह्ययागप्रकारः ]

अर्घैः पाद्यैस्तथा पुष्पैः सुगन्धैरनुलेपनैः ॥ १६९ ॥
शालिपूर्णोत्थिताधारपृष्ठसंस्थैरनेकशः ।
सुगन्धघृतदीपैश्च पुष्पालम्बनचर्चितैः ॥ १७० ॥
महामोदैश्शुभोद्दीपैरच्छिन्नैर्गुग्गुलान्वितैः ।
भक्ष्यैर्भोज्यैस्तथा लेह्यैः पेयैरन्यैरनेकधा ॥ १७१ ॥
मधुपर्कैश्च मात्राभिः फलमूलैरनेकशः ।
पायसैर्विविधैर्दिव्यैः मोदकैः कृसरादिभिः ॥ १७२ ॥
सुसंस्कृतैश्च बहुभिर्मध्वाज्यादिपरिप्लुतैः ।
एकैकस्मिंस्तु वै भोगे मुद्रां कामदुघां पुरा ॥ १७३ ॥
समन्त्रां पूर्ववद्ध्यायेत्प्रोक्षयेदर्घ्यवारिणा ।
दत्वा पुष्पार्घ्यमुपरि संस्पृशेद्विष्णुपाणिना ॥ १७४ ॥
निवेदयेत्ततो विप्र शिरसाऽवनतेन च ।
यत्किञ्चन्मानसे यागे पुरा प्रोक्तं मया च ते ॥ १७५ ॥
तत्सर्वं देवदेवस्य बहुमूर्तं निवेदयेत् ।
असन्निधिश्च यो भोगो ह्यङ्गभावमनुव्रजेत् ॥ १७६ ॥
तत्तद्ध्यात्वा तु मनसा भक्त्या विष्णोर्निवेदयेत् ।
यथानुक्रमतो ह्येवं सर्वमन्त्रगणं मुने ॥ १७७ ॥
इष्ट्वा पूर्वं विधानेन भूयः संपूज्य केशवम् ।

[ पुष्पाञ्जलिप्रकारः ]

मूलमन्त्रं समुच्चार्य पुष्पैरापूर्य चाञ्जलिम् ॥ १७८ ॥
तन्मध्ये परमात्मानं मन्त्रं माणिक्यदीधितिम् ।
समस्तमन्त्रसंलीनं ध्यायेदुद्धारयोगतः ॥ १७९ ॥
पूरकादिविभागेन शब्देनातिप्लुतात्मना ।
यावच्छब्दावसानस्थो व्यज्यतेऽसावनेकधा ॥ १८० ॥

1 र्तिं A.

तन्त्रीशब्दात्मना विप्र ततो भासात्मना तु वै ।
ह्लादात्मना च तदनु आनन्दविभवात्मना ॥ १८१ ॥
तस्मात्सर्वपदातीतः सर्वत्र विभवात्मना ।
सच्चिद्घनोर्मिनिर्मुक्तशान्तबोधान्तरात्मना ॥ १८२ ॥
एवं षडूर्मिनिर्मुक्तं विकल्पातीतगोचरम् ।
अवगाह्य क्रमेणाथ पुनरेत्य पदात्पदम् ॥ १८३ ॥
ध्यात्वा मन्त्रं सहस्रांशुं सहस्रकरजामृतम् ।
रेचकेन विनिक्षिप्य देवदेवस्य मूर्धनि ॥ १८४ ॥
ततोऽछिन्नं करे कृत्वा धूपपात्रं तु दक्षिणे ।

[ धूपपात्रविधिः ]

पद्मचक्राङ्कितं दिव्यमाधारं कञ्जरूपिणम् ॥ १८५ ॥
एकनाळं च कर्तव्यं (कुर्वीत ? ) शेषं सप्तफणं विभुम् ।
बद्धाञ्जलिपुटं नित्यं ध्यायन्तं कारणं परम् ॥ १८६ ॥
चक्रलाङ्गलहस्तं च पद्मासनगतं विभुम् ।
कर्तव्यं ( कुर्वीत ? ) धूपधर्तारं किङ्किणीजालशोभितम् ॥१८७॥
चक्रं तच्चक्रहृदयं पद्मं हृत्कोटरं विदुः ।
चक्रे या या (ये ये ?) अराख्या (स्स्यु ?)स्ता नाड्यो वै
द्वादश स्मृताः ॥ १८८ ॥
किङ्किण्यो याः स्मृता विप्र ज्ञेयास्ताः सूक्ष्मनाडयः ।
यासां वै मध्यमा शक्तिर्भुजङ्गकुटिलोपमा ॥ १८९ ॥
धूमधूसरवर्णाभा अण्डं भित्वा विनिर्गता ।
कालाग्निहृदयोत्था सा सत्यान्ते तु लयं गता ॥ १९० ॥
तया संबोधितो ह्यात्मा मन्त्रमूर्तिधरः प्रभुः ।
सन्निधौ भवति, क्षिप्रमव्युच्छिन्नं दहेत्तथा ॥ १९१ ॥

[ धूपपात्रमन्त्रविधानम् ]

मन्त्रेणानेन विप्रर्षे तन्मन्त्रमवधारय ।
ओङ्कारं पूर्वमुद्धृत्य परमात्मा ततः पुनः ॥ १९२ ॥
व्योमानन्देन संयुक्तमनन्ताय पदं ततः ।
कालाग्निरूपाय पदं जगद्धूमपदं तथा ॥ १९३ ॥
सुगन्धिने पदं कुर्यात्सर्वगन्धवहाय च ।

नमः स्वाहासमायुक्तमेकत्रिंशाक्षरं परम् ॥ १९४ ॥
मन्त्रं द्विज समाख्यातं धूपपालस्य नारद ।
मुद्राध्यानसमायुक्तं (क्तां?) सर्वसिद्धिकरं (रीं?) परम् (राम्?) १९५
पूजितां धूपितां लिप्तां मन्त्रविन्यस्तविग्रहाम् ।
एकीकृत्य स्वशब्देन हृद्गतेनान्तरात्मना ॥ १९६ ॥

[ घण्टाचालनविधानम् ]

सञ्चालयेत्ततस्सम्यक्सशब्दां चक्रचिन्हिताम् ।
त्रैलोक्यद्राविणीं घण्टां सर्वदु[1]ष्टनिबर्हिणीम् ॥ १९७ ॥
एषा दूती हि मन्त्राणां सुप्तानां च प्रबोधिनी ।
वारणी सर्वविघ्नानां सर्वमन्त्रप्रसादिनी ॥ १९८ ॥
प्रणवान्ते ध्वनिर्घोष शब्दशक्तौ लयं गतः ।
वर्णदेहाः स्मृता मन्त्रा मन्त्रदेहाश्च देवताः ॥ १९९ ॥
घण्टास्तनितमूलास्ते प्रबुद्धाः कर्मसिद्धिदाः ।
परशब्दोत्थिता शक्तिर्घण्टास्तनितरूपिणी ॥ २०० ॥
वर्णत्वं समनुप्राप्ता तैर्वर्णैर्मुनिसत्तम ।
मन्त्राणां कल्पनादेहा नानाकाराः सहस्रशः ॥ २०१ ॥
स्वेच्छया त्वनया शक्त्या सामर्थ्यात्स्वात्मनस्स्वयम् ।
अनुग्रहार्थमिह हि भक्तानां भावितात्मनाम् ॥ २०२ ॥
मननान्मुनिशार्दूल त्राणं कुर्वन्ति वै ततः ।
ददते पदमात्मीयं तस्मान्मन्त्राः प्रकीर्तिताः ॥ २०३ ॥
अनभिव्यक्तशब्दास्ते निराकारास्तथैव च ।
घण्टायां चाल्यमानायां निर्यान्ति च सहस्रशः ॥ २०४ ॥
अत एव मुनिश्रेष्ठ मन्त्रमाता प्रकीर्तिता ।
एषा घण्टाभिधा शक्तिर्वागीशी च सरस्वती ॥ २०५ ॥
वाचि मन्त्राः स्थितास्सर्वे वाच्या मन्त्रे प्रतिष्ठिताः ।
मन्त्ररूपात्मकं विश्वं स बाह्याभ्यन्तरं ततः ॥ २०६ ॥
घण्टाशब्दगतं सर्वं तस्मात्तां चालयेत्पुरा ।
आवाहनेऽर्घ्ये धूपे च दीपे नैवेद्यजोषणे ॥ २०७ ॥
नित्यमेव प्रयुञ्जीत सम्यङ्मन्त्रार्थसिद्धये ।

---

1 दुःख Y.

पूजाकालं विनाऽन्यत्र हितं नास्याः प्रचालनम् ॥ २०८ ॥
नानया तु विना कार्यं पूजनं सिद्धिमिच्छता ।
यस्मात्तस्मात्परं मन्त्रमेतदीयमिदं शृणु ॥ २०९ ॥

[ घण्टामन्त्रनिरूपणम् ]

आदाय प्रणवं पूर्वमनन्तेशं ततः परम् ।
तच्चानलेन संभिन्नमूर्ध्वाधो मुनिसत्तम ॥ २१० ॥
त्रैलोक्यैश्वर्यदेनाथ लाञ्छयेत्पञ्चबिन्दुना ।
दद्यादस्यावसाने तु जगद्ध्वनिपदं ततः ॥ २११ ॥
मन्त्रमात्रे पदं चान्यत्स्वाहाक्षरसमन्वितम् ।
तदन्ते परमात्मानं प्रज्ञाधारोपरि स्थितम् ॥ २१२ ॥
भूधरेण युतं मूर्ध्नो भूधरोपरि विन्यसेत् ।
विश्वाप्यायकरान्तस्थं त्रैलोक्यैश्वर्यदं मुने ॥ २१३ ॥
त्रयोदशाक्षरो मन्त्रो घण्टाख्यस्सर्वसिद्धिकृत् ।
विन्यासकाले यस्या वै प्लुतमुच्चारयेत्ततः ॥ २१४ ॥

[ घण्टाध्यानप्रकारः ]

ध्यानयुक्तं द्विजश्रेष्ठ तद्ध्यानमवधारय ।
अधोमुखं तु ब्रह्माण्डं ध्यायेज्जनरवाकुलम् ॥ २१५ ॥
सनाळं च तदूर्ध्वे तु पद्ममष्टदळं तथा ।
प्रकीर्णपत्रं सुसितं (त?) केसराळं (ळिं?) सुकर्णिकम्॥ २१६ ॥
तन्मध्ये चिन्तयेद्देवीं वर्गाष्टक भुजान्विताम् ।
मुख्यहस्तचतुष्के तु लाञ्छनं कमलादिकम् ॥ २१७ ॥
कमलं च ततः शङ्खं पाशं चैवाङ्कुशं क्रमात् ।
स्फटिकं चाक्षसूत्रं च तथा विज्ञानपुस्तकम् ॥ २१८ ॥
अभयं वरदं चैव हस्तद्वितये परे ।
पद्मासने चोपविष्टां पद्मपत्रायतेक्षणाम् ॥ २१९ ॥
पद्मगर्भप्रतीकाशां पद्ममालाविभूषिताम् ।
विद्याभरणसंछन्नां पीतवस्त्रविवेष्टिताम् ॥ २२० ॥
दर्शयेद्देवदेवस्य मुद्रां नारायणात्मनः ।

[ लक्ष्म्यादिमन्त्राणामभ्यर्चनम् ]

लक्ष्म्यादीनां ततो भक्त्या मन्त्राणांच महामुने ॥ २२१ ॥

भूयोऽर्घ्यपुष्पगन्धेन धूपान्तेन समर्चयेत् ।

[ अथ स्तुतिः ]

ततः स्तुवीत देवेशं स्तोत्रेणानेन नारद ॥ २२२ ॥
सम्यक्प्रणवपूर्वेण नमोऽन्तेन तु वै त्रिधा ।
जितन्ते पुण्डरीकाक्ष नमस्ते विश्वभावन ॥ २२३ ॥
नमस्तेऽस्तु हृषीकेश महापुरुषपूर्वज ।

[ मधुपर्कादिसमर्पणप्रकारः ]

जपन्वै दधिसंपूर्णं मधुना सर्पिषाऽन्वितम् ॥ २२४ ॥
पात्रं करतले कृत्वा तन्मध्यस्थं प्रभुं स्मरेत् ।
मूलमन्त्रेण तद्वस्तु स्वरूपादुदितेन च ॥ २२५ ॥
लसत्पीयूषकल्लोलसत्तरङ्गेण नारद ।
तन्निवेद्य पुनर्भक्त्या भूयः पुष्पाञ्जलिं क्षिपेत् ॥ २२६ ॥
ततो निवेदयेद्विष्णोर्हिरण्यकटकादिकम् ।
अनन्तरं निमित्तार्थं ताम्बूलं तदनन्तरम् ॥ २२७ ॥
प्रक्षाल्य गन्धतोयेन अर्घ्यपात्रोद्धृतेन वै ।
पाणियुग्मं यथा वै स्यात्सार्धमत्यन्तनिर्मलम् ॥ २२८ ॥
नैवेद्यधूपपात्राद्यैः पात्रैश्च निर्मलीकृतम् ।
कृत्वा तद्गन्धदिग्धौ तौ अर्घ्येणार्च्य परस्परम् ॥ २२९ ॥
तन्निवेद्य विभोः पश्चाद्वाक्कर्ममनसाऽन्वितः ।

[ बाह्ययागपरिसमापनक्रमः ]

पुण्डरीकाक्ष विश्वात्मन्मन्त्रमूर्ते जनार्दन ॥ २३० ॥
गृहाणेदं जगन्नाथ मम दीनस्य शाश्वत ।
इत्युक्त्वा सोदकं पुष्पं कृत्वा दक्षिणपाणिगम् ॥ २३१ ॥
अग्रतो निक्षिपेद्विष्णोर्मूलमन्त्रेण नारद ।
भावयेच्च ततस्सम्यक्स्फुरन्तीं तारकावलीम् ॥ २३२ ॥
प्रविष्टां भवगद्वक्त्रे वक्रान्ताद्भूद्गतां पुनः ।
हृदयाद्विजशार्दूल संहाराख्यक्रमेण तु ॥ २३३ ॥
पूर्ववद्ब्रह्मरन्ध्रेण परेण सह योजयेत् ।
भगवन्तं ततो नत्वा अष्टांगेन तु भक्तितः ॥ २३४ ॥

समुत्थायासनात्तस्मिन्नर्घ्यपुष्पे विनिक्षिपेत् ।
यस्मात्तत्क्षणमन्त्रं(?) तु न शून्यं संपरित्यजेत् ॥ २३५ ॥
अज्ञानाज्ज्ञानतो वाऽपि यातमूनाधिकं च यत् ।
दासस्य मम दीनस्य क्षन्तव्यं लोकलोचन ॥ २३६ ॥

इति श्रीपाञ्चरात्रे जयाख्यसंहितायां बाह्ययागाख्यानं नाम त्रयोदशः पटलः ॥

## अथ जपविधानं नाम चतुर्दशः पटलः

नारदः—

ब्रूहि मे देवदेवेश विष्णोर्विभवमात्मनः ।
निर्णयं जपयज्ञस्य न ज्ञातं तत्कथं भवेत् ॥ १ ॥

श्री भगवानुवाच

एवं सन्तर्प्य देवेशं कुम्भे वा मण्डलादिषु ।
जपयज्ञविधानेन देवं सन्तर्पयेत्ततः ॥ २ ॥
तदा स सर्वकामार्थान्मनसेष्टान्प्रयच्छति ।

[ जपस्य त्रैविध्यम ]

जपं तु त्रिविधं कुर्यादक्षसूत्रकरार्पितः ॥ ३ ॥
वाचिकं क्षुद्रकर्मभ्य उपांशुं सिद्धिकर्मणि ।
मानसं मोक्षकमार्थं ध्यायेद्देवं तु सर्वतः ॥ ४ ॥
अक्षसूत्रं शुभं कार्यमदृश्यमितरैर्जनैः ।

[ अक्षसूत्रविधानम् तत्र मणिप्रमाणादिविशेषाः ]

अक्षास्थिमात्रैर्मणिभिर्ज्येष्ठं कुर्यात्सुवर्तुळम् ॥ ५ ॥
धात्रीफलानां गर्भेण प्रमाणं मध्यमं स्मृतम् ।
बदरास्थिप्रमाणेन [1]कनीयः समुदाहृतम् ॥ ६ ॥
अष्टोत्तरशतं पूर्णं तदर्धं पादमेव वा ।
कुर्यात्तच्च विधानोक्तं विधिना प्रतिकर्मणि ॥ ७ ॥
सौवर्णं द्रव्यसिध्यर्थमुत्तमं तत्र कारयेत् ।
पुष्ट्यर्थं रूपलाभाय राजतं पितृकर्मणि ॥ ८ ॥
मेधावीर्यमहातेजोलाभार्थं ताम्रमेव च ।
मध्यमं मुनिशार्दूल कार्यं चैवाक्षसूत्रकम् ॥ ९ ॥

---

1 कन्यसं Y.

यक्षाणां यक्षिणीनां च साधने त्रपुजं स्मृतम् ।
राक्षसानां पिशाचानां वशे सीसमयं तु वै ॥ १० ॥
पाताळसाधनार्थं तु अरीतिमयमुच्यते ।
सपन्नगानां नागानां साधने स्यात्तु कांस्यजम् ॥ ११ ॥
कनीयस्तु तदा कुर्यादायसं क्षुद्रकर्मणि ।
इति धातुमयानां च सूत्राणां विधयः स्मृताः ॥ १२ ॥
वक्ष्ये मणिमयानां च विभागं मुनिसत्तम ।
सर्वं मणिमयं चैव आयुरारोग्यभूतिदम् ॥ १३ ॥
मोक्षदं तु विशेषेण स्फाटिकं शान्तिकर्मणि ।
त्रितयं चोत्तमाद्यं यत्समं सर्वेषु कर्मसु ॥ १४ ॥
मूलजानामथो वक्ष्ये बीजानां विधिमुत्तमम् ।
सौभाग्ये वैद्रुमं कार्यमुत्तमाद्यं सदा त्रयम् ॥ १५ ॥
मुक्त्यर्थं पुत्र दीप्तैस्तु पुष्पैर्दोषप्रशान्तये ।
वक्ष्ये जलोत्थितानां च विषयं सर्वसिद्धिदम् ॥ १६ ॥
पद्मबीजैश्च शाङ्खैश्च श्रीकामो जपमारभेत् ।
आयुःप्रज्ञायशश्शान्तौ मौक्तिकं सर्वसिद्धिदम् ॥ १७ ॥
उत्तमादिविभागेन त्रितयं यत्प्रकीर्तितम् ।
एभ्यो मध्यादेकतमं ग्राह्यं चैव शुभे दिने ॥ १८ ॥

[ मणीनां क्षालनप्रकारः ]

सास्त्रेण गन्धतोयेन क्षाळयेत्तदनन्तरम् ।

[ सूत्रविशेषविधानम् ]

शाणं कार्पासकं वाऽथ प्राप्य सूत्रं नवं दृढम् ॥ १९ ॥
त्रिगुणं त्रिगुणीकृत्य चतुर्था वा यथा दृढम् ।
सुवेष्टितं तु वै कृत्वा क्षाळयेत्पूर्ववद्द्विज ॥ २० ॥

[ सूत्रे मणीनां योजनप्रकारः ]

निक्षेप्या मणयस्तस्मिन्सन्धानक्रमयुक्तितः ।
मणयस्सुसमास्सर्वे ऊनाधिक्यविवर्जिताः ॥ २१ ॥
जपार्थं मुनिशार्दूल नित्यं मन्त्रेषु निष्कळे ।
मणिभिः क्रमसूत्रैस्तु सुतन्तुकळ निष्कळे (?) ॥ २२ ॥

सकळे तु यथेच्छा वै सूत्रार्थं मणिगोळकाः (?)
युगळं युगळं सूत्रे परस्परमुखं द्विज ॥ २३ ॥
पृष्ठं पृष्ठस्य लग्नं वा यथा स्याद्योजयेत्तथा ।
सन्धाय चातिसुश्लिष्टं गहनं न भवेद्यथा ॥ २४ ॥

[ अक्षसूत्रस्य वलयाकारतापादनम् ]

परस्परमणीनां तु प्रोतानां मुनिसत्तम ।
अव्युच्छिन्नेन तेनैव त्वेकेन प्रोततन्तुना ॥ २५ ॥
मणिभ्यां सङ्गमोद्देशात्सूत्रं सूत्रेण वेष्टयेत् ।
यथा स्यात्कटकाकारं स्तब्धं वृत्तं विभक्तिमत् ॥ २६ ॥

[ अक्षसूत्रे मेरुकल्पनम् ]

ग्रन्थिसन्धावतो विप्र मणिसङ्ख्याधिकं ततः ।
मेरुं प्रकल्पयेन्मध्ये एकेन गुळिकेन च ॥ २७ ॥

[ अक्षसूत्रसंशोधनावधानम् ]

विलिप्य चन्दनाद्यैस्तु स्थापयेद्भाजने शुभे ।
संपूज्य पुष्पधूपाद्यैस्तस्य शुद्धिमथाचरेत् ॥ २८ ॥
दग्धमस्त्रेण संचिन्त्य वर्मणा मारुतेरितम्
आप्लाव्य मूलमन्त्रेण परमामृतरूपिणा ॥ २९ ॥
संशोध्यैवं पुरा सूत्रं देहवच्चिन्तयेत्ततः ।

[ अक्षसूत्रस्य दिव्यदेहत्वेन चिन्तनम् ]

चतुर्भुजं तु विरजो नारायणमिवापरम् ॥ ३० ॥
वरदाभयहस्तं च बद्धाञ्जलिधरं स्मरेत् ।
ब्रह्मद्वारस्थितं तच्च सूत्रं ध्यायेच्छिखोपमम् ॥ ३१ ॥
स्वमन्त्रेण द्विजश्रेष्ठ मन्त्रमत्र निबोधतु ।

[ अक्षसूत्रमन्त्रः ]

प्रोद्धरेत्प्रणवं पूर्वं तदन्ते कौस्तुभं न्यसेत् ॥ ३२ ॥
त्रैलोक्यैश्वर्यदोपेतं गोपनेनाङ्कयेच्च तत् ।
तदन्ते त्वक्षसूत्राय पदं पञ्चाक्षरं न्यसेत् ॥ ३३ ॥
नमस्कारान्वितः प्रोक्तो ह्यक्षसूत्रस्य मन्त्रराट् ।

[ स्वमन्त्रेणाक्षसूत्रस्य सकळीकरणपूजने ]

सकळीकरणं कुर्यान्मन्त्रेणानेन तस्य वै ॥ ३४ ॥

पूजयेच्च स्वमन्त्रेण ततस्तत्सन्धये क्रमात् ।

[ वैष्णव्याः परशक्तेरक्षसूत्रे भावनाक्रमविधानम् ]

या परा वैष्णवी शक्तिरभिन्ना परमात्मनः ॥ ३५ ॥
प्रचलत्पूर्णचन्द्राभा सूर्यवत्किरणावृता ।
युगक्षयोग्रहुतभुक्तेजसा तीव्रबृंहिता ॥ ३६ ॥
प्राग्वत्सृष्टिक्रमेणैव स्मरेद्धृत्पद्ममध्यगाम् ।
पूरकेण तु विप्रेन्द्र कुम्भकेन निरोधिताम् ॥ ३७ ॥
हृत्पद्मादुत्थितां भूयो ब्रह्मरन्ध्रावधिं स्मरेत् ।
ब्रह्मरन्ध्रात्ततो विप्र प्रोल्लसन्तीं शनैश्शनैः ॥ ३८ ॥
पूर्ववत्सन्धिमार्गेण चिन्तयेद्द्वादशान्तगाम् । (?)
रेचकाख्येन योगेन तथा सूत्रं तु भावयेत् ॥ ३९ ॥

[ अक्षसूत्रप्रभोद्भासितत्वेन यागालयस्मरणम् ]

भासितं चाथ सूत्रेण सर्वं यागालयं स्मरेत् ।
पूर्णेन्दुनेव गगनं,

[ मन्त्रात्मनो भगवच्छक्तेः सूत्रस्य मन्त्राक्षराणां चैकीभूतत्वभावनविधिः ]

निष्कळो मन्त्रराट् ततः ॥ ४० ॥
मन्त्रबृन्दसमायुक्तो मग्नस्तत्रेति चिन्तयेत् ।
मन्त्रात्मा भगवच्छक्तिस्सूत्रमन्त्राक्षराणि वै ॥ ४१ ॥
सर्वमेकीकृतं ध्यायेद्यथा क्षीरेण सोदकम् ।

[ सकलनिष्कलमन्त्रस्य सृष्टिक्रमेणाक्षसूत्रे सान्निध्यचिन्तनम् ]

तत्र पुष्पाञ्जलौ पृष्ठे गृहीत्वा चिन्तयेदिमम् ॥ ४२ ॥
सुसंस्कृताक्षसूत्रस्य पतन्तं पृष्ठतो द्विज ।
सृष्टिक्रमात्समायातं मन्त्रं सकळनिष्कळम् ॥ ४३ ॥
स्फुलिङ्गगणसङ्काशमाधेयतनुतां गतम् ।

[ भगवत्प्रार्थनापूर्वक तदभ्यनुज्ञयाऽक्षसूत्रस्य ग्रहणम् ]

इदं विज्ञाप्य देवेशमक्षसूत्रमथाच्युत ॥ ४४ ॥
प्रयच्छ मन्त्रजापार्थं स्मरेद्दत्तं च तेन तत् ।
गृहीत्वा शिरसा पश्चात्प्रसीद इति चोच्चरेत् ॥ ४५ ॥

[ अभ्यर्चनपूर्वकमक्षसूत्रे मन्त्रस्य प्रतिष्ठापनक्रमः ]

प्राप्तं संस्नापयेत्पश्चादर्घ्यपात्राच्च वारिणा ।

संपूज्य पुष्पधूपाद्यैर्मन्त्रं तत्र च विन्यसेत् ॥ ४६ ॥
साधारं साधनं चैव शक्तिपूर्वैस्समावृतम् ।
सन्निधौ भव देवेश सन्निरुद्धो भवाच्युत ॥ ४७ ॥
सूत्राख्ये मणिजालेऽस्मिन्यावच्चंद्रार्कतारकम् ।
एवं मुने प्रतिष्ठाप्य मन्त्रं सूत्रेऽक्षसंज्ञिके ॥ ४८ ॥
प्रतिष्ठितस्य वै पश्चान्मुद्रां स्वां च प्रदर्शयेत् ।

[ अक्षसूत्रमुद्रा ]

लग्नं तिर्यग्गतं कुर्यात्कुञ्चितं दक्षिणात्करात् ॥ ४९ ॥
चतुष्कमङ्गुलीनां च अङ्गुष्ठाग्रेण संस्पृशेत् ।
तर्जनादिक्रमेणैव कनिष्ठान्तं द्विजोत्तम ॥ ५० ॥
संस्पृशन्तं कनिष्ठान्तमङ्गुष्ठं चोर्ध्वमानयेत् ।
अक्षसूत्रस्य मुद्रैषा नित्यसन्निधिकारिणी ॥ ५१ ॥
जपं समारभेत्पश्चाददृश्यमितरैर्जनैः ।

[ जपारम्भात्प्राक्कर्तव्योऽनुसन्धानविशेषः ]

करणं वाङ्मनश्चैव मन्त्रेण परमात्मना ॥ ५२ ॥
विष्णुना शक्तिरूपेण भावितं भावयेत्पुरा ।
चेतसा यदुपारूढं तद्युक्तं वस्तु वाग्गतम् ॥ ५३ ॥
वस्तुयुक्तं च चैतन्यं वाक्तृतीया च नारद ।
समारोहेत्कर्मपदे विकारत्वे शनैश्शनैः ॥ ५४ ॥
एवं विवर्तते मन्त्रस्तुर्याज्जाग्रावधि क्रमात् ।
प्रातिलोम्येन वै विप्र पुनरेव निवर्तते ॥ ५५ ॥
करणं वाक्स्वरूपं स्याद्वाक्च चिद्रूपिणी भवेत् ।
यच्चित्तं स भवेन्मन्त्रो यो मन्त्रस्स त्वजो हरिः ॥ ५६ ॥
ब्रह्माद्यजाग्रत्पर्यन्तं पुनरत्रैव संनयेत् ।
व्यापकं यत्परं ब्रह्म शक्तिर्नारायणी च या ॥ ५७ ॥
सा ह्येव परिणामेन तुर्याख्यं[1] भजते पदम् ।
तुर्यं सुषुप्ततामेति सुषुप्तं स्वप्नतां व्रजेत् ॥ ५८ ॥
जाग्रत्वं स्वप्नमायाति एवं जाग्रादितः पुनः ।

---

1 ख S

[ जाग्रदादिभेदनिरूपणम् ]

भगवच्छक्तिपर्यन्तं सन्धानं चैकतां स्मरेत् ॥ ५९ ॥
यदनित्यमिदं विप्र चित्रवत्परिदृश्यते ।
बाह्यं विषयजालं च जाग्रदेतदुदाहृतम् ॥ ६० ॥
अनित्यप्रतिपत्तिर्या अस्मिन्नुपरि सर्वदा ।
भङ्गुरे स्वप्नतुल्यो यस्स स्वप्नो जाग्रकारणम् ॥ ६१ ॥
सुषुप्तं शान्ततां विद्धि स्वप्नवृत्तेः परं तु यत् ।
शक्तिरूपस्य वै विष्णोः प्राप्तस्तुर्यत्वमेति सः ॥ ६२ ॥
तया सह समत्वं च तुर्यातीतं तदुच्यते ।
मन्त्रातीतं परं मन्त्रं स्थूलसूक्ष्मद्वयं तथा ॥ ६३ ॥
आत्मानं पञ्चमं विप्र एकत्वेनानुसन्धयेत् ।
कृत्वैवमनुसन्धानं प्रारभेत जपं तथा ॥ ६४ ॥

[ अन्तर्हृत्पुण्डरीकादिव बहिरक्षसूत्रे मन्त्रस्योदय क्रमभावनम् ]

हृत्पुण्डरीकमध्यस्थो भारूपः परमेश्वरः ।
निर्मलस्फटिकप्रख्यः प्रस्फुरन्य ः स्वतेजसा ॥ ६५ ॥
तस्य शब्दमयी शक्ती(क्तिः ?)ज्वालावन्निस्सृतं महत् (ताहिया?)।
तद्धर्मधर्मिणी शुद्धा तस्या वै वर्णसन्ततिः ॥ ६६ ॥
निस्सृता मन्त्रजननी तदग्राच्चैव मन्त्रराट् ।
निस्सृतं(तु) यथा पुष्पं लताग्रान्मुनिसत्तम ॥ ६७ ॥
एवमेवाक्षसूत्रे तु उदितं च क्रमं स्मरेत् ।
हृल्लयं तल्लयीकुर्याद्धृल्लयस्य च तत्तथा ॥ ६८ ॥
एकस्य मन्त्रनाथस्य अन्तर्बाह्योदितस्य च ।

[ जपसङ्ख्याविधानम् ]

यदैकं तज्जपो विप्र लक्षसंख्याभिधो भवेत् ॥ ६९ ॥
एवं लक्षस्थितो यस्माज्जपस्तु परिसंख्यते ।
प्रयत्नादक्षसूत्रेण जपसंख्या तु सा स्मृता ॥ ७० ॥
अनेन क्रमयोगेन विष्णुवत्करणं भवेत् ।
विष्णुवद्योगमाश्रित्य अक्षमक्षं समाहरेत् ॥ ७१ ॥
सह प्राणोदयेनैव निष्ठाक्षं यावदेव हि ।

[ मेरोर्लङ्घननिषेधः ]

ततः प्रदक्षिणं कुर्यान्मेरुमूर्तिस्थितस्य च ॥ ७२ ॥
निष्कळस्य च मन्त्रस्य तदूर्ध्वेऽवस्थितस्य च ।
ग्रन्धीरूपस्य च विभोरमलस्य महात्मनः ॥ ७३ ॥
पृष्ठेन लङ्घनं यस्माद्वर्जनीयं तु नारद ।
मेरुमूलेऽङ्गुलिप्रान्तं शिष्टं कृत्वा शनैश्शनैः ॥ ७४ ॥
अङ्गुष्ठस्य भ्रमं कुर्यान्नमेरोर्लङ्घनं भवेत् ।
अङ्गुष्ठमूलमध्ये च भ्रामणीयं च छत्रवत् ॥ ७५ ॥
विधिनाऽनेन जप्तव्यो मन्त्रो ध्यानसमन्वितः ।

[ शान्तिकपौष्टिकादिनिमित्तभेदेन मन्त्रस्य भिन्नभिन्नरूपतया ध्यानविधानम् ]

शांन्तिके स्फाटिकाभं च पीतं ध्यायेच्च पौष्टिके ॥ ७६ ॥
वश्ये किंशुकपुष्पाभमाकृष्टौ नृपशैलवत् ।
मारणे कज्जळाभं तु विद्वेषे चाषपक्षवत् ॥ ७७ ॥
उच्चाटने च धूम्राभं मन्त्रं ध्यायेज्जपेत्सदा ।

[ परापरभेदेन जपस्य द्वैविध्यम् ]

परापरस्वरूपेण जपस्तु द्विविधः स्मृतः ॥ ७८ ॥
परदेहप्रदे( वे? )शे च तत्त्वानां प्रेरणे द्विज ।
क्रूरकर्मणि सिध्यर्थं जपो ज्योतिर्मयस्स्मृतः ॥ ७९ ॥
तत्रान्तर्लीनममलं शब्दं तु परिभावयेत् ।
भुक्तिमुक्तिप्रसिध्यर्थं दोषदुःखक्षयङ्करम् ॥ ८० ॥
शान्तौ तु सर्वकार्याणां सिध्यर्थमविचारतः ।
सुखसौभाग्यसिध्यर्थं तथाऽप्याधानकर्मणि ॥ ८१ ॥
जपो भवति शब्दाख्यस्तत्रान्तस्तु विभावयेत् ।
निशाम्बुकणसङ्काशप्रकाशात्मजनार्दनम् ॥ ८२ ॥
हृत्पद्मात्तु स्वमन्त्रेण भावयेच्छब्दमुत्थितम् ।
नित्योदितं तु तेनैव प्रयत्नहरि (रहि ?) तेन तु ॥ ८३ ॥
[1]प्राणापन्नपदस्थेन भावनामिश्रितेन च ।
जप्यमानस्तु वै मन्त्रस्सर्वकामफलप्रदः ॥ ८४ ॥

1 पाद Y.

अथ प्रयत्नजनितं शब्दमुत्थाप्य नारद ।
केवलं तु स्वमन्त्रेण बद्धलक्षस्तु पूर्ववत् ॥ ८५ ॥
अक्षरादक्षरं [1]यातमृतदोषेण वर्जितम् ।
विलम्बितं च नातीतं तथाऽस्फुटपदोज्झितम् ॥ ८६ ॥
चित्तविक्षेपरहितमत्युत्कृष्टधियाऽन्वितम् ।

[ अधिकारिणां सत्त्वादिगुणभेदेन जपकालभेदः ]

पूर्वान्हे मध्यभागेऽथ अपरान्हे दिनस्य तु ॥ ८७ ॥
क्रमाद्वै सात्विकादीनां वेलात्रयमुदाहृतम् ।
एवं कृत्वा जपन्विप्र विनिवेद्य च यागवत् ॥ ८८ ॥
मन्त्रात्मा भगवान्विष्णुरचिरात्सिद्धिदो भवेत् ।
प्रतिमासं द्विजश्रेष्ठ इष्ट्वाऽर्घ्यकुसुमादिभिः ॥ ८९ ॥

[ अक्षसूत्रस्यपुनर्नवीकरण—प्राचीनसूत्रपरित्यागयोर्विधानम् ]

सन्धानमुपसंहृत्य पूर्वं यच्चाक्षसूत्रकम् ।
विसर्जनाख्यमन्त्रेण मुद्रायुक्तेन नारद ॥ ९० ॥
सूत्रं चाभिनवं कृत्वा प्राग्वत्संस्कृत्य वेष्टयेत् ।
यथास्थितं मणीनां च योजनं चाचरेत्पुनः ॥ ९१ ॥
संस्नाप्य विधिवन्मन्त्री भूयस्तस्मिंस्तु विन्यसेत् ।
पुरा यदाहृतं चैव सूत्रच्छेदभयात्ततः ॥ ९२ ॥
पूजां कृत्वा तथा होमं तत्कर्मच्छिद्रकारणम् ।
पुराणसूत्रमादाय विभजेत्तन्तुजं च तत् ॥ ९३ ॥
बध्वा पाषाणखण्डे च अगाधेऽम्भसि निक्षिपेत् ।
विष्वक्सेनीयमन्त्रेण क्षिप्त्वाऽऽचम्य स्मरेद्धरिम् ॥ ९४ ॥
मूलमन्त्रेण विप्रेन्द्र सप्तवारान्समाहितः ।

इति श्रीपञ्चरात्रे जयाख्यसंहितायां जपविधानं नाम चतुर्दशः पटलः ।

---

[ अथाग्निकार्यविधानं नाम पञ्चदशः पटलः ]

श्रीभगवान्

जपं कृत्वा यथाशक्ति जपान्ते पूजयेत्प्रभुम् ।
भक्तितश्चार्घ्यपुष्पाभ्यां ततो धूपानुलेपनैः ॥ १ ॥
पश्चात्सन्तर्पयेद्विप्र अग्निमध्यगतं प्रभुम् ।

---

1 यातं Y.

[ कुण्डपरिकल्पनविधानारम्भः ]

देवादुत्तरदिग्भागे कुण्डं कुर्यात्सलक्षणम् ॥ २ ॥
देवागारात्तु वाऽन्यत्र भूमिभागे सलक्षणे ।
धूमनिर्गमनोपेतमण्टपे सुसमे शुभे ॥ ३ ॥
तत्र कुर्यात्पुरा वेदिं चतुरश्रां समन्ततः ।
सर्वलक्षणसंपन्नां कुर्यात्कुण्डं तदूर्ध्वतः ॥ ४ ॥
चतुरश्रं समं श्रेष्ठं वर्तुळं वा मनोरमम् ।
द्विग्विदिक्संस्थितं चैव काम्यानां कर्मणां हितम् ॥ ५ ॥
निष्कामो वा सकामो वा मध्यतस्सर्वदिक्षु च ।

[ कुण्डाना दिग्भेदेन फलभेदः ]

ईशानदिग्गते कुण्डे मन्त्रात्मा तर्पितो हरिः ॥ ६ ॥
ददाति सिद्धिं भौलोकीं तत्सिद्धीप्सोर्महात्मनः ।
वियद्गतिपरः कुण्डे जुहुयात्पूर्वदिक्स्थिते ॥ ७ ॥
रिपूणां निग्रहार्थाय होममाग्नेयदिग्गते ।
होमं दक्षिणदिक्कुण्डे शान्त्यर्थी ह्याचरेत्सदा ॥ ८ ॥
उत्सादनार्थमन्येषां कुण्डे नैरृतदिग्गते ।
अपमृत्युजयार्थी च सर्वोपप्लवशान्तये ॥ ९ ॥
होमं वारुणदिक्कुण्डे मन्त्रस्सन्तर्पितो यदा ।
( हुत्वा वारुणदिक्कुण्डे मन्त्रं सन्तर्पयेत्सुधीः ? )
यदा वायव्यदिक्कुण्डे मन्त्रस्सन्तर्पितस्तदा ॥ १० ॥
विविधानि निधानानि प्रयच्छ(च्छ)त्यचिरेण तु ।
आरोग्यं संपदं पुष्टिं प्रददाति च मन्त्रराट् ॥ ११ ॥
तर्पितस्सौम्यदिक्कुण्डे नात्र कार्या विचारणा ।

[ आहुतिसङ्ख्याभेदेन कुण्डाना मानभेदः ]

शतार्धसङ्ख्यहोमे च कुण्डं स्याद्द्वादशाङ्गुलम् ॥ १२ ॥
होमे साष्टशते चैवमुष्ट्यरत्निसमं भवेत ।
होमे सार्धशते चैव सारत्निस्सकनिष्ठिका ॥ १३ ॥
हस्तं सहस्रहोमे तु अयुताख्ये द्विहस्तकम् ।
लक्षहोमे चतुर्हस्तं कोटिहोमेऽष्ट हस्तकम् ॥ १४ ॥

[ खातमानम् ]

विस्तारार्धेन सर्वत्र खातस्तु परिशस्यते ।
स्वीयात्प्राङ्मेखलामानादायं खाते युगं पुरः ॥ १५ ॥
त्यक्त्वा तु मेखलाबन्धं ततश्चैव समारभेत् ।

[ कुण्डमानभेदेन मेखलानां मानभेदाः ]

प्रमाणं मेखलानां च यवद्वादशसम्मितम् ॥ १६ ॥
द्वादशाङ्गुलमानस्य कुण्डस्य परिकीर्तितम् ।
विस्तारतुल्यमुच्छ्रायो मेखलानां महामते ॥ १७ ॥
मेखलात्रितयं चैवमेकीकृत्य तु जायते ।
विस्तारस्तु ततोच्छ्रायस्सार्धं तु चतुरङ्गुलम् ॥ १८ ॥
रत्निमात्रस्य कुण्डस्य मेखला द्व्यङ्गुलाः स्मृताः ।
अङ्गुलं सकनिष्ठस्य कुण्डस्यार्धोत्तरं द्वयम् ॥ १९ ॥
त्र्यङ्गुला हस्तमात्रस्य कुण्डस्य समता स्मृता ।
द्विहस्तस्य द्विजश्रेष्ठ मेखलाश्चतुरङ्गुलाः ॥ २० ॥
चतुर्हस्तस्य कर्तव्यास्सर्वाश्चैव षडङ्गुलाः ।
अष्टाङ्गुलिश्च कुण्डस्य अष्टहस्तस्य कीर्तिताः ॥ २१ ॥

[ नाभिलक्षणम् ]

दिङ्मध्येऽप्यथ कुण्डस्य नाभिं (?) कुर्याद्द्विजोत्तम ।
अश्वत्थपत्रसदृशीं मेखलोपरि संस्थिताम् ॥ २२ ॥
यदुक्तं प्राङ्मया मानं मेखलानां क्रमेण तु ।
एकीकृत्य तु तत्सर्वं मध्यात्सूत्रेण लाञ्छयेत् ॥ २३ ॥
अर्धमर्धेन्दुवद्बाह्यात्तत्र [1]चातिशयेन च ।
मुखाद्यभ्यन्तरं यावत्क्रमेणानेन ह्रासयेत् ॥ २४ ॥
उभयोः पक्षयोर्विप्र गजोष्ठाकृतिवत्तथा ।
पृष्ठतो मेखलमानात्किञ्चित्कार्या द्विजोन्नता ॥ २५ ॥
एकमेखलमानाच्च त्र्यंशेनार्धेन वा मुने ।
क्रमेण ह्रासयेत्तावत्तावद्वै मेखलोच्छ्रितिः ॥ २६ ॥
ईषदुच्चा भवेत्सा वै मेखलोपरि संस्थिता ।
एकमेखलतुर्यांशमानं कुण्डान्तरे द्विज ॥ २७ ॥

1 सूत्रचयेन च Y.

योन्येषु (?) निस्सृतं कुर्यात्तमेवाधोगतं तु वै ।
आक्रम्य मेखलाभूमिं यावत्खातं तु संस्पृशेत् ॥ २८ ॥
इत्येतत्कथितं नाभेर्लक्षणं च यथास्थितम् ।
साधनं चतुरश्रस्य विद्धि कुण्डस्य यागवत् ॥ २९ ॥
चतुरश्रस्य वै मध्ये सूत्रं कृत्वा भ्रमं (?) ततः ।
चतुरश्रं समं कुर्यात्सर्वदिक्कोण वर्जितम् ॥ ३० ॥

[ कुण्डाना विकल्पः ]

नित्यनैमित्तके होमे वृत्तं वा चतुरश्रकम् ।
त्रिमेखलं तु कर्तव्यमोष्ठनाभिसमन्वितम् ॥ ३१ ॥
द्विमेखलं वा विप्रेन्द्र सुश्लक्ष्णं च मनोरमम् ।
एकमेखलकं वाऽपि कुण्डं क्षेपणि(?)णकर्मणि ॥ ३२ ॥

[ कुण्डे हवनस्य प्राशस्त्यम् ]

कुर्याचलं स्थिरं वाऽपि न हि कुण्डं विना शुभम् ।
हवनं विप्र मन्त्राणां तस्मात्कुण्डं च साधयेत् ॥ ३३ ॥

[ देशकालवैगुण्येन कुण्डस्यासम्भवे हवनप्रकारः ]

देशकालवशाचैव कुण्डं न घटते यदि ।
तं विना हवनच्छेदो न कार्यस्सिद्धिमिच्छता ॥ ३४ ॥
शोधिते ह्युपलिप्ते च स्थले चलमृदान्विते ।
होमस्तु विहितस्सम्यक् मन्त्रस्यामन्त्रितस्य च ॥ ३५ ॥
पिण्डिका चतुरश्रा तु बहिस्सर्वत्र शस्यते ।
मध्ये पद्मं प्रकुर्वीत श्रीपद्मं पद्ममध्यगम् ॥ ३६ ॥
एवं कृते शुभे कुण्डे अग्निकार्यं समाचरेत् ।
यागगेहात्तु वाऽन्यस्मिन्यदि गेहे महामुने ॥ ३७ ॥
पूर्ववद्द्वारयागं तु कृत्वा संप्रविशेत्ततः ।
तत्रैव यदि वा कुर्याद्दत्वाऽन्यच्चासनं शुभम् ॥ ३८ ॥
तत्र पूर्वोक्तविधिना उपविश्य समाहितः ।

[ कुण्डसंस्कारप्रकारः ]

कुण्डस्यारम्भकाले तु संस्कारा न कृता यदि ॥ ३९ ॥
निष्पन्नस्य च ते सर्वे विधेयाश्च क्रमेण तु ।
ताडयेदस्त्रमन्त्रेण पुष्पैर्दक्षिणपाणिना ॥ ४० ॥

गृहीत्वा चैकदेशात्तु कुण्डमध्याच्च मृत्कणम् ।
अङ्गुष्ठानामिकाभ्यां तु हृदयेन समुद्धरेत् ॥ ४१ ॥
अस्त्रेणैव समीकृत्य न स्यान्निम्नोन्नतं यथा ।
सेचयेत्कवचेनैव कुट्टयेत्तदनन्तरम् ॥ ४२ ॥
लेपयेद्गन्धतोयेन अस्त्रेण परिशोधयेत् ।
उल्लिखेदस्त्रराजेन दर्भकाण्डेन यत्नतः ॥ ४३ ॥
भूमावभ्यन्तरे कुण्डे दक्षिणाशादितः क्रमात् ।
उत्तराशावधिर्यावद्धद्वाद्रेखात्रयं समम् ॥ ४४ ॥
प्रत्यग्भागात्समारभ्य नयेत्पूर्वमुखं तु तत् ।
तन्मध्ये त्रितयं चान्यद्रेखाणामुत्तरामुखम् ॥ ४५ ॥
एवमुल्लिख्य विधिना प्रोक्षयेत्कवचेन तु ।
अच्छिन्नाग्रैस्ततो दर्भैरस्त्रमन्त्राभिमन्त्रितैः ॥ ४६ ॥
कुण्डभित्तिगणं सर्वं प्रोत्थितं परिभूषयेत् ।
कृत्वैवमक्षवाटं तु कुण्डसंस्कारमुत्तमम् ॥ ४७ ॥

[ नाभिपूजनम् ]

समभ्यर्च्य ततोऽर्घ्याद्यैर्मध्यतः प्रणवेन तु ।
तेनैव विधिना नाभिं पूजयेच्चन्द्रसन्निभाम् ॥ ४८ ॥

[ मेखलापूजनम् ]

मेखलात्रयपूजायां हृन्मन्त्रं तु प्रयोजयेत् ।

[ मेखलात्रये तत्त्वत्रयस्य पूजनम् ]

ततस्तत्वत्रयं पूज्यं मेखलात्रितयोपरि ॥ ४९ ॥
प्रधानपुरुषेशाख्यं प्रणवत्रितयेन च ।
अर्घ्यैर्विलेपनैर्धूपैरिष्ट्वा कुण्डं पुरा द्विज ॥ ५० ॥

[ कुण्डमध्ये आधारशक्त्याद्यासनकल्पनपूर्वकं नारायणाख्यायाः शक्तेः स्थापनप्रकारः ]

चतुष्पथे तु कुण्डस्थे सपुष्पं दर्भविष्टरम् ।
हृन्मन्त्रेण च विन्यस्य तत्रोपर्यथ पूजयेत् ॥ ५१ ॥
[†]सम्पूज्याग्निं समादाय सम्भ्राम्यायतनं त्रिधा ।
योनिमार्गेण निक्षिप्य वह्निबीजमनुस्मरेत् ॥ ५२ ॥

---

[†]अयं श्लोकः S पुस्तके योजितो दृश्यते । अन्येषु पुस्तकेषु नास्ति अस्थानेऽस्य प्रक्षेप इति प्रतिभाति ।

आधारशक्तिपूर्वं च आसनं वैष्णवं च यत् ।
तत्र नारायणाख्यां वै शक्तिं विद्योतलक्षणाम् ॥ ५३ ॥
लक्ष्म्याकृतिपदं प्राप्तममृताप्लुतदेहिनीम् ।
सर्वातिशयरूपां च सर्वशक्तिसमन्विताम् ॥ ५४ ॥
सौकुमार्येण रूपेण सर्ववस्त्वन्तरस्थिताम् ।
शाश्वतीं सृष्टिमार्गेण अवतार्य हृदम्बुजे ॥ ५५ ॥
पुरा ध्यानक्रमेणैव हृन्मन्त्रेण हृदम्बुजात् ।
स्वनामपदयुक्तेन सनमःप्रणवादिना ॥ ५६ ॥
रेचकेन विनिक्षिप्य कुण्डहृत्पद्ममध्यतः ।
संपूज्य गन्धपुष्पाद्यैः पद्ममुद्रां पदर्श्य च ॥ ५७ ॥
[1]चक्रमन्त्रेण संयुक्तामेवं कुर्याच्च सन्निधिम् ।

[ वह्नेरुत्पादनक्रमः ]

आदौ च भगवच्छक्तेर्वह्नेरुत्पादनाय च ॥ ५८ ॥
आदायारणिजं चाग्निं सूर्यकान्तोद्भवं तु वा ।
लोहपाषाणजं वाऽथ अदुष्टं लौकिकं तु वा ॥ ५९ ॥
तैजसे ताम्रपात्रेऽथ मृण्मयेऽभिनवे तथा ।

[ अग्नेस्ताडनप्रोक्षणादयो बाह्याः पञ्चसस्काराः ]

सन्ताड्य चास्त्रमन्त्रेण प्रोक्षयेच्छिखया च तम् ॥ ६० ॥
अर्चयेत्कवचेनैव कवचेनावकुण्ठ्य च ।
प्लावयेदमृतेनैव नेत्रमन्त्रेण नारद ॥ ६१ ॥

[ अग्नेः स्वात्मन्युपशमापादनपूर्वकं सृष्टिक्रमेण पदात्पदमवतारितस्य नाभिगतत्वचिन्तनम् ]

पूरकेणोपसृत्याथ स्वात्मन्युपशमं नयेत् ।
क्रमादानन्दशक्तौ तु प्राग्वदुद्धृत्य योजयेत् ॥ ६२ ॥
सृष्टिक्रमेण तद्भूयो ह्यवतार्य पदात्पदम् ।
शब्दास्पदावधिर्यावत्स्मरेन्नाभिगतं ततः ॥ ६३ ॥

[ नाभिकुण्डस्थतया भाविते तेजोविशेषे होमक्रमः ]

प्रणवेन तु नाभिस्थमग्नीषोमात्मकं यजेत् ।
त्रिधा समिद्भिर्भिन्नेन अद(ह?) मादिभिरादरात् ॥ ६४ ॥
त्रयाणामथ बीजेन भिन्नेनाथ यजेद्द्विज ।

---

1 उक्त S.

एकाहुतिप्रदानेन तत्रस्थो बुध्यते यथा ॥ ६५ ॥
तेन मार्गेण जप्तव्यं ध्यात्वा चाज्यामृतं हृदि ।

[ तस्याग्नेः स्वमन्त्रेण नाभीकुण्डादुत्थापनम् ]

ततः स्वमन्त्रेणोत्थाप्यो नाभिकुण्डाद्धुताशनः ॥ ६६ ॥

[ अग्नेर्मन्त्रः ]

कृत्वाऽऽदौ प्रणवं विप्र तदन्ते त्वजितं न्यसेत् ।
अशेषभुवनाधारमथ ऊर्ध्वेऽस्य योजयेत् ॥ ६७ ॥
ऊर्ध्वाधोभ्यां च तस्यैव भूधरौजौ न्यसेत्ततः ।
त्रैलोक्यैश्वर्यदं मूर्ध्नि बीजस्यास्य महामते ॥ ६८ ॥
ततः क्रमेण संयोज्य धरेशाद्यं च सप्तकम् ।
सुपर्णसंज्ञापर्यन्तं सप्तकस्यास्य योजयेत् ॥ ६९ ॥
ऊर्ध्वाधोभ्यां च नाळं तु मायाव्योमे तथोपरि ।
तेजसे पदमादाय ततः सप्तार्चिषे पदम् ॥ ७० ॥
स्वाहासमन्वितश्चाग्नेर्मन्त्रो ह्यष्टादशाक्षरः ।

[ स्वमन्त्रेण नाभीकुण्डादुद्बोधितस्य तेजसः पात्रस्थवह्नौ प्रक्षेपः ]

धूधूशब्दशरीरान्तं (?) सच्छब्दालोकबोधितम् ॥ ७१ ॥
विकल्पधूमनिर्मुक्तं सचैतन्यस्फुलिङ्गिनम् ।
नादान्तेन क्षिपेद्विप्र सिद्धिमार्गेण पूर्ववत् ॥ ७२ ॥
पुरा हुते च पात्रस्थे वन्हौ वन्हि(ह्निं ?)विशुद्धये ।
करद्वयेन चादाय भ्राम्य कुण्डे विनिक्षिपेत् ॥ ७३ ॥

[ कुण्डमध्ये प्रक्षिप्तस्याग्नेश्चिन्तनविशेषः ]

कुण्डमध्यस्थया चाथ शक्त्या नारायणाख्यया ।
नासाग्रेण तमग्निं च घ्रातं ध्यायेत्स्वहृद्गतम् ॥ ७४ ॥

[ वह्नेरुद्बोधनम् ]

त्रिपञ्च सप्त वा दद्यात् समिधे हृदयेन च ।
वह्नेरुद्बोधनार्थं तु नेत्रमन्त्रेण नारद ॥ ७५ ॥

[ पर्यग्निकरणम् ]

पर्यग्निकरणं कुर्याद्धृदयेनार्द्रपाणिना ।

[ परिस्तरणम् ]

स्तरं ततोऽस्त्रमन्त्रेण चतुर्दिक्षु त्रिधा त्रिधा ॥ ७६ ॥

प्रागादौ तु यथामूलं तदग्रैश्छादितं भवेत् ।
कुर्यात् स्तरसमाप्तिं तु सर्वदाऽऽत्मन उत्तरे ॥ ७७ ॥
स्तरोपर्यथ संस्थाप्य वन्हिकार्योपयोगि यत् ।

[ प्रणीतापात्रेध्मस्रुक्स्रुवाद्युपकरणद्रव्यसादनम् ]

प्रणीतापात्रयुग्मं तु तथेध्मयुगलं तु वै ॥ ७८ ॥
स्रुक्स्रुवद्वितयं चैवमाज्यस्थालीं तथैव हि ।
सर्वं संप्रोक्ष्य मूलेन निधायाथ स्तरोपरि ॥ ७९ ॥
प्रणीतापात्रमापूर्य तोयेन तदनन्तरम् ।
तत्रासनवरं ध्यात्वा विष्णुमूलेन विन्यसेत् ॥ ८० ॥
याग(गे ?)यज्ञपति(ते ?)मन्त्रमेवं संस्थाप्य चोत्तरे ।

[ परिधिविधानम् ]

प्रदद्याच्च ततो विप्र परिधीन्हृदयेन च ॥ ८१ ॥
यज्ञकाष्ठोद्भवान्स्पष्टान्सपर्णान्हस्तसम्मितान् ।
चतुर्यवपरीणाहानगारे हस्तसम्मिते ॥ ८२ ॥
अन्येषां द्व्यङ्गुला वृद्धिः परिधीनां द्विजोत्तम ।
यावदष्टकरं कुण्डमत ऊर्ध्वं न कारयेत् ॥ ८३ ॥

[ ब्रह्मादिलोकपालार्चनम् ]

विष्टराणि ततो दद्यात्तेषु पृष्ठे हृदा मुने ।
तत्पृष्ठे पूजयेन्नित्यं लोकपालान्स्वदिक्स्थितान् ॥ ८४ ॥
ब्रह्ममाहेन्द्ररुद्रादीन्गन्धपुष्पादिभिः शुभैः ।

[ स्रुक्स्रुवयोः सस्कारक्रमः ]

स्रुक्स्रुवाभ्यां च संस्कारमुपयामाग्रगैः कुशैः ॥ ८५ ॥
स्रुवं द्वादशधा शोध्यं ह्यस्त्रेणोष्णेन वारिणा ।
तथैव द्विजशार्दूल स्रुक्संशोध्या द्विधैव तु ॥ ८६ ॥
संक्षाल्यौ स्रुक्स्रुवौ ह्येवं शिखामन्त्रेण वै ततः ।
कुण्डस्थनाग्निना ताप्यौ

[ स्रुक्स्रुवयोर्लक्षणम ]

तयोर्लक्षणमुच्यते ॥ ८७ ॥
स्वबाहुदण्डमानेन मन्त्रज्ञः कल्पयेत्पुरा ।

दैवीसुक्सिद्धये काष्ठं विस्ताराच्च षडङ्गुलम् ॥ ८८ ॥
दैर्घ्याद्भागद्वयेनाथ दण्डमष्टास्रमुच्यते ।
सार्धद्व्यङ्गुलमानं तु कृत्वा शेषं तु शोधयेत् ॥ ८९ ॥
कलशं दण्डमूले तु कुर्यात्पद्मानन्नं शुभम् ।
कर्णिकास्थो यथा दण्डो भवेद्वै मुनिसत्तम ॥ ९० ॥
त्रिवलिं त्वथवा शङ्खं यथा दण्डस्तदास्यगः ।
कृत्वाऽग्रस्थं द्विधा भागं समांशेन प्रयत्नतः ॥ ९१ ॥
द्व्यङ्गुलं चाथ भागस्य वैपुल्यं चाग्रतः क्रमात् ।
दण्डावस्थस्य भागस्य त्र्यङ्गुलं परितः समम् ॥ ९२ ॥
दत्वा भ्रमं ततः कुर्यान्निम्नं खातं सलक्षणम् ।
तन्मध्ये पङ्कजं कुर्यात्प्रफुल्लं चोर्ध्वपल्लवम् ॥ ९३ ॥
आज्यकोशं तु तं विद्धि सप्तपञ्चपलोपमम् ।
पद्ममध्ये निमग्ना च कर्णिका वै सकेसरा ॥ ९४ ॥
द्वादशारं बहिश्चक्रं पद्मस्याष्टदलस्य च ।
पद्मबाह्ये तु कर्तव्यं शङ्खं कोणचतुष्टये ॥ ९५ ॥
ततोऽग्रभागस्य मुने पार्श्वयोरुभयोरपि ।
एकैकमङ्गुलं शोध्यं स विभाज्यस्त्रिधा ततः ॥ ९६ ॥
कर्णमेकेन भागेन मध्ये त्वस्यौ (त्वंसौ ?) द्वयेन तु ।
विच्छिन्नं वक्त्रमंसाभ्यां मध्यमेकाङ्गुलेन तु ॥ ९७ ॥
विस्तारं कर्णतुल्यं तु वर्जयित्वा ततः पुरा ।
कर्णदेशात्समारभ्य शेषं तु परिशोधयेत् ॥ ९८ ॥
क्रमागतेन सूत्रेण स्याद्वाराहाननं यथा ।
ततः पुष्करपत्रात्तु मुखाग्रं यावदेव हि ॥ ९९ ॥
कुर्यादाज्यप्रणाळं तु समं न्यूनाङ्गुलं मुने ।
ईषद्वै क्रमसूक्ष्मं च नाज्यं याति यथा द्रुतम् ॥ १०० ॥
हस्तमात्रं ततः कुर्यात्स्रुवं विप्र मनोरमम् ।
विस्तारं द्व्यङ्गुलं काष्ठं वैपुल्याच्च तदर्धतः ॥ १०१ ॥
विस्तारमानादग्रेऽस्य वृत्तं कुर्याद्द्विरङ्गुलम् ।
क्रमात्तन्निम्नखातं च गोळके चैव मुद्रितम् ॥ १०२ ॥

मध्ये मृगपदाकारचिन्हेन तु विराजितम् ।
विस्तारस्य त्रिभागेन ग्रीवा [1]साश्रा त्रिरङ्गुला ॥ १०३ ॥
मूले चोभयतः कुर्यात्स्वस्तिकं द्व्यङ्गुळायतम् ।
विचित्ररचनायुक्तं दण्डं श्लक्ष्णं तु वा भवेत् ॥ १०४ ॥
स्रुवमेवंविधं कुर्याद्धोमकर्मणि साधकः ।
संस्कारार्थं ततोऽग्नेर्वै तेन होमं समाचरेत् ॥ १०५ ॥

[ अग्नेः सस्कारद्वैविध्यम् ]

अग्नेश्च [2]दश संस्काराः कुण्डमध्यगतस्य च ।
बाह्ये तु पञ्चसंस्कारा एवं पञ्चदश स्मृताः ॥ १०६ ॥
प्रोक्षणं ताडनं बाह्ये अर्चनं चावकुण्ठनम् ।
अमृतीकरणं वन्हेः पञ्चैते कथिताः पुरा ॥ १०७ ॥

[ अग्नेर्गर्भन्यासादिसंस्काराः ]

कुण्डमध्ये तु वै विप्र प्राग्लक्ष्म्यां तु प्रयोजनम् ।
गर्भन्यासं पुंसवनं ततो वै वक्त्रकल्पना ॥ १०८ ॥
सीमन्तं वक्त्रनिर्यासं निष्क्रामं जातकर्म च ।
नामधेयं च भोगं च प्राशनाद्यं द्विजाखिलम् ॥ १०९ ॥
अधिकारं च सर्वान्वै हृदा कुर्याच्च नारद ।

[ अथाज्यसंस्काराः ]

आज्यकर्मणि वै कुर्याद्दशैवं विधिपूर्वकम् ॥ ११० ॥
अधिश्रयणमादौ हृन्मन्त्रेण कवचेन च ।
संप्लवोत्प्लवने चैव उपाधिश्रयणं तथा ॥ १११ ॥
प्रसादीकरणं चैव पवित्रीकरणं तथा ।
ततो नीराजनं नाम त्रीण्येतानि च नारद ॥ ११२ ॥
हृन्मन्त्रेण च कार्याणि कवचेनावकुण्ठनम् ।
अवलोकामृतीकारौ तेनैव तदनन्तरम् ॥ ११३ ॥
भाण्डस्थस्य यदाज्यस्य दर्भैः प्रज्वलितैः पुरा ।
स्पर्शनं विद्धि संस्कारमधिश्रयणसंज्ञकम् ॥ ११४ ॥

---

1 साग्रा A. 2 प्राशनभोगयोरेकसस्कारत्वाश्रयणेन दशविधत्वम्, एतदुत्तरत्र व्यक्तीभविष्यति ।

ततः पाणिद्वयेनैव अनामाङ्गुष्ठपीडितम् ।
मध्यनम्रं कुशाकाण्डं गृहीत्वाऽऽज्योपरि त्रिधा ॥ ११५ ॥
नयेत्तचानयेद्विप्र तमग्नौ निक्षिपेत्कुशम् ।
संप्लवोत्प्लवनावेतौ संस्कारौ परिकीर्तितौ ॥ ११६ ॥
उपाधिश्रयणं नाम यत्तद्रावणमुच्यते ।
परिवर्तनमन्यस्मिन्भाण्डे दोषापनुत्तये ॥ ११७ ॥
प्रसादीकरणं ह्येतत्ततो दार्भं पवित्रकम् ।
विनिक्षिपेच्च तन्मध्ये पवित्रीकरणं च तत् ॥ ११८ ॥
कुण्डादुल्मुकमादाय ज्वलन्तं धूमवर्जितम् ।
तेनावर्तं सकृद्विप्र तद्वै नीराजनं स्मृतम् ॥ ११९ ॥
नीरजीकृत्य तत्पश्चात्कवचोदरगं स्मरेत् ।
अवकुण्ठनमेतद्धि तर्जन्या यत्प्रदक्षिणम् ॥ १२० ॥
तेजसा हृदयस्थेन दृग्गतेनावलोकनम् ।
निरीक्षणमिदं विप्र ततस्तत्रोपरि स्मरेत् ॥ १२१ ॥
चन्द्रमण्डलमध्यस्थं धेनुमुद्रासमन्वितम् ।
मन्त्रं वै सौरभेयं च स्फुरदिन्दुशतप्रथम् ॥ १२२ ॥
तदन्तरस्थं मन्त्रेशं हिमाचलनिभं स्मरेत् ।
तत्स्रुतैरमृतौघैश्च शशिजैर्धेनुजैरपि ॥ १२३ ॥
सर्वसंस्कारसंयुक्तं स्मरेदाज्यं च भावितम् ।
अमृतीकरणं नाम इदं ते संप्रकाशितम् ॥ १२४ ॥
अवलोक्यामृतीकृत्य दातव्ये चैव चक्षुषी ।
[ स्रुक्स्रुवाभ्यां कुण्डस्य दक्षिणवामभागयोः क्रमादाज्यहोमः ]
स्रुव(च ?) माज्येन संपूर्य सूर्यबीजेन चिन्तयेत् ॥ १२५ ॥
सहस्रांशुं च तन्मध्ये दद्यात्कुण्डस्य दक्षिणे ।
अपरस्मिन्स्रुवे ध्यात्वा सोमाख्येनाक्षरेण तु ॥ १२६ ॥
पूर्णं शशाङ्कबीजं च प्रदद्यात्तु तदुत्तरे ।
[ कुण्डस्य मध्यभागे अग्नीषोमात्मकस्य यजनप्रकारः ]
ताभ्यामभ्यन्तरे पश्चादग्नीषोमात्मकं यजेत् ॥ १२७ ॥
यद्बीजं हि सतत्त्वस्य शरीरस्याखिलस्य च ।
अविभागेन वै यत्र संस्थिता देहधातवः ॥ १२८ ॥

बहिः ( र्हिं ? ) कण्ठोपमं ध्यात्वा लक्ष्मीबीजान्तरस्थितम् ।
उक्तं (क्त ?) बीजद्वयेनैव मन्त्रेणैकीकृतेन वै ॥ १२९ ॥
प्राग्वद्भूतं स्वयं दद्याद्ध्यान(त?)मन्त्रसमन्वितम् ।

[ तिलादिहोमद्रव्याणामाज्येन संस्कारः ]

ततश्चाज्येन संस्कार्याः सर्वहोम्यास्तिलादयः ॥ १३० ॥

[ अग्नेर्गर्भाधानादिसंस्काराणां विवेचनम् ]

अग्नेर्होमेऽथ कर्तव्यः सर्वसंस्कार[1]सिद्धये ।
हृदाऽनलं पुटीकृत्य कर्मनाम समुच्चरेत् ॥ १३१ ॥
संपादयामि स्वाहान्तः सर्वकर्मस्वयं क्रमः ।

[ अथ तत्र गर्भाधानसंस्कारविवेचनम् ]

श्रीकुक्षिकुहरे यद्वै बहिष्ठस्य प्रवेशनम् ॥ १३२ ॥
गर्भाधानं तु तं विद्धि संस्कारं प्रथमं मुने ।

[ पुंसवनम् ]

प्राणयोगाच्च या शक्तिर्वन्हि(ह्नेः ?) श्रीजठरे स्थिता ॥१३३॥
ज्वालारूपाऽक्षया सूक्ष्मा तस्याश्चित्प्रसरो हि यः ।
भगवच्छक्तिचैतन्यसंसर्गाच्च शनैः शनैः ॥ १३४ ॥
सत्वे (स्मृत्वै ?) तज्जुहुयादाज्यं तन्मन्त्रेणोदितेन च ।
भवेत्पुंसवनं चाग्नेश्चिच्छक्तिनयनात्तु वै ॥ १३५ ॥

[ अथ वक्त्रकल्पना ]

तस्य चार्चिष्मतो वक्त्रात्प्रबुद्धस्योद्भवन्ति ताः ।
आलोके दहने शक्त्या (क्ता ?) निराकारस्य सांप्रतम् ॥ १३६ ॥
गोळकाकृतिमात्रस्य विद्धि तां वक्त्रकल्पनाम् ।

[ सप्ताना वक्त्रार्चिषा नामानि ]

तासां वक्त्रार्चिषां चैव शृणु नामानि नारद ॥ १३७ ॥
प्रभा दीप्तिः प्रकाशा च मरीचिस्तपनी तथा ।
कराळा लेलिहा चैव कुण्डं व्याप्य व्यवस्थिताः ॥ १३८ ॥
ईशपूर्वाग्निदिग्भागे प्रभाद्यं त्रितयं स्मृतम् ।
रक्षोवारुणवायव्ये मरीच्याद्यं त्रयं तु तत् ॥ १३९ ॥

---

1 कामार्थे S.

उदग्दिङ्मध्यतो याम्ये स्थितैका लेलिहाऽभिधा ।

[ वक्त्रार्चिषा बीजगणः ]

आसां बीजगणं विश्वं वह्निबीजावसानकम् ॥ १४० ॥

पूर्वोदितक्रमेणैव प्रणवाद्यं नमोऽन्तकम् ।

[ अथ सीमन्तः ]

अव्यक्ताश्च तदन्तस्थाः शिरःपाण्यादयोऽखिलाः ॥१४१॥

स्वां स्वां वै कर्मसीमानं प्रबुद्धाः संश्रयन्ति ये ।

विभागकल्पना तेषां सीमन्तं तदुदाहृतम् ॥ १४२ ॥

[ अथ वक्त्रनिर्यासः ]

नरसिंह्मादयो वक्त्राः स्फुरत्तारकसन्निभाः ।

शक्तिचैतन्यमध्यस्थाः सा च शक्तिस्तदात्मना ॥१४३॥

सम्यक् परिणता विप्र तस्मात्ता निष्क्रमन्ति वै ।

स्वस्वस्थाने स्ववीर्येण वक्त्रनिर्यास उच्यते ॥१४४॥

[ अथ निष्क्रामः ]

मुखश्वासो (से?) न निर्यातध्यानं[1] श्रीकुक्षिगोचरात् ।

निष्क्रामः सह वै वह्नेः संस्कारो जुहुयाच्च तम् ॥१४५॥

[ अथ जातकम् ]

निस्सृतस्य च वै गर्भाज्जातकं तदुदाहृतम् ।

[ प्राशनम् ]

†हिरण्यमधुसर्पिभ्यां स्नानं संप्राशनं द्विज ॥ १४६ ॥

[ नामकरणम् ]

कुर्यात्तदनु वै नाम जातस्याग्नेः प्रयत्नतः ।

नामकारावसानं च प्रणवं वैष्णवाग्नये ॥ १४७ ॥

[ भोगः ]

अन्नप्राशनपूर्वस्तु भोगो दारावसानिकः ।

अभ्यङ्ग एकः संस्कारो होतव्यः पूर्ववद्द्विज ॥१४८॥

[ अथाधिकारः ]

ततोऽधिकारसंज्ञस्तु संस्कारो बहुरूपधृत् ।

[ उक्तसंस्कारसंस्कृतस्याग्नेर्नारायणत्वेन ध्यानम् ]

इति संस्कारसंशुद्धं वह्निं नारायणात्मकम् ॥ १४९ ॥

---

1 त A. †हिरण्येत्यस्यार्धस्य नामकारावसान चेत्यस्यार्धस्यानन्तर पाठः समुचितः प्रतिभाति ।

चतुर्भुजं चतुर्वक्त्रं शङ्खचक्रगदाब्जिनम् ।
कुण्डमध्यस्थितं ध्यात्वा उदयार्कसमप्रभम् ॥ १५० ॥

[ ज्वालामार्गेण हृदये प्रविष्टत्वभावनम् ]

तत्र तज्जनितं(तां ?) कुण्डाज्ज्वालामार्गेण चागताम् ।
परानन्दप्रकाशाभांनासिक्या(?)द्वादशावधि[1] ॥ १५१ ॥
ततोऽवतारयोगेन प्रविष्टां भावयेद्धृदि ।

[ अथ संस्कृतस्याग्नेः पूजनम् ]

संस्कृतस्याथ वै वह्नेः पूजां कृत्वा तु भक्तितः ॥ १५२ ॥
पुष्पैर्धूपेन दध्ना च तिलैरक्षतमिश्रितैः ।
अन्नैर्भक्ष्यफलोपेतैराज्येन क्रमशो द्विज ॥ १५३ ॥
संपूर्णहृदयेनैव स्वमन्त्रेणानलं ततः ।
तर्पयेत यथाशक्ति तिलाज्याद्यैरनुक्रमात् ॥ १५४ ॥
अग्नेः पूर्णाहुतिं दत्वा वौषडन्तां घृतेन च ।

[ अग्निमध्ये देवस्य पूजनम् ]

ततः पूजा प्रकर्तव्या देवस्याग्नेस्तु मध्यतः ॥ १५५ ॥

[ तत्र प्रथमं वन्हेः स्मरणप्रकारः ]

पूर्वं तं च स्मरेद्वह्निं साकारं निष्कळप्रभम् ।
स्वयोगबलवीर्येण व्यापकं सर्वदिग्गतम् ॥ १५६ ॥
सर्वतः करवाक्पादं सर्वतोऽक्षिशिरोमुखम् ।
कदम्बकुसुमाकारं स्वप्रभाभिर्विराजितम् ॥ १५७ ॥
कुण्डमापूरयन्सर्वं सर्वाकृत्या च सर्वतः ।
एवं हि विततो व्यापी निराकारः सुदीप्तिमान् ॥ १५८ ॥

[ व्योमवद्व्यापकतया भावितस्याग्नेर्मध्ये देवयजनम् ]

वह्निं तु व्योमवद्ध्यात्वा तन्मध्ये पूजयेत्प्रभुम् ।
गन्धपुष्पादिना चैव

[ अस्त्रादियजनम् ]

ततोऽस्त्रं कवचं यजेत् ॥ १५९ ॥

दक्षिणे बाहुमार्गे तु अनिरुद्धसमीपतः ।
अग्नीषोमात्मकं तत्र आत्मरक्षार्थमेव च ॥ १६० ॥

---

1 धि C. L. श Y.

देवं चक्रस्थितं चक्रं

[ अथ होमविधानम् ]

ततो होमं समारभेत् ।
तिलैर्घृतसमायुक्तैः द्रव्यैः सर्वैश्च याज्ञिकैः ॥ १६१ ॥
सुगन्धाज्यप्लुतैश्चैव कुर्वीत विधिवत्ततः ।

[ लक्ष्म्यादीना होमसङ्ख्याविधानम् ]

मूलमन्त्राच्चतुर्थांशं लक्ष्म्यादीनां च होमयेत् ॥ १६२ ॥
अङ्गानां शक्तिहोमाच्च अर्धं तु जुहुयात्ततः ।
तदर्धेन तु वक्त्राणां होमं कुर्याद्द्विजोत्तम ॥ १६३ ॥
वक्त्रेभ्यः कौस्तुभादीनामर्धं तु परिहोमयेत् ।
सत्यादीनां तदर्धं तु तेभ्यश्चार्धं परेऽक्षरे ॥ १६४ ॥
अर्धमर्धांशसंयुक्तमधिकं चाग्रवर्तिनाम् ।

[ जपानुगुण्येन होमस्य कर्तव्यता ]

जपकाले यथा होमे कर्तव्यं सिद्धिमिच्छता ॥ १६५ ॥
एवं ज्ञात्वा ततः कुर्यात्कोटिहोमाच्छतावधि ।
यस्मादतर्पितो मन्त्रो न कदाचित्फलप्रदः ॥ १६६ ॥
कामैरवश्यफलदैर्देशकालसमुद्भवैः ।

[ होमद्रव्यनिरूपणम् ]

तिलैर्घृतेन पयसा दध्ना वा पायसेन तु ॥ १६७ ॥
सिद्धान्नैः साधितैर्भक्ष्यैर्बीजलाजैश्च तण्डुलैः ।
मूलैः फलैः पल्लवैर्वा सुप्रशस्तैश्च कोमलैः ॥ १६८ ॥
सुगन्धैः स्थलपद्माद्यैः पुष्पैर्विम्र सितादिकैः ।
गुग्गुलेनाज्यमिश्रेण साज्यश्रीवेष्टकेन वा ॥ १६९ ॥
धात्रीफलैर्वा सरसैरुत्पलैश्च शुभैस्तथा ।
सुसितैः सितरक्तैश्च पद्मैर्बिल्वैः सुशोभनैः ॥ १७० ॥
दूर्वाकाण्डैरभग्नाग्रैः दन्तिसद्दन्तनिर्मलैः ।
एधोभिर्ब्रह्मवृक्षोत्थैः क्षीरद्रुममयैस्तथा ॥ १७१ ॥
अमृता क्षीरसंयुक्ता औदुम्बर्यो मधुप्लुताः ।
अच्छिन्नाग्रा ह्यभग्नाश्च कण्टकैः परिवर्जिताः ॥ १७२ ॥
सर्वास्त्रिमधुरक्ताश्च घृतयुक्तास्तु वा पुनः ।

[ होमद्रव्यभेदेन फलभेदः ]

आज्ययुक्तैस्तिलैः शान्तिः सिद्धयः सकलास्तथा ॥ १७३ ॥
घृतेन पयसा दध्ना होमस्तृप्तिं प्रयच्छति ।
पायसेन तु सिद्धान्नैर्भक्ष्यैः पुष्टिः सदा भवेत् ॥ १७४ ॥
बीजैर्धान्यैस्तण्डुलैश्च तर्पितो मन्त्रराड् भवेत् ।
प्रयच्छति सदा श्रेयः प्रसन्नः परमेश्वरः ॥ १७५ ॥
पल्लवैः फलमूलैश्च होमस्तुष्टिं प्रयच्छति ।
जहाति चापमृत्युं च रोगांश्चोपशमं नयेत् ॥ १७६ ॥
तर्पितः स्थलपद्माद्यैः पुष्पैश्चान्यैः सितादिकैः ।
सौभाग्यमतुलं विप्र अचिरात्संप्रयच्छति ॥ १७७ ॥
गुग्गुल्वाद्यैर्द्विजारोग्यं शुभैर्धात्रीफलैस्तथा ।
आज्याक्तैः पद्मबीजैश्च लक्ष्मीं शीघ्रं प्रयच्छति ॥ १७८ ॥
उत्पलैर्वश्यकामस्तु भोगकामश्च होमयेत् ।
दूर्वामृताभिर्होमेन आयुषो वृद्धिमाप्नुयात् ॥ १७९ ॥
एधोभिश्च शुभैर्होमाद्दोषशान्तिप्रदः प्रभुः ।

[ आहुतिप्रमाणभेदः ]

तिलानां शस्यते होमः सततं मृगमुद्रया ॥ १८० ॥
घृतस्य कावि(र्ष ?)को होमः क्षीरस्य च विशेषतः ।
शुक्तिमात्राहुतिर्दध्नः प्रसृतिः पायसस्य च ॥ १८१ ॥
ग्रासार्धमात्रमन्नानां भक्ष्याणां स्वप्रमाणतः ।
सर्वेषामेव बीजानां मुष्टिना होममाचरेत् ॥ १८२ ॥
अग्राङ्गुलिस्तु लाजानां शालीनां पञ्चकं हुनेत् (?) ।
फलानां स्वप्रमाणं च पल्लवानां तथैव च ॥ १८३ ॥
त्रितीयं मूलखण्डानां पुष्पाणां स्वप्रमाणतः ।
कर्कन्धुमात्रगुळिका होतव्या गुग्गुलैस्सदा ॥ १८४ ॥
धात्रीफलप्रमाणां वा संभवे सति होमयेत् ।
दूर्वाकाण्डानि विप्रेन्द्र चतुरष्टाङ्गुलानि वा ॥ १८५ ॥
समित्प्रदेशमानेन समच्छेदा त्वगन्विता ।

[ स्वाहाकार वषट्कार-वौषट्कारादिप्रयोगे निमित्तभेदनिरूपणम् ]

स्वाहाकारं सदा होमे पूर्णायां वौषडेव च ॥ १८६ ॥

तमेव शान्तिके कुर्याद्वषड्वाऽऽप्ययने सदा ।
स्वधा पितृक्रियायां च फट्कारः क्षयकर्मणि ॥ १८७ ॥
विद्वेषे हुं वशे ह्रीं च नमो मोक्षप्रसिद्धये ।

[ पूर्णाहुतिप्रकारः ]

कर्महोमावसाने च घृतेनापूर्य च स्रुव(च)म् ॥ १८८ ॥
अभावात्तु प्रभूतस्य( ? ) होमद्रव्येन पूरयेत् ।
तत्रोपरि घृतं दद्यात्ततोऽर्घ्यकुसुमादिभिः ॥ १८९ ॥
मूलदेशात्समारभ्य स्रुक्संपूज्या स्रुवान्विता ।
घृतयुक्तं तु तद्द्रव्यं स्रुचः पुष्करकुक्षिगम् ॥ १९० ॥
द्रवचन्द्रोपमं ध्यायेत्ततः पूर्णं समुद्धरेत् ।
स्रुग्दण्डं देहनाभौ तु मूले संरोध्य संस्मरेत् ॥ १९१ ॥
निष्कळं मन्त्रनाथं तु पूर्णशीतांशुसन्निभम् ।
आमूलाच्च मरुच्छक्त्या प्रोद्धरेच्च स्वविग्रहात् ॥ १९२ ॥
विधाय चेश्वराधारे तस्माद्धारामृतं महत् ।
नासिकासन्धिमार्गेण स्रुक्पद्मे पतितं स्मरेत् ॥ १९३ ॥
सामृतामाज्यधारां च वसुधारामिव क्षिपेत् ।
मुखमध्ये तु मन्त्रस्य तद्ब्रह्मविवरेऽथवा ॥ १९४ ॥
हृत्पद्मान्तर्गतां सम्यक्प्रविष्टामनुभावयेत् ।
तया वै बृंहितं मन्त्रं भावयेद्ब्रह्मधारया ॥ १९५ ॥
तृप्तं हृष्टं च पुष्टं च तुष्टं वै साधकोपरि ।
मन्त्रोच्चारसमेता वै शरीरकरणान्विता ॥ १९६ ॥
ध्यानोपेता द्विजश्रेष्ठ पूर्णेयं परिपातिता ।
सर्वसिद्धिकरी शश्वन्मोक्षळक्ष्मीविवर्धनी ॥ १९७ ॥

[ अग्नेर्वर्णादिभेदैः कर्मसिद्धेर्ज्ञातव्यता ]

बहुशुष्केन्धनेऽग्नौ च होतव्यं कर्मसिद्धये ।
अग्नेर्वर्णाश्च गंधाश्च शब्दाश्चाकृतयस्तथा ॥ १९८ ॥
विकाराश्च शिखाश्चैव संवेद्याः कर्मसिद्धये ।
पद्मरागद्युतिः श्रेष्ठो लाक्षालक्तकसन्निभः ॥ १९९ ॥
बालार्कवर्णो हुतभुक् जयार्थं शस्यते द्विज ।
इन्द्रकोपकवर्णाभः शोणाभो वाऽथ पावकः ॥ २०० ॥

शक्रचापनिभः श्रेष्ठः कुङ्कुमाभस्तथैव च ।
रक्तानां पुष्पजातीनां वर्णेनाग्निरिहेष्यते ॥ २०१ ॥
सुगन्ध[1]द्रव्यगन्धोऽग्निर्घृतगन्धश्च शोभनः ।
आयुर्दः पद्मगन्धः स्याद्बहुगन्धश्च सुव्रत ॥ २०२ ॥
उग्रगन्धोऽभिचारे तु विहितः सर्वदाऽनलः ।
जीमूतवल्लकीशङ्खमृदङ्गध्वनितुल्यकः ॥ २०३ ॥
शब्दोऽग्नेः सिद्धये हेतुरतोऽन्यः स्यादसिद्धिदः ।
छत्राकारो भ्रमः श्रेष्ठो ध्वजचामररूपकः ॥ २०४ ॥
विमानादिवितानानां प्रासादानां वृषस्य वा ।
आकारेणाथ हंसानां मयूराणां च सिद्धिदः ॥ २०५ ॥
रक्ताभस्तु यदा वह्निर्लक्षणात्परिदृश्यते ।
भग्नराजोपलाभश्च स्फटिकाभस्तथा शुभः ॥ २०६ ॥
यद्रूपं कथितं पूर्वं यदि तस्य प्रदक्षिणम् ।
अन्योन्यत्वं प्रपद्येत तथा सिद्धिकरोऽनलः ॥ २०७ ॥
गर्हितेन तु वर्णेन यदि कापोतिकादिना ।
परिवर्तं करोत्यग्निस्तदा विप्र विपर्ययम् ॥ २०८ ॥
होमान्ते तन्निमित्तं वै होमं कुर्याच्छताधिकम् ।
विषमाश्च शिखा वह्नेरुयादयश्च शुभावहाः ॥ २०९ ॥
ह्रस्वा ह्रस्वोन्नता दीर्घा ज्वालाः सिद्धिप्रदाः स्मृताः ।
स्निग्धः प्रदक्षिणावर्तः श्रुतिप्रच्छादितध्वनिः ॥ २१० ॥
स नित्यमेव शुभकृद्यदन्यैर्वर्जितो गुणैः ।

[ होमे प्रशस्तोऽग्निः ]

प्रदीप्ते लेलिहानेऽग्नौ निर्धूमे सगुणे तथा ॥ २११ ॥
हृद्ये तुष्टिप्रदे चैव होतव्याः श्रियमिच्छता ।

[ होमे वर्ज्योऽग्निः ]

अल्पतेजोऽल्परूपश्च विष्फुलिङ्गसमन्वितः ॥ २१२ ॥
ज्वालाभ्रमविहीनश्च कृशानुर्नैव सिद्धिदः ।
अप्रबुद्धे सधूमे च जुहयाद्यो हुताशने ॥ २१३ ॥
कर्महानिर्भवेत्तस्य त्वाभिचारार्थमश्नुते ।
दुर्गन्धश्चावलीढश्च पीतः कृष्णश्च यो भवेत् ॥ २१४ ॥

---

1 दिव्य C. L.

असकृत्कुं लिखेद्यस्तु स तु दद्यात्पराभवम् ।

[ तिथिभेदेन फलभेदाः ]

शुभे ग्रहे सुनक्षत्रे शुक्लपक्षे तिथिष्वपि ॥ २१५ ॥
द्वादश्यां धर्मकामार्थानग्निस्थः कुरुते विभुः ।
सौभाग्यं तु त्रयोदश्यामेकादश्यां ध्रुवं जयः (यं ?) ॥ २१६ ॥
पञ्चम्यां द्रव्यसिद्धिं च नवम्यां कीर्तिदः प्रभुः ।
तिथयः शुक्लपक्षे तु प्रोक्ताः सौभाग्यकर्मणि ॥ २१७ ॥
यथाकामं तु मोक्षार्थी पक्षयोरुभयोरपि ।

[ प्रभाद्यर्चिःसप्तके क्रमादेकैकस्मिस्तर्पितस्य मन्त्रस्य फलभेदः ]

प्रभामूर्तिगतो मन्त्रस्तर्पितो यदि नारद ॥ २१८ ॥
विद्यां प्रयच्छत्यचिरात् दीप्तिस्थो भूप्रदः प्रभुः ।
तापयत्याशु शत्रूणां प्रकाशोपर्यवस्थितः ॥ २१९ ॥
शत्रुक्षयं ददात्याशु मरीच्यामूर्ध्वगो विभुः ।
तपन्यामूर्ध्वगो मन्त्रः सर्वतापोपशान्तिदः ॥ २२० ॥
विपक्षोच्चाटनं कुर्यात्कराळासंस्थितो विभुः ।
लेलिहावस्थितो मन्त्रो यदि सन्तर्पितो मुने ॥ २२१ ॥
दद्यादभीप्सितं चैव देहान्ते परमं पदम् ।
इदमुक्तं मया विप्र होमकर्म समासतः ॥ २२२ ॥

[ होमान्ते कर्तव्यस्य तदुत्तराङ्गस्य विधानम् ]

होमान्ते सानलं मन्त्रं भूयः पुष्पादिभिर्यजेत् ।
मुद्राः प्रदर्शयेत्सर्वा मूलमन्त्रादितः क्रमात् ॥ २२३ ॥
सन्दर्शयेत्ततो वह्नेर्मुद्रां मन्त्रसमन्विताम् ।

[ अग्निमुद्रा ]

पद्माकारौ करौ कृत्वा अङ्गुष्ठौ च कनिष्ठिके ॥ २२४ ॥
संमील्य चाग्रदेशात्तु कर्णिकेव यथा द्विज ।
तर्जन्यादित्रयं शेषमूर्ध्वगं च करद्वयात् ॥ २२५ ॥
असंलग्नं तु निक्षिप्तं मुद्राऽग्नेः संप्रकीर्तिता ।

[ मण्डले विन्यस्तस्य मन्त्ररूपस्य भगवतो मूर्धनि पुष्पाञ्जलिसमर्पणप्रकारः ]

मण्डलाग्रं ततो यायाद्धोमं विष्णोः समर्प्य च ॥ २२६ ॥
आपूर्य पाणियुगलं पुष्पैस्तत्रोपरि स्थितम् ।

संस्मरेन्निष्कलं मन्त्रममृतेनोपबृंहितम् ॥ २२७ ॥
प्रभूतदीप्तिच्छुरितं निक्षिपेन्मन्त्रमूर्धनि ।

[ अथ प्रार्थना ]

तर्पितोऽसि विभोर्भ(भ ?)क्त्या होमेनानलमध्यगम्[1](ग ?)॥२२८॥
होमद्रव्येषु यद्वीर्यं तदिदं चात्मसात्कुरु ।
गृहीतं भावयेत्तेन प्रसन्नेनान्तरात्मना ॥ २२९ ॥

[ अथ मण्डलस्थस्य विसर्जनप्रकारः ]

विसर्जनं ततः कुर्याद्दत्वाऽर्घ्यं धूपसंयुतम् ।

[ अथ प्रसादस्य शिरसि धारणम् ]

प्रसादार्घ्यं सपुष्पं च कर्णिकोर्ध्वात्परिच्युतम् ॥ २३० ॥
गृहीत्वा स्वात्मनो मूर्ध्नि दत्वा

[ मण्डलादुद्धृतरजसा तिलकधारणम् ]

ऽथ रजसा मुने ।
ललाटे तिलकं कुर्यात्पीतरक्तेन मण्डलात् ॥ २३१ ॥

[ अर्घ्यपात्रे न्यस्तस्य मन्त्रस्य पूरकेण स्वदेहे व्याप्तत्वभावनम् ]

द्विधा यश्चार्घ्यपात्राभ्यां मन्त्रो न्यस्तः [2]पुरा द्विज ।
मन्त्रमुद्रासमेतेन पूरकेण तु नारद ॥ २३२ ॥
भासितं भावयेद्देहं तेनापादाच्छिरोऽवधि ।

[ भोगस्थानगताना मन्त्राणां मुख्यमन्त्रशरिरे प्रविष्टत्वभावनम् ]

भोगस्थानगता मन्त्राः पूजिता ये यथा क्रमात् ॥ २३३ ॥
मुख्यमन्त्रशरीरं तु संप्रविष्टांश्च संस्मरेत् ।
ज्वाला ज्वालान्तरे यद्वत्समुद्रस्येव निम्नगाः ॥ २३४ ॥

[सर्वमन्त्रास्पदस्य तस्य स्थूलमन्त्रशरीरस्य स्वकारणसूक्ष्मादिक्रमेण पररूपे प्रविष्टत्वभावनम्]

तं मन्त्रविग्रहं स्थूलं सर्वमन्त्रास्पदं द्विज ।
प्रविष्टं भावयेत्सूक्ष्मे बुध्यक्षे ह्युभयात्मके ॥ २३५ ॥
परे प्रागुक्तरूपे तु तं सूक्ष्ममुभयात्मकम् ।

[ पररूपस्य तस्य स्वहृदये प्रविष्टत्वभावनम् ]

तं परं प्रस्फुरद्रूपं निराधारपदाश्रितम् ॥ २३६ ॥
सिद्धिमार्गेणहृत्पद्मे संप्रविष्टं तु भावयेत् ।

---

1 गः C L., Y. 2 पुरा—बाह्ययागाख्याने ११२ पत्रे व्यक्तमेतत्

[ स्वहृदय प्रविष्टस्य परस्वरूपस्य भासाऽऽपादमस्तकं स्वदेहस्य व्याप्तत्वभावनम् ]

मन्त्रमुद्रासमेतेन पूरकेण तु नारद ॥ २३७ ॥
भासितं भावयेद्देहं तेनापादाच्छिरोवधि ।
प्रविष्टेन तु मन्त्रेण प्रयत्नेन विना द्विज ॥ २३८ ॥
विग्रहः कम्पते यस्य मन्त्रस्तस्य प्रसीदति ।

[ विसर्जनानन्तर दीक्षितेभ्यो नैवेद्यप्रदानम् ]

एवं विसृज्य मन्त्रेशं लोकपालास्त्रवर्जितम् ॥ २३९ ॥
दीक्षितानां द्विजानां च श्रद्धासंयमसेविनाम् ।
प्रदद्याद्विज नैवेद्यं शिष्याणां भावितात्मनाम् ॥ २४० ॥

[ मूलमन्त्राभ्यर्चने विनियुक्ताना पुष्पादीना समाहरणम् ]

वलमानस्य(?) मन्त्रस्य तुल्यकालं समाहरेत् ।
पुष्पाण्यस्त्रं च नैवेद्यं मूलमन्त्रोपयोजितम् ॥ २४१ ॥

[ समाहृतेन तेन द्रव्येण विष्वक्सेनाभ्यर्चनम् ]

तेन भाण्डस्थितेनापि समाहूयाम्बरान्तरात् ।
विष्वक्सेनं यजेद्भक्त्या ध्यात्वा वै मण्डलान्तरे ॥ २४२ ॥
चतुर्भुजमुदाराङ्गं गदाशङ्खधरं विभुम् ।
नवाम्रपत्रसङ्काशं पिङ्गलश्मश्रुलोचनम् ॥ २४३ ॥
पीतवस्त्रं चतुर्दंष्ट्रं स्वमुद्राद्वितयान्वितम् ।
समभ्यर्च्य क्रमात्साङ्गं मुद्रामस्याथ दर्शयेत् ॥ २४४ ॥

[ अथ कुण्डे विन्यस्तस्य मन्त्रस्य पुष्पैः पूजनम् ]

गत्वा कुण्डसमीपं तु मन्त्रं पुष्पैः प्रपूज्य च ।

[ भस्मना तिलकधारणम् ]

भस्मनाऽस्त्राभितप्तेन ललाटे तिलकं शुभम् ॥ २४५ ॥

[ मण्डलस्थस्येव कुण्डस्थस्य मन्त्रस्योपसंहरणम् ]

कृत्वा मण्ड(ल)वत्पश्चादुपसंहृत्य चात्मनि ।

[ अथ विष्वक्सेनस्य कुण्डे सन्तर्पणक्रमः ]

विष्वक्सेनस्ततो भक्त्या तर्पणीयस्तिलाक्षतैः ॥ २४६ ॥
वौषडन्तेन मन्त्रेण दद्यात्पूर्णाहुतिं द्विज ।
मण्डले पूजयित्वाऽथ कुर्यात्तस्य विसर्जनम् ॥ २४७ ॥

[ विष्वक्सेनविसर्जनम् ]

स्वमन्त्रेण द्विजश्रेष्ठ क्षमस्वेति पदेन च ।
मुद्रासमन्वितेनाथ नभस्युत्पतितं स्मरेत् ॥ २४८ ॥
पूर्णेन कलशेनाथ अस्त्रजप्तेन नारद ।
क्षीराम्बुमधुराज्येन प्लापयेन्मण्डलं तु तत्(?) ॥ २४९ ॥
ततः कुण्डात्समुत्थाप्य विष्वक्सेनं यथा पुरा ।

[ लोकपालादीना विसर्जनप्रकारः ]

पूजयेल्लोकपालांश्च पुष्पाद्यैस्तर्पयेत्ततः ॥ २५० ॥
एकाहुतिप्रदानेन शक्त्या वा बहुभिः पुनः ।
यथाविधि स्वमन्त्रेण पूजयित्वा विसर्जयेत् ॥ २५१ ॥
सास्त्रान्सपरिवारांश्च स्वं स्वं स्थानं क्रमेण तु ।

[ अथ क्षेत्रपालादीना घृतादिभिस्तर्पणक्रमः ]

गत्वा कुण्डसमीपेऽथ क्षेत्रपालादयः क्रमात् ॥ २५२ ॥
आधारशक्तेरारभ्य पीठमन्त्राश्च सर्वशः ।
गणेशाद्याश्च सिद्धान्तास्तर्पणीया घृतादिकैः ॥ २५३ ॥
सकृत्सकृत्स्वशक्त्या वा पूर्णां सर्वेष्वथ क्षिपेत् ।
पात्रस्थं कलशस्थं च मन्त्रतन्त्रावतारितम् ॥ २५४ ॥
क्रमेण चोपसंहृत्य घ्राणाग्रेण तु पूर्ववत् ।

[ अथ वह्नेस्तर्पणप्रकारः ]

स्वमन्त्रेण ततो वह्निं शक्तितस्तर्पयेद्द्विज ॥ २५५ ॥
अच्छिद्रकरणीं पूर्णां पूर्णामन्त्रेण पातयेत् ।
कुण्डे पुष्पाञ्जलिं कृत्वा वह्निमन्त्रमनुस्मरन् ॥ २५६ ॥
समाघ्राय न्यसेत्कोष्ठे ह्यवतारक्रमेण तु ।

[ अथाग्नेः परिषेचनम् ]

स्रुवन्तु तोयेनापूर्य कुण्डं बाह्ये प्रदक्षिणम् ॥ २५७ ॥
कुर्यादीशानकोणाद्वै अच्छिद्रोदकधारया ।

[ नैवेद्यादीना तोये प्रक्षेपविधानम् ]

नैवेद्यमुपसंहृत्य वस्त्रालङ्कारवर्जितम् ॥ २५८ ॥
अगाधोदकमध्ये तु वहत्यधिविनिक्षिपेत् ।

[ निमार्ष्ट्युपलेपनपूर्वकं सिद्धार्थकादीनामुत्किरणम् ]

सम्यक्कृत्वा निमार्ष्टि वै उपलिप्याथ चोत्किरेत् ॥ २५९ ॥
सिद्धार्थकादिलाजांश्च तिलं सुमनसोऽक्षतान् ।

[ रक्षार्थं स्थापितयोः कवचास्त्रयोरुपसहारः ]

वर्मास्त्रे ह्युपसंहृत्य रक्षार्थं योजिते पुरा ॥ २६० ॥

[ स्वविग्रहे कृतस्य न्यासस्योपसहारः ]

यागस्थानाच्च तिलकं कृत्वा न्यासं स्वविग्रहात् ।
उपसंहृत्य मेधावी कुर्याद्वै भोजनादिकम् ॥ २६१ ॥
इदमुक्तं समासेन मन्त्रसन्तर्पणं द्विज ।

[ अपात्रेऽस्य मन्त्रसन्तर्पणक्रमस्यावाच्यत्वकथनम् ]

वाच्यं नादीक्षितानां च नाभक्तानां कदाचन ॥ २६२ ॥
नान्यदर्शनसंस्थानां नोपहासरतात्मनाम् ।

[ पात्रे वक्तव्यता ]

सद्भावज्ञे तु वक्तव्यं समयज्ञेऽथ पुत्रके ॥ २६३ ॥
साधके तु गुरोर्वापि भक्ते स्निग्धे विमत्सरे
सत्यधर्मपरे वापि साचारे समयस्थिते ॥ २६४ ॥

इति श्रीपञ्चरात्रे जयाख्यसंहितायामग्निकार्यविधानं नाम पञ्चदशः पटलः ।

---

अथ दीक्षाविधान नाम षोडशः पटलः

नारदः—

श्रोतुमिच्छामि भगवन्दीक्षालक्षणमुत्तमम् ।
समयिनः[1] पुत्रकस्य साधकाचार्ययोस्तथा ॥ १ ॥
नैष्ठिकानां तथा स्त्रीणां शिशूनां भावितात्मनाम् ।
विस्तरेण समाख्याहि यदि सानुग्रहोऽसि मे ॥ २ ॥

श्रीभगवान्—

शृणु दीक्षां प्रवक्ष्यामि शिष्याणां भावितात्मनाम् ।
देवाग्निगुरुपूजासु अधिकारो यथा(या ? )भवेत् ॥ ३ ॥
सिद्धये मुक्तये चैव तां वक्ष्यामि त्रिधा यथा ।

[ आढ्यानाढ्यभेदेन दीक्षाप्रकारे भेदः ]

महामण्डलयागेन वित्ताढ्यानां तु कारयेत् ॥ ४ ॥

---

1 समाधिनः S. समधीनः Y.

वित्त[1]योगविमुक्तस्य स्वल्पवित्तस्य देहिनः ।
संसारभयभीतस्य विष्णुभक्तस्य तत्त्वतः ॥ ५ ॥
अग्नौ चाज्यान्वितैर्बीजैः सतिलैः केवलैस्तथा ।
द्रव्यहीनस्य वै कुर्याद्वाचैवानुग्रहं गुरुः ॥ ६ ॥

[ उपसन्नस्यावश्य दीक्षयितव्यता ]

यः समः सर्वभूतेषु विरागी वीतमत्सरः ।
जितेन्द्रियः शुचिर्दक्षः समग्रावयवान्वितः ॥ ७ ॥
कर्मणा मनसा वाचा भीतेष्वभयदः सदा ।
संबुद्धिपदसंप्राप्तस्तत्रापि भगवन्मयः ॥ ८ ॥
पञ्चकालरतश्चैव पञ्चरात्रार्थवित्तथा ।
विष्णुतत्त्वं परिज्ञाय एकं चानेकभेदगम्[2] ॥ ९ ॥
दीक्षयेन्मेदिनीं सर्वां किं पुनश्चोपसर्पितान् ।

[ एकस्यैवाच्युतस्यानेकरूपेण स्थितत्वनिर्देशः ]

निराश्रयमसङ्कल्पं स्वरूपादच्युतं स्थिरम् ॥ १० ॥
ग्राह्यग्राहकधर्मैश्च निर्मुक्तमचलं ध्रुवम् ।
एव( क ? )मेव फले पञ्च( ? )वक्ष्ये ते नैकधा स्थितम् ॥ ११ ॥
व्याप्तव्यापकभेदेन यथावन्मुनिसत्तम ।

[ परसूक्ष्मस्थूलात्मना त्रिधा स्थितेषु तत्त्वेषु अच्युतस्य त्रेधा व्याप्य स्थितिः ]

स्थूलं सूक्ष्मं परं चान्यद्व्याप्य तत्त्वत्रयं स्थितम् ॥ १२ ॥
प्रधानपुरुषेशाख्यं तथाऽन्यच्छ्रोत्रपूर्वकम् ।
व्याप्याच्युतः स्थितस्साक्षात् त्रिधा वै बुद्धिपश्चिमम् ॥ १३ ॥
त्रिविधं विष्णुतत्त्वं तु एकं ज्ञात्वाऽप्यनेकधा ।
एकैकेन तु भेदेन कुर्यात्सर्वेष्वनुग्रहम् ॥ १४ ॥
यथानुरूपं क्रमशः समयज्ञादिषु द्विज ।

[ मन्त्रमूर्तेर्भगवतस्त्रेधाऽवस्थानम् ]

पिण्डात्मा भगवानेक उपाङ्गाढ्यश्च स द्विधा ॥ १५ ॥
त्रिविधे मन्त्रराशौ तु त्रिधा चैव व्यवस्थितः ।

[ स्थूलसूक्ष्मपरात्मना मन्त्रराशेस्त्रैविध्यम् ]

†मणेराकृष्टिमन्त्रान्तो मान्त्रः माग्राशिरुच्यते ॥ १६ ॥

---

1 लोभ A. CL., S. 2 कम् CL.

† अत्र मणिशब्देन कौस्तुभः, आकृष्टिशब्देनाङ्कुशः, भूधरशब्देन वराहो विवक्षित. ।

लक्ष्म्याद्यो भूधरान्तश्च द्वितीयः सूक्ष्मसंज्ञितः ।
सप्तामूर्मू(र्णान्मू ? )र्तिमन्त्रान्तस्तृतीयस्तु परः स्मृतः ॥ १७ ॥
तत्त्व[1]( मन्त्र ? )ग्रामं समुच्चित्य स्थितः †संक्षेपकर्मणि ।

[ स्थूलसूक्ष्मपरात्मना त्रेधाऽवस्थितस्य मन्त्रराशेः स्थूलाद्येकैकराशौ प्रत्येक स्थूलादित्रिक-रूपेणावस्थितिः ]

त्रित्रिकावस्थरूपेण त्रयं कृत्वा त्रिधा स्वयम् ॥ १८ ॥
राशीनां भगवान्विष्णुर्लोकानुग्रहकृत्स्थितः ।
अङ्कुशाद्वैनतेयान्तं स्थूलात्स्थूलमिदं त्रिकम् ॥ १९ ॥
गदामन्त्राच्च शङ्खान्तं स्थूलमध्यं च नारद ।
पङ्कजात्कौस्तुभान्तं च स्थूलपारं भवेत्त्रिकम् ॥ २० ॥
वराहात्सिंहमन्त्रान्तं सूक्ष्मं स्थूलं त्रिकं स्मृतम् ।
अस्त्राद्धृदयपर्यन्तं सूक्ष्ममध्यो भवेत्प्रभुः ॥ २१ ॥
मायाशक्तेस्तु लक्ष्म्यन्तं भवेत्सूक्ष्मं परं तु तत् ।
समूलो मूर्तिमन्त्रो यः सर्वस्सप्तदशाक्षरः ॥ २२ ॥
परस्थूलमिदं विद्धि सप्तमं सर्वसिद्धिदम् ।
अनिरुद्धात्तु सत्यान्तं सर्वं तत्परमध्यमम् ॥ २३ ॥
परात्परं मन्त्रपदं नवमं भोगमोक्षदम् ।
विद्धि सप्ताक्षरं पिण्डं मन्त्रग्रामस्य नायकम् ॥ २४ ॥
उत्तरोत्तरता चैव सर्वेषां वर्तते क्रमात् ।
सामर्थ्येन तु वीर्येण ज्ञानेन विविधेन च ॥ २५ ॥
भवच्छेदे च दीक्षायां विविधासु च सिद्धिषु ।

[ मन्त्रसङ्घस्य तत्त्वसङ्घे संक्षेपमध्यविस्तारात्मकदीक्षात्रैविध्यानुगुण त्रेधाऽवस्थान-निरूपणम् ]

क्रमेण गन्धतन्मात्रात्प्रभुतत्त्वावधिं द्विज ॥ २६ ॥
मन्त्रसङ्घः परत्वेन किञ्चित्सङ्कोचरूपधृत् ।
स्थूलसूक्ष्मादि नवधा मध्ये विस्तारकर्मणि ॥ २७ ॥
भूयोऽनुक्रमयोगेन पञ्चविंशतिधा मुने ।
एकः स एव मन्त्रात्मा भिन्नोऽपि बहुभेदतः ॥ २८ ॥

---

1 तत्र CL.

† संक्षेपमध्यमविस्तारभेदेन त्रेधा वक्ष्यमाणे दीक्षाभेदे संक्षेपकर्मे समुच्चित्य स्थितिर्भावनीयेति यावत् ।

[ अधिभूताधिदैवाध्यात्मभेदेन त्रेधा विभिन्नस्य प्रत्येकं पञ्चविंशतिधाऽवस्थितिनिरूपणम् ]

अध्यात्मत्वाधिदैवत्वाधिभूतत्वव्यवस्थया ।
स्थितस्त्वीश्वरतत्त्वाच्च यावत्तत्त्वं धराभिधम् ॥ २९ ॥
ईश्वरोऽथ प्रधानं च बुद्धिश्चाहंकृतिर्मनः ।
पञ्चेन्द्रियाणि श्रोत्राद्याः पञ्च वागादयस्तथा ॥ ३० ॥
पञ्च शब्दादयश्चान्ये पञ्च भूतानि खादयः ।
अधिभूतगणश्चायमधिदैवगणं शृणु ॥ ३१ ॥
मकाराद्यानि बीजानि कावसानानि वै क्रमात् ।
ईश्वरादिषु तत्त्वेषु कथितास्साधिदैवताः ॥ ३२ ॥
मन्त्राश्चाध्यात्मरूपा ये क्रमशः शृणु नारद ।
सप्ताक्षरः परो मन्त्रो ह्यध्यात्मं चैश्वरं स्मृतम् ॥ ३३ ॥
सत्यादिपञ्चकं विद्धि प्रकृतेः परमव्ययम् ।
मूलमूर्तिसमेतं च बुद्धेरध्यात्ममुच्यते ॥ ३४ ॥
लक्ष्मीमन्त्रमहङ्कारे मनसः कीर्तिसंज्ञितम् ।
श्रोत्रेन्द्रिये जयाख्यं तु मायाख्यं च त्वगिन्द्रिये ॥ ३५ ॥
हृच्चक्षुरिन्द्रिये विद्धि जिह्वाग्रे तु शिरः स्मृतम् ।
शिखा घ्राणेन्द्रिये विद्धि वाक्तत्वे कवचं स्मृतम् ॥ ३६ ॥
पाणितत्त्वे भवेन्नेत्रमस्त्रं पादाभिधस्य च ।
पाय्वाख्यस्य च तत्त्वस्य सिंहमन्त्रं परं स्मृतम् ॥ ३७ ॥
कापिलं विद्ध्युपस्थस्य शब्दे वाराह उच्यते ।
स्पर्शे त्वध्यात्मरूपं च मन्त्रं कौस्तुभसंज्ञितम् ॥ ३८ ॥
रूपाख्यस्य तु मालाख्यं पद्मं विद्धि रसस्य च ।
शङ्खमन्त्रस्तु गन्धस्य चक्रं नभसि नारद ॥ ३९ ॥
गदामन्त्रः स्मृतो वायोरग्नेर्गारुड उच्यते ।
अप्तत्त्वस्य तु पाशाख्यो भूमेरङ्कुशसंज्ञितः ॥ ४० ॥
वैतत्येनोदिता मन्त्राः सतत्त्वा वितते क्रमे ।
दीक्षाकर्मणि संक्षिप्ते मध्यमे विततेऽथ च ॥ ४१ ॥
यावन्न त्रितयं ज्ञातं तावद्दीक्षा न जायते ।
एवमेष जगन्नाथो मन्त्रात्मा परमेश्वरः ॥ ४२ ॥

पञ्चविंशतितत्त्वेषु तत्त्वबीजेषु चैव हि ।
स्थितो ह्यधिष्ठातृत्वेन परत्वेन महामते ॥ ४३ ॥
ऊर्ध्वे सप्ताक्षरं विप्र स्थिता नारायणी स्थितिः ।
या ह्येव कथिता पूर्वं त्रिधा सैव तु नान्यथा ॥ ४४ ॥

[ तथाभूतस्य मन्त्रात्मनः परमेश्वरस्य विशेषतस्त्र्यक्षरे मन्त्रे सान्निध्यनिरूपणम् ]

स्थितीस्सर्वाश्च संहृत्य विशेषेण व्यवस्थितः ।
परं( र ? )सूक्ष्मयुतं(त ? )स्थूलरूपेण त्र्यक्षरे सदा ॥ ४५ ॥
मन्त्रे ह्यनुग्रहार्थस्तु भाविता भावितात्मनाम् ।

[ वक्ष्यमाणदीक्षाङ्गभूततत्त्वशोधने त्र्यक्षरस्य मन्त्रस्य विनियोगभेदः ]

त्रिरुच्चारेण वै कुर्याद्दीक्षां वा तेन नारद ॥ ४६ ॥
ईशप्रधानतन्मात्रसन्धाने शोधने सति ।
द्विरुच्चारेण वा कुर्यादीशप्रकृतियोगतः ॥ ४७ ॥
प्रकृतिर्द्व्यक्षरो( रे ? )शोध्या[1] प्रणवेनेश्वरस्तथा ।

[ सप्ताक्षरमन्त्रेणेश्वरतत्त्वसशोधनप्रकारः सोपपत्तिकः ]

सप्तार्णेनेश्वरं वाथ एकोच्चारेण शोधयेत् ॥ ४८ ॥
मन्त्रा यतोऽखिलास्तस्मिन्पिण्डे तत्त्वानि चेश्वरे ।
इत्येवं विष्णुतत्त्वं तु व्यापकत्वेन संस्थितम् ॥ ४९ ॥
ज्ञात्वा सम्यक्ततो दीक्षां मन्त्रैः कुर्याद्द्विजाखिलैः ।
यतः परेण विभुना सर्वे मन्त्रा अधिष्ठिताः ॥ ५० ॥

[ शिष्यलक्षणपरीक्षणपूर्वक शिष्याणां दीक्षितव्यता ]

परीक्ष्य तन्नियुक्तांस्तु ब्रह्मचर्यस्थितान् शुचीन् ।
दक्षान् जितेन्द्रियान्धीरान्गुरुदेवाग्नितत्परान् ॥ ५१ ॥
वर्णाश्रमगुणोपेतान्विनीतान् श्रद्धयाऽन्वितान् ।
शिष्यांश्च भगवद्भक्तान् संसारानलखेदितान् ॥ ५२ ॥
दीक्षयेद्विधिना मन्त्री मन्त्रदीक्षादितः क्रमात् ।
संस्थिताऽनेकभेदेन यथा तद्वदतः शृणु ॥ ५३ ॥

[ सामान्यदीक्षायास्त्रैविध्यम् ]

सर्वेषां केवलैर्मन्त्रैर्मान्त्री सामान्यलक्षणा ।
तत्त्वैर्बीजैस्तथा मन्त्रैर्ध्यानेन हवनेन च ॥ ५४ ॥

1 च्चार्य Y.

सामान्या हि( त्रि ? )विधा चान्या सर्वेषां भावितात्मनाम् ।
संक्षिप्ता मध्यमा सा च तृतीया चातिविस्तरा ॥ ५५ ॥

[ सक्षिप्तादित्रयस्य फलभेदः ]

क( अ ? )ल्पकालं च संक्षिप्ता भोगं यच्छति सङ्कटम् ।
मध्यमा मध्यमं भोगं तथा कालं प्रयच्छति ॥ ५६ ॥
अनन्तभोगफलदा भवेद्भोगाभिलाषिणाम् ।
प्रभावाद्धोमपूजाभ्यां विस्तीर्णा कालमक्षयम् ॥ ५७ ॥
समत्वमपवर्गे तु भवेद्दीक्षात्रयस्य च ।

[ विशेषदीक्षायाः पञ्चविधत्वम् ]

विशेषाख्या च या दीक्षा पञ्चधा सा व्यवस्थिता ॥ ५८ ॥

[ पञ्चविधासु विशेषदीक्षासु प्रत्येकमधिकारिभेदनिरूपणम् ]

प्रथमा समयज्ञानां बलानां विष्णुचेतसाम् ।
भक्तानां कन्यकानां च द्वितीया पुत्रकेषु च ॥ ५९ ॥
तृतीया मोक्षमार्गस्था साधकानां तु वै सदा ।
चतुर्थी मुनिशार्दूल ब्रह्मसायुज्यदायिका ॥ ६० ॥
देशिकानां तु कर्तव्या अङ्गनानां तु पञ्चमी ।

[ सक्षिप्तमध्यमविस्तृतभेदभिन्नासु सामान्यदीक्षासु क्रमात्तत्त्वसयोजनप्रकारभेदः ]

एतासां क्रमशो वक्ष्ये समत्वं तत्त्वसंग्रहम् ॥ ६१ ॥
येन विज्ञातमात्रेण दीक्षा सम्यक्प्रवर्तते ।
संहारक्रमयोगेन मन्त्रराशित्रयं च यत् ॥ ६२ ॥
प्रागुक्तं योजनीयं तत्तृतीये( त्रितयं ? ) बीजसंयुते( तम् ? ) ।
तन्मात्रके प्रधाने च ईश्वराख्ये च शुद्धये ॥ ६३ ॥
राशित्रयस्य यो भेदः कथितो नवधा पुरा ।
अङ्कुशात्सप्तवर्णान्तं तन्मात्रेषु च पञ्चसु ॥ ६४ ॥
अहङ्कारे तथा बुद्धौ प्रकृतौ चेश्वरे च वै ।
तया संहृतियुक्तया वै गन्धमात्रादितः क्रमात् ॥ ६५ ॥
विस्तीर्णायां तृतीयायां यदध्यात्मादिनोदितम् ।
क्रमः स एव बोद्धव्यः सृष्टिसंहारयोगतः ॥ ६६ ॥
सामान्यत्रितयस्येदं दीक्षायोगस्य लक्षणम् ।

[ अथ विशेषदीक्षापञ्चकभेदे प्रत्येक मन्त्रैस्तत्त्वसंयोजनप्रकारभेदः ]

पञ्चकस्याधुना विद्धि विशेषाख्यस्य नारद ॥ ६७ ॥

त्र्यक्षरं पदभेदेन मूर्तिमन्त्रसमन्वितम् ।
संक्षिप्ते तत्त्वजाले तु योजनीयं क्रमेण तु ॥ ६८ ॥
तन्मात्राणां च ह्रीं स्वाहा पञ्चानां तु सकृन्न्यसेत् ।
विश्वात्मने पदं यच्च द्वितीयं तदहङ्कृतौ ॥ ६९ ॥
नारायणाय बुद्धौ तु तृतीयं योजने( येत् ? )स्मरन् ।
नमः प्रधानतत्वे तु त्र्यक्षरं चेश्वरे ततः ॥ ७० ॥
विशेषपञ्चकस्यैषा प्रथमा परिकीर्तिता ।
द्वितीयं शृणु विप्रेन्द्र सर्वसिद्धिप्रदा हि या ॥ ७१ ॥
गन्धतन्मात्रपूर्वाणि हृदयाद्यैरनुक्रमात् ।
अहङ्कारं तु नेत्रेण( ? ) बुद्धिं जीवेन शोधयेत् ॥ ७२ ॥
प्रधानं मध्यमेनैव देवीनां हृदयेन तु ।
ईश्वरं प्रणवेनैव कुर्यात्तत्रैव योजनम् ॥ ७३ ॥
पुत्रकाणां स्मृता दीक्षा विधिनाऽनेन नारद ।
साधकानां तु वक्ष्यामि तत्त्वशुद्धौ क्रमेण तु ॥ ७४ ॥
संशोध्य गन्धतन्मात्रं वक्त्रमन्त्रत्रयेण तु ।
रसाख्यमङ्गषट्केन रूपमात्रं च शक्तिभिः ॥ ७५ ॥
समस्तमूलमन्त्रेण शोधयेत्स्पर्शसंज्ञितम् ।
संशोध्य शब्दतन्मात्रमनिरुद्धेन नारद ॥ ७६ ॥
प्रद्युम्नेन त्वहङ्कारं बुद्धिं सङ्कर्षणेन च ।
प्रधानं वासुदेवेन ततः सत्येन चेश्वरम् ॥ ७७ ॥
शोधयेत्साधकस्यैवं तत्त्वं सद्वैष्णवस्य च ।
दीक्षार्थे तत्त्वसंशुद्धौ गुरोर्मन्त्रानथो शृणु ॥ ७८ ॥
दशभिस्सास्त्रमन्त्रैस्तु गन्धमात्रं तु संहरेत् ।
लोकेशाद्यै रसाख्यं तु रूपाख्यं कौस्तुभादिकैः ॥ ७९ ॥
स्पर्शसंज्ञं त्रिभिर्वक्त्रैर्हृदाद्यैः शब्दसंज्ञितम् ।
लक्ष्म्याद्यैरप्यहङ्कारं बुद्धिं मूलेन शोधयेत् ॥ ८० ॥
प्रधानमथ सत्याद्यैः पञ्चभिः परिशोध्य च ।
सप्ताक्षरेण मन्त्रेण शोधयेदीश्वरं ततः ॥ ८१ ॥
क्रम एष हि दीक्षायामाचार्याणामुदाहृतः ।
स्त्रीणां तु भोगसिद्ध्यर्थं शृणु दीक्षाक्रमं मम ॥ ८२ ॥

पुरुषं प्रथमे तत्त्वे योजयेद्गन्धसंज्ञिते ।
रसतन्मात्रसंज्ञेऽथ सत्त्यं चैव द्वितीयके ॥ ८३ ॥
अच्युतं च तृतीये तु वासुदेवं चतुर्थके ।
सकलेन तु रूपेण एतदादौ चतुष्टयम् ॥ ८४ ॥
योजनीयं च मन्त्राणां चतुस्तन्मात्रशुद्धये ।
पञ्चमेचानिरुद्धं तु षष्ठे योज्यः पुनः प्रभुः ॥ ८५ ॥
प्रद्युम्नस्तु विशालाक्षस्ततः सङ्कर्षणः परे ।
निष्कलस्सप्तमे योज्यो देव्यो योज्यास्तथाऽष्टमे ॥ ८६ ॥
नवमे तु महातत्त्वे ध्यायेन्नारायणं प्रभुम् ।
त्र्यक्षरेण तु मन्त्रेण त्रिदैवत्यं जगद्गुरुम् ॥ ८७ ॥
एवं तत्त्वसमूहस्थं ज्ञात्वा मन्त्रगणं पुरा ।
प्रारभेत ततो दीक्षां सुशुभे दिवसे गुरुः ॥ ८८ ॥

[ दीक्षायां प्रशस्तास्तिथयः ]

यद्यप्युक्ता मया विप्र तिथयः पूजने पुरा ।
तथाऽपि द्वादशी श्रेष्ठा दीक्षायां पूजने हरेः ॥ ८९ ॥
सर्वं दशम्यामाहृत्य यागोपकरणं तु वै ।

[ स्नानादिनियमपूर्वक यागशालाप्रवेशः ]

प्राग्वत्स्नात्वा समाचम्य कृतन्यासस्स्मरेद्धरिम् ॥ ९० ॥
पुष्पार्घ्यतोयहस्तश्च संविशेद्यागमन्दिरम् ।

[ नृसिंहमन्त्रादिभिरभिमन्त्रितानां सिद्धार्थकानां यागशालाया परितः प्रक्षेपः ]

नृसिंहमन्त्रेणास्त्रेण सचक्रेणाभिमन्त्र्य च ॥ ९१ ॥
सिद्धार्थकान्क्षिपेत्पश्चादूर्ध्वेऽधो दिग्विदुक्षु च ।

[ स्वमन्त्रेण गदास्थापनम् ]

प्राकाराकारदेहां च नानाज्वालासमावृताम् ॥ ९२ ॥
शक्तिरूपां गदां तत्र स्वमन्त्रेण तु विन्यसेत् ।

[ सत्याद्यभिमन्त्रितेन पञ्चगव्येन त्र्यक्षरमन्त्रेण सर्वद्रव्यप्रोक्षणम् ]

पात्रे चाभिनवे कुर्यात्संमिश्रसलिलेन च ॥ ९३ ॥
सत्यादिपञ्चकेनाथ पञ्चगव्यं तु मन्त्रयेत् ।
त्र्यक्षरेण तु मूलेन सर्वं संप्रोक्ष्य तेन वै ॥ ९४ ॥

कौशेयेन पवित्रेण ध्यायमानस्तमेव हि ।

[ कलशविधिः ]

अथादाय दृढं शुभ्रमेकरूपं च निर्व्रणम् ॥ ९५ ॥
कलशं मृण्मयं रम्यं सौवर्णं चाथ राजतम् ।
रत्नहाटकसद्गन्धफलसर्वौषधीयुतम् ॥ ९६ ॥
शुभपादपशाखाढ्यं पट्टस्रक्कण्ठभूषणम् ।
गालितोदकसंपूर्णं वारिधारान्वितं शुभम् ॥ ९७ ॥
चन्दनाद्युपलिप्तं च परितश्चार्घ्यचर्चितम् ।

[ यथाविधि मन्त्रस्य साङ्गस्य पूजनीयत्वविधानम् ]

मन्त्रपीठोपरि ब्रह्मन्साङ्गं सपरिवारकम् ॥ ९८ ॥
मन्त्रं पूर्वोक्तविधिना पूजयेच्च यथाविधि ।

[ वर्धन्या अभिमन्त्रणम् ]

सास्त्रेण चक्रमन्त्रेण मन्त्रयेदथ वर्धनीम् ॥ ९९ ॥
तत्र चक्रस्थितं चास्त्रं यजेन्नारायणात्मकम् ।

[ वर्धनीस्थसलिलधारया भित्तिससेचनपूर्वकं कलशस्य भ्रामणविधिः ]

तया भित्तिगणं† सर्वं संसिच्याच्छिन्नधारया ॥ १०० ॥
प्रदक्षिणक्रमेणैवमीशकोणादितो द्विज ।
पृष्ठतः कलशो भ्राम्यस्तुल्यकालं तु वा पृथक् ॥ १०१

[ अथ भ्रामितस्य कलशस्य स्थापनविधिः ]

शाल्यादिषु परिस्थाप्यः कलशो वर्धनीयुतः ।
ईशदिक्संमुखं चाथ पुष्पाद्यैः पूजयेत्पुनः ॥ १०२ ॥

[ स्थापितस्य कलशस्य पूजनम् ]

अस्त्रेण वस्त्रयुग्मं तु अहतं चाभिमन्त्र्य वै ।
धूपादिवासितं कृत्वा तावुभौ परिवेष्ट्य च ॥ १०३ ॥
पूजां कृत्वाऽथ पुष्पाद्यैः

[ स्थण्डिलेऽग्नौ च हरेर्यजनविधानम् ]

स्थण्डिलेऽथ यजेद्धरिम् ।
पूर्वोक्तेन विधानेन ततोऽग्नेर्मध्यतो यजेत् ॥ १०४ ॥

---

† अत्र भित्तिगणमिति वेदिर्लक्ष्यत इति प्रतिभाति । तथा च पाद्मे दीक्षाप्रकरणे–' अच्छिन्नधारया सिञ्चेद्वेदिका परितोगुरु' रिति ।

सन्तर्प्य पूर्वविधिना चरुं वै साधयेत्ततः ।

[ अथ चरुसाधनप्रकारः ]

प्रक्षाल्य च पुराऽस्त्रेण गन्धैरालिप्य चान्तरात् ॥ १०५ ॥
क्षीरेण हविरापूर्य हृन्मन्त्रेण तु नारद ।
लक्षयित्वा शृतं क्षीरं निक्षिपेत्तण्डुलांस्ततः ॥ १०६ ॥
शक्तिमन्त्रचतुष्केण चालयेत्सिह्ममूर्तिना ।
सिद्धमुत्तारयेत्कुण्डान्मन्त्रेण कपिलात्मना ॥ १०७ ॥
प्रक्षाल्यालिप्य च ततो मन्त्रेण क्रोडमूर्तिना ।
स्थगयेन्मूलमन्त्रेण

[ सिद्धस्य चरोश्चतुर्धा विभज्य विनियोगविधानम् ]

चतुर्धा संविभज्य तत् ॥ १०८ ॥
स्थण्डिलाराधितस्यादौ भागमेकं निवेद्य च ।
मध्वाज्यसंप्लुतं कृत्वा द्वितीयं कलशस्थिते ॥ १०९ ॥
तृतीयं भागमादाय तमग्निस्थे तु होमयेत् ।
परिवारे बलिं दद्यात्स्थलेशकलशावधौ( ? ) ११० ॥

[ स्थण्डिलादिस्थानत्रये देवस्य पुनः पूजनम् ]

मुद्रां बध्वा ततो जप्त्वा पुष्पाद्यैः पूजयेत्पुनः ।
त्रिस्थानस्थं क्रमादेवं शिष्यानाहूय मण्डितान् १११ ॥

[ शिष्याणां प्रोक्षणम् ]

सुस्नातान्धौतवस्त्रांश्च पवित्रीकृतविग्रहान् ।
द्वारदेशस्थितान्कृत्वा बहिर्वासान्तरे[1] द्विज ॥ ११२ ॥
प्रोक्षयेदर्घ्यपात्रात्तु प्रागस्त्रेण तु नारद ।

[ अथ सर्वाङ्गसस्पर्शः ]

सर्वाङ्गालभनं कुर्याच्छाखाजातैः पदैः क्रमात् ॥ ११३ ॥

[ अभिमन्त्रितस्यार्घ्यपुष्पस्य शिरसि प्रक्षेपः ]

दत्वाऽर्घ्यपुष्पं शिरसि शिरोमन्त्राभिमन्त्रितम् ।

[ शिष्याणां मन्त्रमयशरीरत्वापादनम् ]

दहनोत्पादनं कुर्यात्पूर्ववत्क्रमयोगतः ॥ ११४ ॥

---

1 संकटे Y.

ततस्तेषां विधानेन कुर्यान्मन्त्रमयीं तनुम् ।

[ गुरुणा शिष्ये कर्तव्यो भावनाविशेषः ]

यथाऽऽत्मनि पुरा देवे यथाऽग्नौ कलशे यथा ॥ ११५ ॥
शिष्यस्य च तथा ध्यायेत्सकलान्निष्कलात्परम् ।
परं च त्र्यक्षरेणैव केवलेन तु नारद ॥ ११६ ॥
संस्कारस्सकलः प्रोक्तः शङ्खचक्रगदाधरः ।
निष्कलः शक्तिरूपस्तु मध्यमो मन्त्रनायकः ॥ ११७ ॥
परःशक्त्यवसानस्तु प्रणमात्मा ( वात्मा[1] ? ) व्यवस्थितः ।
सकलाधिष्ठिता व्यक्ता प्रकृतिः स्पष्टरूपिणी ॥ ११८ ॥
निष्कलाधिष्ठितं ज्ञेयमव्यक्तं पुरुषींश्रितिम्( ? )
मन्त्ररूपेण देवेन सदसद्व्यक्तिरूपिणा ॥ ११९ ॥
परेणाधिष्ठितं सर्वं व्यक्ताव्यक्तं चिदात्मकम् ।

[ स्वस्य शिष्यस्य चोक्तप्रकारेणैकीभाव भावयतो गुरोरेव ससारविमोचकत्वोक्तिः ]

एवं देवं स्वमात्मानं शिष्यं च पुरुषात्मकम् ॥ १२० ॥
एकीभावेन यो वेत्ति न्यासकाले परस्य तु ।
दीक्षाधिवासने विप्र स संसाराद्विमोचकः ॥ १२१ ॥

[ मन्त्रमूर्तेर्भगवतः सन्निधौ विज्ञापनम् ]

विज्ञाप्यश्चाथ भगवान्स्थलस्थो मन्त्रविग्रहः ।
सबन्धान्वैषयैः पाशैः विदेहं ( विवशान् ? ) पशुपक्षिवत्॥१२२॥
त्वदनुग्रहसामर्थ्यान्मोक्षयामि जगद्गुरो ।
विज्ञाप्यो भगवनेवं विनिवेद्य पशू( ? )न्विभोः ॥ १२३
पुत्राः शिष्यास्तथा भृत्यास्तथै(वै ?)व परमेश्वर ।

[ अहतेन वाससा शिष्यस्य नेत्रबन्धनम् ]

वाससा ह्यहतेनाथ शुद्धेन सुसितेन च ॥ १२४ ॥
नेत्रमन्त्राभिजप्तेन नेत्रे शिष्यस्य बन्धयेत् ।

[ पिनद्धनेत्रस्य शिष्यस्य हस्तेन पुष्पाञ्जलिप्रक्षेपणम् ]

अमन्त्रं क्षेपयेच्चातो विष्णोः पुष्पाञ्जलिं स्थले ॥ १२५ ॥

[ पुष्पाञ्जलिपतनानुसारेण शिष्यस्य नामकरणम् ]

यत्र सा पतति ब्रह्मन्बुद्धिसङ्कल्पितेऽम्बुजे ।

---

1 परवात्मा Y. एतत्पाठानुगुणस्तु परमात्मेति पाठः प्रतिभाति.

नवधा विभजेत्प्राग्वत्तन्नामानं तमङ्कयेत् ॥ १२६ ॥
विष्णुशब्दान्वितेनैव पतिं( ति ? )संज्ञायुतेन च ।

[ अमन्त्रक कलशपूजनम् ]

अमन्त्रमर्चयेत्पश्चात्कलशं सास्त्रवर्धनीम् ॥ १२७ ॥

[ †मायासूत्रविधाननिरूपणम् ]

सुसितं सूत्रमादाय लाक्षालक्तकभावितम् ।

[ तत्र सूत्रमानम् ]

सम्मुखं चोत्थितं शिष्यं समपादशिरोन्नतम् ॥ १२८ ॥
कृत्वाऽङ्गुष्ठद्वयस्याग्रात्समारभ्य द्विजोत्तम ।
यावच्छिखावसानं तु सूत्रमानं समाहरेत् ॥ १२९ ॥

[ तस्य सूत्रस्यैकगुणद्विगुणत्वाद्यन्यतमविधानम् ]

कुर्यादेकगुणं तद्वै द्विगुणं त्रिगुणं तु वा ।
त्रित्रिस्थगुणितं वाथ पञ्चविंशतिधा तु वा ॥ १३० ॥

[ तस्य सूत्रस्य सर्वविकारप्रकृतिभूताव्यक्तत्वेनभावनम् ]

अव्यक्तलिङ्गसूत्रं तु प्रागविद्याकलात्मकम् ।
नित्यं जडं व्यापकं च तस्मिन्विश्वं प्रतिष्ठितम् ॥ १३१॥
तत्राप्त( स्त ? )मयते भूयस्तस्माद्वै संप्रवर्तते ।
तत्रस्थां चिन्तयेत्सर्वामभिन्नां तत्त्ववर्धनीम् ॥ १३२ ॥
तत्रोद्भवास्तु ये विप्र पाशबन्धात्मका दृढाः ।
रागेण रञ्जिताश्चित्रा अविद्यासंप्रदीपिताः ॥ १३३ ॥
विच्छिन्नाश्चैव कालेन नियता व्यापकास्तथा ।

[ तस्य सूत्रस्यैकद्वित्र्याद्यन्यतमप्रकारेण तत्त्वसङ्ख्याक्रमेण यथेच्छ ग्रथनम् ]

तत्त्वसङ्ख्याक्रमेणैव ग्रथयेत्तद्द्विजेच्छया ॥ १३४ ॥
एकधा वा द्विधा चैव त्रिधा वा नवधा मुने ।
संक्षिप्तं विस्तरेणाथ ग्रथयेत्पञ्चपञ्चधा ॥ १३५ ॥

[ भोगमोक्षार्थिनः शिष्यस्य तदन्तरायोन्मूलनार्थं शिष्यशरीरतया भाविते सूत्रे तत्त्वसृष्टिक्रमेण शिखाप्रभृतिचरणान्तावयवभावनापूर्वक होमस्य कर्तव्यताविधानम् ]

तत्त्वसृष्टिक्रमेणैव शिखाग्राच्चरणावधि ।

---

† इद सूत्रं पाद्मे 'मायासूत्रेण वेष्टयेदि'ति मायासूत्रमिति परिभाष्यते । इहचानुपदमव्यक्त लिङ्गसूत्रमिति च सूच्यते ।

भविष्यत्फलदेहेऽसौ (स्य ?) कृतकृत्यस्य कर्मणः ॥ १३६ ॥
कल्पयित्वा तु होतव्यो मन्त्रैर्निर्मूलकारणम् ।
भोगमोक्षप्रसक्तस्य बाधन्ते न यथा पुनः ॥ १३७ ॥
कदाचिद्देहपादाद्यैः कर्माणि मुनिसत्तम ।
अनिच्छमानस्य बलाज्जन्तोः संप्रेयरन्ति च ॥ १३८ ॥
सेश्वरे प्राकृते देहे स हि कर्मास्पदो यतः ।
आश्रयस्य त्वभावेन कर्माण्युपशमन्ति च ॥ १३९ ॥
स्वयमेव यथा वह्नेर्ज्वालाद्या इन्धनं विना ।
भोगासक्तस्य वै जन्तोरन्ते मोक्षाभिकांक्षिणः ॥ १४० ॥
संविधानमिदं कुर्यान्न निर्वाणाश्रितस्य च ।

[ सूत्र कुंडसमीप नीत्वा तस्मिन् सूत्रात्मके देहे तत्त्वाना सक्षेपविस्ताराभ्या पूर्वोक्तैक-द्वित्र्यादिग्रन्थनप्रकारविकल्पानुगुण स्मरणप्रकार: ]

साधुपर्णपुटे सूत्रं कृत्वा तं मल्लकेऽथ वा ॥ १४१ ॥
प्रयायात्कुण्डनिकटं सह शिष्येण वै गुरुः ।
निधाय कुण्डनिकटे देहे शैष्येऽथ सौत्रके ॥ १४२ ॥
तत्त्वसङ्घं स्मरेद्भिन्नं स्पष्टं सृष्टिक्रमेण तु ।
केवलं चेश्वरं वाथ तं प्रधानान्वितं तु वै ॥ १४३ ॥
ते द्वे तन्मात्रकं वर्गमेकं च बहुधात्मकम् ।
ईश्वरं प्रकृतिं मेधामहङ्कारादिकं गणम् ॥ १४४ ॥
नवधा वा मुनिश्रेष्ठ विस्तारेणाथ चिन्तयेत् ।
ईश्वराच्च प्रथिव्यन्तं यथा चानुक्रमेण वा ॥ १४५ ॥
ललाटादङ्घ्रिपर्यन्तं स्थानभेदेन नारद ।
व्यापकत्वेन वै तत्त्वं सर्वेषां च लयं गतम् ॥ १४६ ॥

[ तत्त्वगणस्य दीपालोकयोरिवापृथग्भावलक्षणमैक्यम् ]

प्रदीपाच्च यथा गेहे बहवस्स्थानभेदकाः ।
दृश्यते(न्ते ?)च तदुद्भूतआलोकोन विभाव्यते ॥ १४७ ॥
व्यापकत्वात्पृथग्रूपमेवं तत्त्वगणं मुने ।
अपृथक्च पृथग्भूतं संमिश्रं तु विभावयेत् ॥ १४८ ॥
यथावज्ज्ञानदृष्ट्या तु बुद्ध्या संशोध्य योजयेत् ।
एवमेवापृथग्विद्धि भेदमेकस्य तं प्रति ॥ १४९ ॥

दिक्संस्थितस्य यच्चैक्यं मिश्रीभूतत्वमेव हि ।

[ तत्रैकधाग्रन्थनपक्षे ]

एकोच्चारप्रयोगेण ईशं सर्वत्र भावयेत् ॥ १५० ॥

[ द्विधा ग्रन्थनपक्षे ]

द्विरुच्चारप्रयोगेण ईश्वरं तु [1]विभावयेत् ।
व्यक्तौ प्रधानतत्त्वं तु व्यापकं देहरूपधृत् ॥१५१ ॥

[ त्रिधा ग्रन्थनपक्षे ]

त्रिरुच्चारेण चामूर्ध्नो हृदयान्तं स्मरेद्विभुम् ।
हृदयान्नाभिपर्यन्तं प्रधानं परिभावयेत् ॥ १५२ ॥
आनाभेः पादपर्यन्तं स्मरेत्तन्मात्रकं गणम् ।

[ नवधा ग्रन्थनपक्षे ]

नवधा मुनिशार्दूल एवमेव क्रमं शृणु ॥ १५३ ॥
आकर्णादीश्वरं मूर्ध्नि प्रधानं वक्षसोऽन्तरे ।
नाभौ बुद्धिमहङ्कारं कन्दमूलाश्रितं स्मरेत् ॥ १५४ ॥
ऊरुभ्यां शब्दतन्मात्रं स्पर्शाख्यं सन्धिदेशजम् ।
जङ्घाभ्यां रूपतन्मात्रं गुल्फयोरससंज्ञितम् ॥ १५५ ॥
पादाभ्यां गन्धसंज्ञं तु सबीजं ध्यानसंयुतम् ।
स्मरेद्देहे शिशोस्सूत्रे नवग्रन्थिसमायुते ॥ १५६ ॥
ध्यायेद्ध्याता धरान्तं वा दीक्षाकाले ह्युपस्थिते ।

[ अथ तत्त्वानां होमः ]

ललाटे चेश्वरं साक्षाच्चिद्रूपं सर्वतो मुखम् ॥ १५७ ॥
समग्रैश्वर्यसंपूर्णं स्वबीजेन महामते ।
तद्वदेव हि शिष्यस्य ध्यात्वा तदनु होमयेत् ॥ १५८ ॥
स्वबीजेन शतं सार्धं तदर्धं त्र्यंशमेव वा ।
तत्पादमथ पादार्धं ज्ञात्वाव्यक्तबलं तु वै ॥ १५९ ॥
हुत्वाऽथ हविषाऽऽपूर्य स्रुवं तेन हुने( ? )च्छिशुम् ।
मूर्ध्नि पूर्णोपमं कुण्डे स्वाहान्तं तु विनिक्षिपेत् ॥ १६० ॥
सूत्रग( ग्र ? )न्थावथोर्ध्वस्थे तत्तत्वं भावयेत्तथा ।
एवमीश्वरसंपातं होमं कृत्वा समासतः ॥ १६१ ॥

---

1 विभावयेत् ( हृदन्तरे ) Y. C L. S.

प्रधानं च भ्रुवोर्मध्ये स्वमन्त्रेण तु भावयेत् ।
सिन्दूरपुञ्जसङ्काशं होमयेत्तद्वदेव हि ॥ १६२ ॥
सितेन्दुरश्मिवर्णाभां तालुमध्ये धियं स्मरेत् ।
कुसुम्भरससङ्काशं खद्योतमिव खेचरम् ॥ १६३ ॥
तालुमूले त्वहङ्कारं तालुकर्णान्तरे ततः ।
राजोपलद्युति सुषंषः ( माकृतेः ? ) कदम्बकुसुमोपमम् ॥ १६४॥
मनसश्चानुसन्धानं कुर्यात्सन्तर्प्य पूर्ववत् ।
कर्णाद्धृत्पद्मपर्यन्तं स्मरेत्पञ्चपदे समे ॥ १६५ ॥
श्रोत्रादीनथ वै पञ्च प्रस्फुरत्तारकोज्वलान् ।
स्वैः स्वैर्बीजैश्च पूर्वोक्तैर्ध्यात्वा सन्तर्प्य पूर्ववत् १६६ ॥
तत्स्थाना .... .... ....
स्पन्द (पद्म) स्थानाच्च नाभ्यन्तं प्राग्वत्पञ्चपदान्तरे ।
वागादीन्वै स्थितान् पञ्च बीजैः स्वैः पूर्ववत्स्मरेत् ॥ १६७ ॥
अनुक्रमेण चैकैकमुच्चार्य जुहुयान्न्यसेत् ।
आनाभेर्वस्तिशीर्षान्तं सुसमे पदपञ्चके ॥ १६८ ॥
शब्दतन्मात्रपूर्वाणि गन्धमात्रावसानतः ।
स्वैःस्वैर्गुणैश्च युक्तानि भास्वज्ज्योतिःप्रभाणि तु ॥ १६९ ॥
ऊरुमूले तथा मध्ये बुद्धिदेशे(?)ततस्त्वधः ।
दण्डे मर्मावसाने तु(?)सर्वस्मिंश्चरणे क्रमात् ॥ १७० ॥
खवाय्वग्न्युदकक्ष्मान्तं चिन्तयेद्भूतपञ्चकम् ।
नि(नी ?)रूपाञ्जनवर्णं तु संस्मरेद्व्योमगोलकम् ॥ २७१ ॥
वायव्यं नीलपीतञ्च तैजसं मधुपिङ्गलम् ।
मुक्ताफलनिभं चाप्यं रत्नपीतं तु पार्थिवम् ॥ १७२ ॥
सध्यानद्रष्टा चोङ्कारं बीजं तदनु वै नमः ।
तत्रैव काले होमार्थं बीजं प्रणवपूर्वकम् ॥ १७३ ॥
तत्तत्सञ्ज्ञं ततः स्वाहा संपाते त्वीदृशो विधिः ।

[ सपातहोमः ? ]

तुर्यातीतपदावस्थो गुरुः कुर्यादनुग्रहम् ॥ १७४ ॥
एकोच्चारेण शिष्यस्य क्रियामप्यपरित्यजन् ।

द्विरुच्चारेण तुर्यस्थः सुषुप्तावस्थगस्त्रिभिः ॥ १७५ ॥
नवभिस्स्वप्नभूमिष्ठो जाग्रत्स्थानोऽखिलैर्जुहेत् ।
एकधा वा द्विधा त्रेधा पञ्चधा पञ्चपञ्चधा ॥ १७६ ॥
हुत्वा संपातहोमार्थं सर्वद्वन्द्वोपशान्तये ।
कुर्यात्पूर्णाहुतिं चैव होमान्ते बीजसन्ततम् ॥ १७७ ॥
समूलमन्त्रं संस्मृत्य वौषडन्तं महामुने ।
यः पुमान् जीवसंज्ञस्तु तस्यैता भोगभूमयः ॥ १७८ ॥
ऊर्ध्वाधोभ्यामविश्रान्तस्तावत्कुर्याद्गमागमम् ।
यावन्न गुरुणा सम्यङ्मन्त्रमूर्तौ नियोजितः ॥ १७९ ॥
तत्स्थितो भगवच्छक्तिकिरणैश्चामलीकृतः ।
निर्मलो मलसोपानपदवीं न व्रजेत्पुनः ॥ १८० ॥
एवं संपातहोमं तु संपाद्य च पुरा मुने ।
विधाय तत्त्वसूत्रं तु पात्रेणैवापरेण तु ॥ १८१ ॥
संवेष्ट्य सितसूत्रेण गत्वाऽथ विनिवेद्य च ।

[ रजोघटिकाकर्तर्याद्युपकरणद्रव्याणामासादनादिसंस्कारः ]

कुम्भाग्रे वायुकोणे वा रजांसि घटिकां तथा ॥ १८२ ॥
कर्त्तरीं शालिपूर्णां तु सूत्रं किरणसंज्ञितम् ।
सौवर्णीं राजतीं चैव शलाकां ताम्रजामथ ॥ १८३ ॥
धूपदीपादिकं सर्वं मूलमन्त्रेण नारद ।
संपूज्याथ परामृश्य निरीक्ष्याच्छाद्य वाससा ॥ १८४ ॥

[ बलिहरणम् ]

ततश्शिष्यसमायुक्तो द्वाराद्बाह्यं व्रजेद्गुरुः ।
भूतानि दूरतोऽस्त्रेण प्रेर्य चैव बलिं क्षिपेत् ॥ १८५ ॥
तोयतण्डुलसिद्धार्थदधिजालसमन्वितम् ।

[ परिखालेखनम् ]

शङ्कुनाऽस्त्राभिजप्तेन परितः परिखां लिखेत् ॥ १८६ ॥
समाचम्योपविश्याथ प्राङ्मुखो वाप्युदङ्मुखः ।

[ पञ्चगव्यप्रदानम् ]

अनुक्रमेण शिष्याणां वर्णतो व्यवहारतः ॥ १८७ ॥

पञ्चगव्यमथो दद्याद्दुर्भुक्तानां विशुद्धये ।.

[ चरुशेषभक्षणम् ]

आचम्य चरुशेषं तु अश्नीयाच्छिष्यसंयुतः ॥ १८८ ॥

[ अथ दन्तकाष्ठचर्वणतत्प्रक्षेपणाविधानम् ]

भुक्त्वाऽस्त्रेणाभिमन्त्र्याथ दन्तकाष्ठं तु भक्षयेत् ।

[ अधिकारिभेदेन दन्तकाष्ठपरिमाणभेदः ]

नवाष्टसप्तषड्भिश्चाङ्गुलैर्ब्राह्मणपूर्वकम् ॥ १८९ ॥
दद्यात्स्त्रीबालपर्यन्तं गुरोर्वै द्वादशाङ्गुलम् ।
एकापायेन चैतस्मात् समयज्ञावसानतः ॥ १९० ॥
भक्षयित्वा विनिक्षिप्य तौ( सं?)क्षाल्य प्रयतस्ततः ।
स्पष्टं कृत्वा [1]स्ववक्त्रं तु अग्रपातं विलोक्य च ॥ १९१ ॥

[ शुभाशुभपरिज्ञानम् ]

उदक्पश्चिमऐशानप्राङ्मुखं पतितं तु वा ।
शुभं शेषासु विप्रेन्द्र दिक्षु चाशुभमादिशेत् ॥ १९२ ॥
स दोषाश्चाशुभे पाते निर्दोषाश्च शुभे स्मृताः ।

[ अशुभशान्त्यर्थो होमः ]

तत्राशुभोपशान्त्यर्थं प्रभाते जुहुयाद्गुरुः ॥ १९३ ॥
शतं सहस्रं साष्टं वा यथाशक्त्यथवा द्विज ।
मध्वाज्यक्षीरसंमिश्रान् सफलांश्च तिलानथ ॥ १९४ ॥
अस्त्रसंपुटितेनैव नाम्ना स्वाहान्वितेन तु ।
दोषं जहि जहीत्येव पदं नामावसानगम् ॥ १९५ ॥

[ अथ शयनविधिः ]

आचम्य पाणिपादं तु प्रक्षाल्य शिशुना सह ।
सर्वं प्रदक्षणीकृत्य त्रिस्थानस्थक्रमेण तु ॥ १९६ ॥
प्राग्दक्षिणशिरो वाऽथ शयनं कल्पयेद्गुरुः ।
दर्भास्तत्रास्त्रमन्त्रेण क्षिपेत्सिद्धार्थकांस्तथा ॥ १९७ ॥
भगवन्तं स्मरंस्तत्र नारायणमजं विभुम् ।
उपोष्य रजनीमेकां नियमस्थां तु कारयेत् ॥ १९८ ॥

---

1 घवक्त्रं A.

शतमावर्तयेन्मन्त्रमर्धं पादं तु शक्तितः ।

[ स्वप्नाधिपतिमन्त्रः ]

ओंकारः प्राक्तनः प्राणो लोकेशोपरि संस्थितः ॥ १९९ ॥
तदूर्ध्वं व्यापकं चान्द्रं ह्रीङ्कारस्तदनन्तरम् ।
स्वप्नाधिपतये दद्यात्पदं चाथ षडक्षरम् ॥ २०० ॥
रजनीश्वराय शब्दं वै विष्णवे त्र्यक्षरं ततः ।
स्वाहा समन्वितो विंशत्यक्षरः स्वप्नमन्त्रराट् ॥ २०१ ॥

[ अर्धरात्रे शयनादुत्थाय गुरुणा विधेयो विशेषः ]

ततोऽर्धरात्रसमये उत्थाय शयनाद्गुरुः ।
प्रक्षालिताङ्घ्रिपाणिश्च आचम्य न्यासमाचरेत् ॥ २०२ ॥
स्थलस्थं धूपयित्वाऽग्निमुत्थाप्यैकीकृतं स्मरेत् ।
कुम्भस्थे मन्त्रमूर्तौ तु प्राग्वत्कुर्याच्च मण्डलम् ॥ २०३
शोभयेच्च तथा विप्र दद्यादस्त्राभिमन्त्रितम्[1] ।
शराष्टकं बहिर्दिक्षु सफलं पुष्पमण्डितम् ॥ २०४ ॥
शराश्रितं त्रिधा छिन्नं सूत्रं वै पञ्चरङ्गकम् ।
वस्त्रैः कृत्वा परिच्छन्नं यथान्यो नावलोकयेत् ॥ २०५ ॥
कृतो वा क्रियमाणो वा यस्मान्नापूजितो मुने ।
दर्शनीयो रजःपातः कस्यचित्सिद्धिमिच्छता ॥ २०६ ॥

[ प्रभाते शिष्याणामुद्बोधनम् ]

प्रभाते बोधयेच्छिष्यान् स्वप्नं पृच्छेच्छुभाशुभम् ।

[ शुभाशुभस्वप्नभेदनिरूपणम् ]

गुरुदेवद्विजाःकन्या गोगजाश्वाश्वकेसरी ॥ २०७ ॥
दर्पणं शङ्खभेर्यौ च तन्त्रीवाद्यं च रोद( शोभ ? )नम् ।
ताम्बूलभक्षणं चैव तथा दध्यभिवन्दनम् ॥ २०८ ॥
सिद्धान्नमाममांसं च मद्यस्त्रीमदिरासवम् ।
छत्रं यानं सितं वस्त्रं तथाऽन्यत् श्वेतचन्दनम् ॥ २०९ ॥
माल्यं मुक्ताफलैर्हारो भूयःपूर्णोदितश्शशी ।
प्रचण्डकिरणः खस्थो निम्नगाऽथ महोदधिः २१० ॥
प्रफुल्लपादपश्शाली कुङ्कुमं रोचना मधु ।

1 विद्या Y.

लाजाः सिद्धार्थका बीजं नवभाण्डं च पायसम् ॥ २११ ॥
तपस्यन्वै तथाऽऽचार्यो गायन्ती च वराङ्गना ।
मनःप्रीतिकराश्चान्ये लोके शंसापदङ्गताः ॥ २१२ ॥
सर्वे स्वप्नाश्शुभा विद्धि सिद्धिमोक्षफलप्रदाः ।
अतोऽन्ये विपरीताश्च मनसः खेददाश्च ये ॥ २१३ ॥
गर्हिता लोकविद्विष्टास्स्वप्नास्ते ह्यशुभावहाः ।

[ अशुभस्वप्नदोषपरिहाराय होमविधानम् ]

दृष्ट्वा समाचरेद्धोमं दन्तकाष्ठोदितं मुने ॥ २१४ ॥
केवलेनाथवाऽऽज्येन सिंहमन्त्रेण शान्तये ।

[ न्यूनातिरिक्तप्रायश्चित्तार्थं होमस्य विधानम् ]

सशिष्योऽथ गुरुस्स्नात्वा पूर्ववत्संप्रविश्य च ॥ २१५ ॥
ऊनातिरिक्तशान्त्यर्थं सर्वमन्त्रैश्च होमयेत् ।

[ पूर्वोक्तप्रकारेण मण्डलपूजनादि ]

मण्डलं पूजयेत्पश्चात् पूर्वोक्तविधिना मुने ॥ २१६ ॥
सर्वं होमावसानं तु कृत्वा शिष्यान् प्रवेशयेत् ।

[ आबद्धनेत्राणां शिष्याणां हस्ततः पुष्पाञ्जलिप्रक्षेपणम् ]

क्रमात् पुष्पाञ्जलिं कृत्वा बद्धनेत्रांश्च पूर्ववत् ॥ २१७ ॥
क्षेपयेच्च हिरण्याढ्यं मणिमुक्ताफलान्वितम् ।

[ उद्घाटितनेत्रैः शिष्यैः गुरुनमस्कारादेः कर्तव्यता ]

उद्घाट्य नयने पश्चादखिलं संप्रदर्शयेत् ॥ २१८ ॥
गुरोर्वै पादपतनं कृत्वाऽष्टाङ्गेन भक्तितः ।
प्रदक्षिणद्वयं कुर्यान्मण्डले नतमस्तकः ॥ २१९ ॥
व्रजेदग्नेस्समीपं तु उपविश्य ततो गुरुः ।

[ अथ गुरुणा कर्तव्यहोमविशेषविधानम् तत्र मन्त्रतृप्तिहोमः ]

विन्यस्य वह्नेर्गेहे तु मन्त्रमण्डलमुत्तमम् ॥ २२० ॥
स्वाहान्तान् होमयेद्भूयो मन्त्रान्विधिपुरस्सरान् ।
देवीरङ्गानि सत्यास्त्रं ? तिलैराज्येन शक्तितः ॥ २२१ ॥
मन्त्राणां तर्पणं कृत्वा सर्वेषां मुनिसत्तम ।

[ मन्त्राधिकारहोमः ]

दीक्षारम्भनिमित्तार्थं दशभागव्यवस्थया ॥ २२२ ॥

मन्त्रपूजाधिकारार्थं होमं कुर्यात्ततोऽपरम् ।
प्रतिमन्त्रस्य जुहुयात् पञ्चपञ्चाहुतिक्रमात् ॥ २२३ ॥
अधिकारो भवत्येवं जपेऽग्नौ च श्रुतेऽर्चने ।

[ अथ मलशोधनहोमः ]

दीक्षायां [1]मलशुद्ध्यर्थं मूलमन्त्रस्य वै शतम् ॥ २२४ ॥
अष्टाधिकं घृतेनैव तिलेनापि यथेच्छया ।
देवीनां पञ्चविंशेन त्वङ्गानां दशकेन तु ॥ २२५ ॥
सिंहादिष्वष्टकेनैव सप्तकेन ततो मुने ।
विहितं कौस्तुभादीनां षड्भिस्सत्यादिषूदितम् ॥ २२६ ॥
सप्ताक्षरस्य मन्त्रस्य विहितं पञ्चकेन वै ।
पूर्णाहुतिं घृतेनैव मूलमन्त्रेण पातयेत् ॥ २२७ ॥
तदा दीक्षा भवेच्छश्वन्मान्त्री सामान्यलक्षणा ।
विना स्वरूपज्ञानेन यया सन्तारयेद्गुरुः ॥ २२८ ॥
मन्त्रैस्तु संपुटीकुर्यात् किन्तु संज्ञा(ज्ञां ?)शिशोर्द्विज ।
इत्येतन्मन्त्रदीक्षायां केवलायां समासतः ॥ २२९ ॥

[ अथ दीक्षायां ज्ञातव्यविशेषविधानम् ]

हवने लक्षणं प्रोक्तं सतत्त्वायामतश्शृणु ।
दीक्षाकाले तु गुरुणा ज्ञातव्या तत्त्वपद्धतिः ॥ २३० ॥
ज्ञेयानुष्ठानभावेन यथा तु सुकरो भवेत् ।
मन्त्रशुद्धिप्रभावाच्च शुद्धो भवति वै गुरुः ॥ २३१ ॥
गुरुशुद्धिप्रभावाच्च मन्त्रग्रामो भवेत्स्थिरः ।
प्रागुक्तेन विधानेन हवनादपि सन्धनात् ॥ २३२ ॥
दीक्षाकर्मणि विस्तीर्णे मध्यमे वाऽवाधारय ।

[ नवतत्त्वशोधनेन सर्वतत्त्वाना शुद्धता ]

गन्धतन्मात्रपूर्वैस्तु तन्मात्रैः शोधितैः क्रमात् ॥ २३३ ॥
भवन्त्यमी विशुद्धास्तु पृथिव्याद्याः खपश्चमाः ।
तेषामन्तर्गतौ ज्ञेयौ द्वौ वर्गाविन्द्रियात्मकौ ॥ २३४ ॥
कर्मेन्द्रियात्मकं पूर्वं ततो बुद्धीन्द्रियात्मकः ।
एवं तन्मात्रशुद्ध्या वै विंशत्तत्वं विशोधितम् ॥ २३५ ॥

---

1 मध्य A.

अहङ्कारेण शुद्धेन मनश्शुद्धिरिहोच्यते ।
बुद्ध्या तु शुद्धया शुद्धाः प्रत्ययाः सविपर्ययाः ॥ २३६ ॥
प्रधानेन तु शुद्धेन व्यक्ताव्यक्तं तु शोधितम् ।
ईश्वरेण तु शुद्धेन शुद्धश्चित्पुरुषो भवेत् ॥ २३७ ॥
अशोध्यं परमं तत्त्वं यत्र केवलतां व्रजेत् ।
तत्रैव तु लयं कुर्यात्परब्रह्मस्वभावके ॥ २३८ ॥
ज्ञानदीक्षाक्रमेणैव तत्त्वशुद्धेरनन्तरम् ।
एवं वेदविदां श्रेष्ठः पुरा ज्ञात्वा समासतः ॥ २३९ ॥

[ मुमुक्षुशिष्याणां तत्त्वशोधने विशेषविधानम् ]

मुमुक्षूणां च शिष्याणामध्वानं शोधयेत्क्रमात् ।
यादृक्तद्विस्तरेणैव श्रुणुष्वावहितो मम ॥ २४० ॥

[ वह्नौ भाविते मन्त्रमयमूर्त्तिस्वरूपे शिष्यतत्त्वानामुपसहरणप्रकारः ]

वह्नौ तु व्योमवद्ध्यात्वा न्यस्तो मन्त्रगणो हि यः ।
सर्वव्यापकरूपेण तन्मध्ये तत्त्वपद्धतिम् ॥ २४१ ॥
समग्रां योजयेद्ध्यात्वा तत्त्वात्तत्वं क्रमेण तु ।

[ निरीक्षणप्रोक्षणादिलक्षणः शिष्यशरीरसस्कारः ]

बद्धपद्मासनं शिष्यं कृत्वा चात्मसमीपगम् ॥ २४२ ॥
निरीक्ष्य पूर्ववत्प्रोक्ष्य मन्त्रहस्तेन संस्पृशेत् ।

[ अथ ततस्तत्वानां सृष्टिभावनम् ]

ईश्वराद्भूमिपर्यन्तां पुरा पूर्वां तु वै त्रिधा ॥ २४३ ॥
सृष्टिं कुर्यात्स्वरूपस्थां तमेवमुपसंहरेत् ।
ततः शिष्यतनौ सम्यक्सृष्टिं स्पष्टां स्मरेत्क्रमात् ॥ २४४ ॥
येन शिष्यतनुस्थानां तत्त्वानां जडरूपिणाम् ।
संबोधमावहत्याशु दीक्षाकाले ह्युपस्थिते ॥ २४५ ॥

[ अथानुज्ञाग्रहणपूर्वकं पाशसूत्रस्य कुण्डसमीपे नयनम् ]

ततः कुंभस्थितं मन्त्रं गत्वा संप्रार्थ्य चेतसा ।
लब्धानुज्ञस्समादाय पाशसूत्रं पुटस्थितम् ॥ २४६ ॥
यायात्कुण्डसमीपं तु तमुद्घाटय निधाय वै ।

[ मूलमन्त्रेण होमः ]

सहस्रेण शतेनाथ आहुतीनां तु तर्पयेत् ॥ २४७ ॥

मूलेन भगवन्तं तु परमं सृष्टिकारणम् ।
पूर्णा दीक्षावसाने तु दातव्या मुनिसत्तम ॥ २४८ ॥
एकानेकप्रयोगाणां न तु कर्मणि कर्मणि

[ ताडनलक्षणं शिष्यशरीरशुद्धीकरणम् ]

एकचित्तस्थितिं कृत्वा शिष्यरूपं समाधिना ॥ २४९ ॥
सांप्रतं मूलमन्त्रेण मन्त्रजापोत्थितेन तु ।
प्रजप्य मूलमन्त्रेण पुष्पं तु बहुशस्ततः ॥ २५० ॥
हुं फट्कारान्तयुक्तेन हृदयं तस्य ताडयेत् ।
संबोधमावहेच्छीघ्रं पिण्डमध्यगतस्य च ॥ २५१ ॥

[ तत्त्वाना शोधनप्रकारः ]

[1]क्ष्मातत्त्वे जननं पूर्वं चैतन्यस्य प्रकाशता ।
सद्व्याप्तिभावना तस्मिन् स्वस्मिन्स्वस्मिन्स्थितस्य च ॥२५२ ॥
मन्त्रसंबोधसामर्थ्यात्तत्रैश्वर्यपदं पुनः ।
तद्भोगमपि चैश्वर्यात्तत्तृप्तिमथ भावयेत् ॥ २५३ ॥
जन्तोर्भोगसमाप्तिं तु भोगान्ते तु वियोजनम् ।
अथोद्धारस्तु कर्तव्यस्तत्त्वात्तत्त्वे ह्यनुक्रमात् ॥ २५४ ॥
एवं तु विविधं कर्म तत्त्वे तत्त्वे विचिन्तयेत् ।
प्रतितत्त्वं शतं हुत्वा आहुतीनां तु नारद ॥ २५५ ॥
मन्त्रयुक्तेन बीजेन सर्वतत्त्वानि होमयेत् ।
अध्यात्ममन्त्रमुच्चार्य अस्येति द्व्यक्षरं परम् ॥ २५६ ॥
तदन्ते शिष्यसंज्ञां तु तत्त्वबीजमथोच्चरेत् ।
बीजान्ते तत्त्वसंज्ञा च शोधयेति पदं ततः ॥ २५७ ॥
स्वाहां तदनु वै कुर्याश्छमं नयपदं ततः ।
नमस्कारसमायुक्तो मन्त्रोऽयं होमकर्माणि ॥ २५८ ॥
चिन्तयेत्तत्वरत्नं तु शिष्यान् ( शैष्यं ? ) संस्मृत्य पार्थिवम् ।
चैतन्यकरणेनापि निक्षिप्तं च स्रुचोऽग्रतः ॥ २५९ ॥

1 क्ष्मादितत्त्वानां प्रत्येकं क्रमाज्जनन— ( सूक्ष्मदेहतापादन ) चैतन्यप्रकाशनव्याप्तिभावन— ऐश्वर्य-भोग-तत्तृप्तितत्समाप्ति-वियोजनसम्पादनपूर्वकं पूर्णया तत्तन्मन्त्रेण कुण्डस्थे मन्त्रमूर्तावुपसंहारः कार्य इति प्रकरणाशयः । अयमेव विषयः सात्त्वतसंहितायामेकोनविंशे परिच्छेदे ‘ पूरकेण समाकृष्य शिष्यं हृत्कमलाद्धृदि ’ इत्यादिना ग्रन्थसन्दर्भेण निरूपितः ।

विभवव्यूहसूक्ष्मात्मा तदेव परिभावयेत् ।
विकर्त्य पार्थिवग्रन्थिं सूत्रात्कुर्यात्स्रुचोऽग्रगम् ॥ २६० ॥
नियोज्य पूर्णया चाग्नावङ्कुशेन तु नारद ।
एवं संहारयोगेन परस्मिन्मन्त्रकारणे ॥ २६१ ॥
ज्वलद्रूपेऽग्निकुण्डस्थे क्ष्माख्यतत्त्वं [1]शमं नयेत् ।
क्रमेणानेन विप्रेन्द्र अप्तत्त्वेऽपि प्रयुज्यते ॥ २६२ ॥
तद्वत्तदुपसंहृत्य पूर्णां पाशेन तस्य वै ।
तेजसो गरुडेनैव गदयाप्यथ मारुते ॥ २६३ ॥
ततस्त्वाकाशसन्धाने पूर्णां चक्रेण निक्षिपेत् ।
गन्धतन्मात्रशुध्यर्थं शङ्खमन्त्रेण नारद ॥ २६४ ॥
पूर्णां वै पद्ममन्त्रेण रसतन्मात्रशुद्धये ।
रूपतन्मात्रशुद्ध्यर्थं मालामन्त्रेण निक्षिपेत् ॥ २६५ ॥
स्पर्शसंज्ञस्य विप्रेन्द्र कौस्तुभाख्येन योजयेत् ।
शब्दतन्मात्रतत्त्वस्य वाराहेण समाचरेत् ॥ २६६ ॥
उपस्थतो वाङ्निष्ठानां पञ्चानां परियोजयेत् ।
कापिलेनाथ सिह्मेन अस्त्रनेत्रेण वर्मणा ॥ २६७ ॥
कार्यं सदैव विप्रेन्द्र इन्द्रियाणामतः शृणु ।
शिखया शिरसा चैव हृन्मन्त्रेणाथ मायया ॥ २६८ ॥
जयामन्त्रेण श्रोत्राख्य इन्द्रियान्तं लयक्रमात् ।
आरभ्य घ्राणसंज्ञां च सततं पूर्णकर्मणि ॥ २६९ ॥
मनसः कीर्तिमन्त्रेण लक्ष्माख्येन त्वहङ्कृतेः ।
समग्रमूलमन्त्रेण बुद्धेः पूर्णाहुतिं क्षिपेत् ॥ २७० ॥
सत्यादिपञ्चकेनैव प्रकृतिं प्रलयन्नयेत् ।
पुरुषञ्चेश्वरस्थाने शमन्नयति सर्वदा ॥ २७१ ॥
गुरुः सप्ताक्षरेणैव पूर्णाहुत्या प्रसन्नधीः ।
ईश्वरात्तु परं तत्त्वं तत्त्वग्रामे न विद्यते ॥ २७२ ॥
पुमानीश्वरतत्वात्तु अधो यातः पदात्पदम् ।
येनेश्वरस्वरूपस्सन्ननिशं प्रतिभाति वै ॥ २७३ ॥

---

1 विनिक्षिपेत् A.

तस्माद्दीक्षाक्रमेणैव तत्रोद्धृत्य पुनः क्षिपेत् ।
लयस्तत्रैव कर्तव्यो भोगार्थं च शिशोस्तदा ॥ २७४ ॥

[ गुरुणा कर्तव्यो भावनाविशेषः ]

ईश्वराधारसंज्ञस्तु स्वात्मवान्दीक्षितः शुचिः ।
ध्यायेन्निरक्षराकारं विश्वो विश्वात्मकस्त्वथ[1] ॥ २७५ ॥
अनादिनिधनं देवमच्युताच्युतविग्रहम् ।

[ भोगार्थपूर्णाहुतिप्रकारनिरूपणम् ]

ध्यात्वा नारायणं पश्चात्मूलमन्त्रं विलोमतः ॥ २७६ ॥
परमामृतसंक्षुब्धरूपमोघं तु चामृतम् ।
मुञ्चमानमनौपम्यमप्रतर्क्यमतीन्द्रियम् ॥ २७७ ॥
शशिसूर्यप्रतीकाशं विसर्गेण तु बन्धभृत् ।
पूर्णाहुतिः प्रदातव्या वौषडन्तेन नारद ॥ २७८ ॥
एवं पूर्णाहुतिं दत्वा सम्भोगार्थमनन्तरम् ।

[ मोक्षार्थपूर्णाहुतिप्रकारनिरूपणम् ]

मोक्षार्थं पातयेदन्यां पूर्णां संपूर्णलक्षणाम् ॥ २७९ ॥
संशुद्धसर्वतत्त्वं तु ईश्वरादूर्ध्ववर्तिनम् ।
अक्षरेण तु मन्त्रेण त्रिदैवत्यमिवाच्युतम् ॥ २८० ॥
ध्यात्वा तु सकलं शिष्यमात्मानं निष्कलं तथा ।
पूर्णार्थमुद्यतं चाज्यं ध्यायेत्सकलनिष्कलम् ॥ २८१ ॥
शिष्यदेहं तथा कर्मभिन्नं भावनया पुरा ।
ततः स्रुचोऽग्रो( ग्रे ? ) सन्धाय द्वे एकीकरणेन तु ॥ २८२ ॥
निष्कलेन स्वरूपेण शिष्याज्ये तु यथा पुरा ।
कृत्वाऽऽचार्यस्वभावस्थं स्वचैतन्यं शनैः शनैः ॥ २८३ ॥
यावत्सुनिर्भरानन्दस्वानन्दपदमोति वै ।
ततः स्वानन्दविश्रान्ते महानन्दातुलास्पदे ॥ २८४ ॥
षडूर्मिषड्गुणातीतं मन्त्रमुद्राक्रमोज्झितम् ।
स्वशक्तिवैभवं दिव्यं प्रतिभाव्याच्युतं गुरोः ( रुः ? ) ॥ २८५ ॥
ततो विज्ञानशब्दात्मपर्यन्तं रूपमुज्वलम् ।
अनुचार्य ( ध्याय ? ) समुच्चार्य मन्त्रं सप्ताक्षरं द्विज ॥ २८६ ॥

---

1 स्तथा Y.

पूर्णाहुतिं तदन्तेन वौषडन्तेन होमयेत् ।

[ ब्रह्मसमापत्तिहोमप्रकारः ]

ततो ब्रह्मसमापत्तिस्थित्यर्थं होमयेद्गुरुः ॥ २८७ ॥
प्रणवादिनमोन्तैस्तु दशभिस्तु महापदैः ।
अप्रतर्क्यमनिर्देश्यमनौपम्यमनामयम् ॥ २८८ ॥
सूक्ष्मं सर्वगतं नित्यं ध्रुवमव्ययमीश्वरम् ।
भवेद्दशदशाहुत्या तद्वत्पूर्णाहुतिं पुनः ॥ २८९ ॥
शिष्यं चैव तथात्मानं परं ध्यात्वा परं पुनः ।
वौषडन्तं महापूर्णां तृतीयां पूर्ववत्क्षिपेत् ॥ २९० ॥
क्षीरं क्षीरं यथा विप्र नीरमेकत्र चिन्तयेत् ।
शिष्यं चैव तथाऽऽत्मानं विष्णुं सर्वगतं विभुम् ॥ २९१ ॥
निस्तरङ्गे मुनिश्रेष्ठ एकत्र समतां गतम् ।
तदा स्यान्मुक्तिदा दीक्षा वैष्णवी मोक्षदाऽर्थदा ॥ २९२ ॥
तत्त्वसंहारयोगेन अपुनर्भवता मुने ।

[ सृष्टिक्रमेण सपादितानां तत्त्वानां शिष्यदेहे योजनम् ]

अलुप्तानन्दविज्ञानब्रह्मशैलाग्रगो गुरुः ॥ २९३ ॥
पातयेत्सृष्टिमार्गेण दिव्यमन्त्रमयं पुरम् ।
शिष्यः समाप्तहोमोऽयं कृतो विष्णुमयः पुरा ॥ २९४ ॥
विज्ञानवायुनाऽऽकृष्य निस्सृतं भावयेच्छनैः ।
वासुदेवोदधेर्मध्यादायान्तं च पदात्पदम् ॥ २९५ ॥
[1]प्रवाहमौदकं यद्वत्सृष्टिमार्गे नियोज्य च ।
.... मन्त्रे परे सूक्ष्मे तथा परे ॥ २९६ ॥
शुद्धे त्वंशपदे चाद्ये तत्त्वानामुदयास्पदे ।
तत्त्वात्तत्वं समायाति (दाय ?) तदा चात्मनि योजयेत् ॥२९७॥
संशुध्य शिष्यचैतन्यं भागार्थं ब्रह्मणो हरेत् ।
अनुग्रहार्थं [2]भक्तानां शिष्यदेहे नियोजयेत् ॥ २९८ ॥
एवं समाप्य वै दीक्षां विष्णोस्सायुज्यदायिकाम् ।

[ वह्निमध्यस्थस्य मन्त्रमूर्तेर्भगवतोऽर्चनम् ]

भगवन्तं ततो विष्णुं व्यापकं वह्निमध्यगम् ॥ २९९ ॥

---

1 प्रभाव Y. 2 तत्त्वाना A.

मन्त्ररूपं परं ध्यातं साकारं संस्मरेत्पुनः ।
पूजयित्वाऽर्घ्यपुष्पाद्यैः समयान् श्रावयेद्गुरुः ॥ ३०० ॥

[ अथ समयोपदेशः ]

स्वमन्त्रो नोपदेष्टव्यो न वक्तव्यश्च संसदि ।
गोपनीयं स्वशास्त्रं च रक्षणीयं शरीरवत् ॥ ३०१ ॥
यथा यथा यत्र तत्र न गृह्णीयाच्च केवलम् ।
अभक्त्या तु गुरोर्नाम गृह्णीयात्प्रयतात्मनः (ना ?) ॥ ३०२ ॥
प्रणवग्रथितो ( तं ? ) नाम विष्णुशब्दमनन्तरम् ।
पादशब्दसमेतं तु नतमूर्धा कृताञ्जलिः ॥ ३०३ ॥
न तमाज्ञापयेन्मोहात्तच्छायां तु न लङ्घयेत् ।
आसनं शयनं यानं तदीयं तु न चाक्रमेत् ॥ ३०४ ॥
गुर्वग्निमन्त्रशास्त्राणां भक्तिरव्यभिचारिणी ।
प्रभाते मन्त्रजापस्तु पूजनं सततं विभोः ॥ ३०५ ॥
प्रक्षीणदिनवेलायां जपेन्मन्त्रं स्वशक्तितः ।
द्वादश्यां सितकृष्णायां परिपीडं समाचरेत् ॥ ३०६ ॥
नक्तमास्ते त्वसामर्थ्याद्दानपूजापुरस्सरम् ।
वैष्णवानां पराभक्तिराचार्याणां विशेषतः ॥ ३०७ ॥
पूजनं च यथाशक्ति तानापन्नांश्च पालयेत् ।
मुद्राक्षसूत्रे संरक्ष्ये स्वमन्त्रं न प्रकाशयेत् ॥ ३०८ ॥
दूराच्च पादपतनं गुरोः पादाभिवन्दनम् ।
नोच्चासने हरेरग्रे उपवेश्यं कदाचन ॥ ३०९ ॥
न शङ्खपद्मचक्राङ्के आसनेऽपि च नारद ।
नानिवेद्य हरेः किञ्चिद्भोक्तव्यं वा गुरोस्तथा ॥ ३१० ॥
मन्त्रोपभुक्तिमर्घ्यं च तथा यन्मन्त्रसंस्कृतम् ।
प्राप्तमायतनाद्विष्णोः प्रयतः शिरसोद्वहेत् ॥ ३११ ॥
उदके निक्षिपेत्पश्चाद्भूमौ वै निपतेद्यदि ।
विशेषपूजनं कुर्यात्पक्षे मासेऽथ वत्सरे ॥ ३१२ ॥
द्वादश्यां वैष्णवैस्सार्द्धं तत्रैव शुभजागरम् ।
कार्यायतनयात्रा वै तत्र दानं च शक्तितः ॥ ३१३ ॥

पठनं श्रवणं कुर्याच्छास्त्राध्ययनमाचरेत् ।
अतन्द्रितश्च सततं विना वै द्वादशीद्वयम् ॥ ३१४ ॥
प्रतिपत्पौर्णमास्यौ च साष्टमीं च चतुर्दशीम् ।
ग्रहोपरागसंक्रान्तिं विना चाथा(ना ?)गते गृहम् ॥ ३१५ ॥
गुरौ गुरुभ्रातरि वा यतिसङ्घे तु वैष्णवे ।
रथ्याचत्वरमार्गेषु सन्निधावप्यदीक्षिते ॥ ३१६ ॥
तथाप्यवैष्णवे मूर्खे पूजया च विना मुने ।
शास्त्रव्याख्या न कर्तव्या न श्रोतव्या शुभेप्सुना ॥ ३१७ ॥
तदारम्भे गुरोः पूजा मध्ये चैव विशेषतः ।
अन्ते विशेषयागं च क्रीडनं च महोत्सवम् ॥ ३१८ ॥
फलमूलं तथा पुष्पं गन्धोऽप्यन्नं नवं च यत् ।
तत्तदादौ गुरौ मन्त्रे विनिवेद्योपयोजयेत् ॥ ३१९ ॥
सामान्यसिद्धौ रक्षार्थं परेषां न कदाचन ।
प्रयुञ्जीत स्वमन्त्रं च आपत्स्वपि च नाचरेत् ॥ ३२० ॥
गारुडं भूतकर्माऽपि लोकस्यार्थेन नारद ।
कृपया परया कुर्यादनाथेष्वथ संसदि ॥ ३२१ ॥
सूर्यसोमान्तरस्थं च गवाश्वत्थाग्निमध्यगम् ।
भावयेद्भगवद्विष्णुं गुरुविप्रशरीरगम् ॥ ३२२ ॥
ज्ञेयो माता पिता विष्णुर्ज्ञेयो विष्णुः प्रियोऽतिथिः ।
ज्ञेयो विष्ण्वाश्रयी विष्णुरात्मा ज्ञेयोथ विष्णुवत् ॥ ३२३ ॥
यत्र तत्र परीवादो मात्सर्याच्छ्रूयते गुरोः ।
तत्र तत्र न वस्तव्यं प्रयायात्संस्मरेद्धरिम् ॥ ३२४ ॥
यैः कृता च गुरोर्निन्दा विभोः शास्त्रस्य नारद ।
तैर्नैव सह वस्तव्यं न वक्तव्यं कदाचन ॥ ३२५ ॥
कर्मणा मनसा वाचा न हिंस्यात्परदारकान् ।
प्रदक्षिणे प्रयाणे च प्रदाने च विशेषतः ॥ ३२६ ॥
प्रभाते च प्रवासे च स्वमन्त्रं बहुशः स्मरेत् ।
स्वप्ने वाऽक्षसमक्षं वा आश्चर्यमतिहर्षदम् ॥ ३२७ ॥
अकस्मादपि जायेत नाख्यातव्यं गुरोर्विना ।
इत्येतत्समयौघं तु विद्धि साधारणं द्विज ॥ ३२८ ॥

ब्राह्मणादौ च वर्णानां समयीपुत्रकात्मनाम् ।
साधकानां गुरूणांच येभ्यो मध्यात्सुखप्रदान् ॥ ३२९ ॥
अविरुद्धांस्तथाऽक्लिष्टांस्त्रीबालानां च नारद ।
स्त्रीणां विशेषतो दद्यात्पतिभक्तिसमन्वितान् ॥ ३३० ॥
पतिशून्या च या नारी तस्या आयतने हरेः ।
लेपनं शोधनं दद्यात्संयमं च मिताशिताम् ॥ ३३१ ॥
पालनात्समयानां च सिद्धिरुत्पद्यतेऽचिरात् ।
मन्त्रः साम्मुख्यमभ्येति समयज्ञस्य सर्वदा ॥ ३३२ ॥
सिद्धयः समयज्ञस्य सिद्धाः स्युर्मोक्षपश्चिमाः ।
इत्यग्नावग्रतो विप्र दत्वा समयसंचयम् ॥ ३३३ ॥

[ विष्णुहस्तप्रदानपूर्वकं शिष्यस्य मन्त्रहृद्यागाद्युपदेशः ]

भूतिना तिलकं कृत्वा मण्डलाग्रं व्रजेद्गुरुः ।
संपूज्य तत्र मन्त्रेशं विधिवत्पूर्ववन्मुने ॥ ३३४ ॥
विष्णुहस्तं ततो दद्यान्मूर्ध्नि पृष्ठे हृदन्तरे ।
आलम्भे(भेत् ?)मुद्रया सर्वं मूर्ध्नः पादतलान्ततः ॥ ३३५ ॥
शिष्यमुच्चारयेन्मन्त्रं न्यासहृद्यागपूर्वकम् ।

[ कुम्भस्थदेवस्यार्चनम् ]

मन्त्रेण विविधैर्भोगैर्यथा चावसरोदितैः ॥ ३३६ ॥
कुम्भस्थमर्चयेद्भक्त्या देववन्मन्त्रभक्तितः ।

[ अथ गुरोः पूजनम् ]

गुरुमष्टाङ्गपातेन पूजयेत्तदनन्तरम् ॥ ३३७ ॥
शिरः पादतले कृत्वा आनन्दाश्रुयुतो वदेत् ।
सपुत्रदारः सधनः प्रभो दासोऽस्म्यहं तव ॥ ३३८ ॥
भावोपेतं द्विज गुरोरात्मानं तु निवेदयेत् ।
ग्रामं वा रत्ननिचयं सुवर्णं वा कृताकृतम् ॥ ३३९ ॥
हस्त्यश्वरथपादातदासीदासगणैस्सह ।
यद्यद्यथोचितं वस्तु येन वा तुष्यते गुरुः ॥ ३४० ॥
समग्रेणापि दत्तेन भवेन्नानृणता गुरोः ।
भक्त्या विशुद्धया युक्तः पूजितस्य फलाम्बुना ॥ ३४१ ॥

अशाठ्येन तु विप्रेन्द्र भवत्यनृणवान्गुरोः ।

[ दीक्षान्ते वैष्णवाना भोजनादिना सन्तर्पणम् ]

आचार्यो दीक्षये(येस्तोषये ?)त्पश्चाद्वैष्णवान्पाञ्चरात्रिकान् ३४२

यथाशक्ति ह्यशाठ्येन भोजनेन धनेन च ।

[ रात्र्यतिवाहने विशेषनियमः ]

गीतकैर्मङ्गलैर्वाद्यैः स्तोत्रैः शास्त्रकथान्वितैः ॥ ३४३ ॥

क्षपयित्वा ततो रात्रिं त्रिरात्रं सप्त पञ्च वा ।

[ त्रिस्थानस्थस्य भगवतो विसर्जन विश्वक्सेनपूजनं च ]

पूजया जपहोमेन दीक्षितः श्रद्धयाऽन्वितः ॥ ३४४ ॥

प्रागुक्तेनैव विधिना त्रिस्थानस्थं हरिं क्रमात् ।

विसृज्य पूजयेत्पश्चाद्विश्वक्सेनं तु पूर्ववत् ॥ ३४५ ॥

[ अवभृथ सोमपानप्रकारनिरूपणम् ]

कलशद्वितयं कुर्यात्प्रागुक्तविधिना शुभम् ।

मध्वाज्यक्षीरसंपूर्णं यागमेकेन सेचयेत् ॥ ३४६ ॥

द्वितीयं मूलमन्त्रेण चन्द्रमध्यगतेन च ।

अभिमन्त्र्य च संस्थाप्य सोमपानार्थमादितः ॥ ३४७ ॥

मण्डलं प्लावितं येन कलशेन द्विजोत्तम ।

यानारूढो गृहीत्वा तं वामहस्ततले गुरुः ॥ ३४८ ॥

पृष्ठेऽस्य दक्षिणं दद्यादस्त्रराजं जपेन्मुने ।

शिष्यैः परिवृतो यायान्मङ्गलादिपुरस्सरैः ॥ ३४९ ॥

पटहैः शङ्खशब्दैश्च पूजां[1] निक्षिप्य चोदके ।

प्रक्षाल्य पाणिपादं तु आचम्य न्यासमाचरेत् ॥ ३५० ॥

तमानीय च संपूर्णमम्भसा यत्र नारद ।

प्रक्षिप्तयागसंलग्नपुष्पार्घ्यादिकलम्भनम् ॥ ३५१ ॥

फलशाखान्तरस्थं च पुष्पस्रक्कण्ठधारिणम् ।

छादितं सितवस्त्रेण सर्वमन्त्राभिमन्त्रितम् ॥ ३५२

प्रविश्य यागभवनं मध्ये ह्युपविशेद्गुरुः ।

पीठन्यासप्रयोगेण प्रागुत्तरमुखस्ततः ॥ ३५३ ॥

---

1 विश्वक्सेनपूजाद्रव्यम्

क्रमेण दीक्षितानां च धारया सेचयेच्छिरः ।
चक्रास्त्रसिंह्मैरच्छिद्रैः सिद्धये सिद्धिमिच्छताम् ॥ ३५४ ॥
दीक्षावसाने सर्वत्र विधिनाऽनेन यत्नतः ।
शिष्याणां कृपयाऽऽचार्यो दद्यादवभृथं शुभम् ॥ ३५५ ॥
यथाऽभिषेके तु मुने आचार्यस्साधकात्मनाम् ।
स्नानार्थं कलशं तद्वत्कुर्यादवभृथे सदा ॥ ३५६ ॥
कलशेन शुभेनैव सर्वतीर्थमयेन तु ।
स्नातः संपूजयेद्भूयो गुरुं च सपरिच्छदम् ॥ ३५७ ॥
प्रसन्नः पूजितो दद्यात्सोमपानं ततः क्रमात् ।
पात्रेष्वस्त्राभिजप्तेषु चन्द्रबिंबयुतेषु च ॥ ३५८ ॥
एकैकं तु ततः पात्रं मुद्रया चामृतेन तु ।
संपूर्यामृतमन्त्रेण सुधासन्दोहरूपिणा ॥ ३५९ ॥

[ अथ गुरुयागः ]

ततोऽपरस्मिन्नहनि महता विभवेन तु ।
गुरुयागं मुने कुर्याच्छिष्यः सत्यपराक्रमः ॥ ३६० ॥
रजोभिर्मण्डलं कृत्वा चतुरश्रायतं शुभैः ।
तूलपूर्णं ततो दद्यादासनं फलकोपरि ॥ ३६१ ॥
तदाधारक्रमेणैव पुष्पाद्यैः पूजयेच्छिशुः ।
अभ्यर्च्योद्वर्त्य संस्थाप्य आलभ्याच्छाद्य शोभनैः ॥ ३६२ ॥
वस्त्रैःकटककेयूरैः पश्चादुपविशेति च ।
विज्ञाप्यो ह्यद्य भगवान्गुरुमूर्तिर्जनार्दनः ॥ ३६३ ॥
उपविष्टं तु पुष्पाद्यैर्मन्त्रेणानेन पूजयेत् ।
अज्ञानगहनालोकसूर्यसोमाग्निमूर्तये ॥ ३६४ ॥
दुःखत्रयाग्निसन्तापशान्तये गुरवे नमः ।
नैवेद्यमग्रतः कृत्वा पवित्रं विविधं बहु ॥ ३६५ ॥
वीजयन्नग्रतस्तिष्ठेत्किंकुर्वाणपरायणः ।
भुक्तं तृप्तमथाचान्तं प्राच्य संवाहयेत्ततः ॥ ३६६ ॥
शयनस्थं गुरुं विप्र स्वयं भुञ्जीत वै ततः ।
तदनुज्ञां गृहीत्वा तु शिरसा शान्तमानसः ॥ ३६७ ॥

[ गुरुशिष्ययोर्दीक्षाविधानफलम् ]

एवं विधिविधानेन दीक्षां यः कुरुते गुरुः ।
यस्य हि क्रियते विप्र समोक्षमधिगच्छति ॥ ३६८ ॥
कुरु गुप्तमिदं सर्वमभक्तानां च सर्वदा ।
दर्शयस्व च भक्तानामास्तिकानां विशेषतः ॥ ३६९ ॥

इति श्रीपञ्चरात्रे जयाख्यसंहितायां दीक्षाविधानं नाम षोडशः पटलः ।

---

अथ शिष्यभेदाख्यानं नाम सप्तदशः पटलः ।

नारदः—

साधकाचार्यसमयिपुत्रकाणां यथार्थतः ।
ज्ञातुमिच्छामि भगवन् त्वत्तो लक्षणमुत्तमम् ॥ १ ॥
समयज्ञश्च किं कुर्यात्पुत्रकः किं समाचरेत् ।
साधकः कथमास्ते वै किमाचार्यः करोति च ॥ २ ॥

श्रीभगवान्—

[ समयिलक्षणम् ]

यस्य मन्त्रे पराभक्तिर्ब्रह्मचारी जितेन्द्रियः ।
सत्यवाक्चतुरो धीरो ह्रीश्रद्धाबुद्धिमांश्च यः ॥ ३ ॥
दृढव्रतः शुचिश्चैव गुर्वाराधनतत्परः ।
समाचरेच्छुभं नित्यं प्रसन्नात्मा प्रियंवदः ॥ ४ ॥
प्राप्तानुज्ञस्सवित्तोऽपि यागेन गुरुणार्चयेत् ।
पश्येत्तथाऽन्यतो गत्वा यागं वै यत्र यत्र च ॥ ५ ॥
पूजितं तर्पितं विष्णोः शास्त्रं च शृणुयात्सदा ।
पालयेत्समयान्सर्वान्मन्त्रस्मरणपूर्वकान् ॥ ६ ॥
शङ्खचक्रगदापद्ममूर्तिमुद्रासमन्वितः ।
द्वादश्यादिषु कालेषु पूजयेद्धवनं विना ॥ ७ ॥
पठनं श्रवणं कुर्यात्सततं चार्चनं विना ।
शास्त्रार्थं विधिवद्ज्ञात्वा नयाचारसमन्वितः ॥ ८ ॥
पालयन्गुरुगेहाच्च व्यवहारं सदुत्थितम् ।
एवं लक्षणसंपूर्णो गुरुमभ्यर्थयेत्पुनः ॥ ९ ॥

प्रत्यहं पूजनार्थं यस्समयज्ञस्स नारद ।
ज्ञात्वा तं गुरुणा सम्यगुक्तचिह्नैस्तु सामयैः ॥ १० ॥
पूरणीयाऽस्य चाकांक्षा यदर्थमुपरोध( धि ? )तः ।
तापनं गुरुवेश्मार्थं व्यवहारं सहेत सः ॥ ११ ॥

[ पुत्रकलक्षणनिरूपणम् ]

निर्वर्त्य मण्डलं सम्यक्तदीयेन धनेन च ।
रजोभिः पत्रपुष्पाद्यैरभावा(द्विभवात् ?)त्प्रापणस्य च ॥ १२ ॥
समयज्ञं ततः शिष्यं ( पुत्रं ? ) क्रमेणारचयेद्गुरुः ।
ततःप्रभृति कालाच्च पूजां विष्णोः समाचरेत् ॥ १३ ॥
प्राणात्ययेऽपि विप्रेन्द्र रक्षेल्लोपं( पात् ? )प्रयत्नतः ।
नचास्य विहितो होमो धर्मार्थं पूजनं विना ॥ १४ ॥
नित्यपूजाभियुक्तो यः पूर्वोक्तगुणभूषितः ।
समुपैति तमुत्कर्षं श्रवणाच्छास्त्रचिन्तनात् ॥ १५ ॥
ददात्युत्कलिकां तस्य हृदयस्थो जनार्दनः ।
साधनोपरि मन्त्रस्य प्रार्थयेत गुरुं ततः ॥ १६ ॥

[ साधकलक्षणनिरूपणम् ]

शुश्रूषा परमा भक्त्या संक्रमो गुरुणा ततः ।
क्रमोत्कृष्टगुणैर्युक्त एकरूपस्समाहितः ॥ १७ ॥
नियुक्तादच्युतश्रद्धी शास्त्रार्थकृतधीर्महान् ।
यजेद्यागेन वै भूयो मन्त्रं चाभीष्टसिद्धये ॥ १८ ॥
अभिषिक्तोऽभ्यनुज्ञातो धैर्योत्साहसमन्वितः ।
एकान्तं निर्जनं यायान्नारायणनिकेतनम् ॥ १९ ॥
दूरतो बान्धवानां च दुर्जनानां विशेषतः ।
क्षेत्रमायतनं चैव निर्द्वन्द्वं चाथ पर्वतम् ॥ २० ॥
सोदकं च फलाकीर्णं रम्यमासन्नगह्वरम् ।
वनञ्चोपवनं वाऽथ प्रसिद्धं सिद्धसेवितम् ॥ २१ ॥
वितृष्णो बन्धुवर्गाच्च संविसृज्य पुरान्वितम् ।
स्वाध्यायशौचसन्तोषसंपूर्णे स्वगृहेऽथवा ॥ २२ ॥
सधायेदीप्सितं मन्त्रं भावशुद्धिसमन्वितः ।

यथा सुखेनासनेन आसने व्याप्तिभाविते ॥ २३ ॥
प्रसन्नास्यः कृतन्यासो लक्षं लक्ष्यस्थितो जपेत् ।
क्षेत्रीकृतो भवेन्मन्त्रो यत्र तत्र स्थितस्य च ॥ २४ ॥
निर्वर्तनेन जिह्वाग्रात्परित्यक्तोऽपि वै जपेत् ।
समाराधनसिध्यर्थं मन्त्रस्यार्घ्यकृतो मुने ॥ २५ ॥
दद्याद्धृदयमन्त्रेण ततः प्रभृति नारद ।
चरुभुग्वा फलाहारो भिक्षाशी वा पयोभुजः ॥ २६ ॥
शाकमूलं तथा कन्दमश्नीयाद्वर्तते यथा ।
शुद्धान्तसर्पिषश्शालीन् मत्यक्षलवणोज्झितान् ॥ २७ ॥
हृष्टस्तुष्टः प्रसन्नात्मा कालोक्तजपमारभेत् ।
इदमाचरमाणस्तु प्रत्यहं मुनिसत्तम ॥ २८ ॥
निशाक्षये तु शयनात्स्मृत्वा नारायणं विभुम् ।
उत्थाय दक्षिणांसेन वामपादं न्यसेद्भुवि ॥ २९ ॥
पदे पदे स्मरंश्चास्त्रं दूरं यायाद्द्विजालयात् ।
कृत्वा मलच्युतिं तत्र वाससा कं विवेष्ट्य च ॥ ३० ॥
दिङ्नभो न निरीक्षेत ततो यायाज्जलाशयम् ।
शौचं कृत्वा यथापूर्वं विधिनाऽऽचमनं ततः ॥ ३१ ॥
दन्तकाष्ठं तु वै भुक्त्वा स्नायात्तदनु नारद ।
सामान्यविधिनाऽस्त्रेण गायत्रीं वैष्णवीं जपेत् ॥ ३२ ॥
सकृत्त्रिःपञ्चवारान्वा सप्त वाऽथ स्वशक्तितः ।
ततः स्वमाश्रमं गत्वा मन्त्रं पुष्पैश्च पूजयेत् ॥ ३३ ॥
केवलं शास्त्रपीठस्थं स्वदेहस्थं तु वा मुने ।
संपूज्य च जपं कुर्याद्यावद्वै प्रहरद्वयम् ॥ ३४ ॥
तदूर्ध्वं पूर्ववत्स्नात्वा विशेषेण विधानवत् ।
न्यासावसानं निखिलं सर्वं कुर्यात्पुरोदितम् ॥ ३५ ॥
पूजाग्निहोत्रपर्यन्तं ततस्तु जपमारभेत् ।
यावद्दिनावसानं तु भूयः स्नायाद्द्विजोत्तम ॥ ३६ ॥
उपास्य विधिवत्संध्यां देवं संपूजयेत्ततः ।
विसर्ज्य भोजनं कुर्यात्सततं तारकोदये ॥ ३७ ॥

भुक्त्वा शयीत शयने मृदुस्निग्धे च भूतले ।
अर्धरात्रे समुत्थाय पादशेषेऽथ वा द्विज ॥ ३८ ॥
आचम्य देवं संस्मृत्य शीघ्रं संपूज्य पूर्ववत् ।
जपं कुर्याद्यथाशक्ति अर्चयेच्च विभोस्ततः ॥ ३९ ॥
येन संरक्षितो विप्र भवेद्वै नापहीयते ।
सिद्धैरदृश्यभूतैस्तु मन्त्रिसिध्यभिकांक्षिभिः ॥ ४० ॥
समर्प्य चैवं शयने श्रमं वै सन्त्यजेत्पुनः ।
अनेन विधिना यो वै मन्त्राराधनतत्परः ॥ ४१ ॥
उच्यते मुनिशार्दूल विज्ञेयस्सतु साधकः ।
न तेन कुत्रचित्कार्यं शापानुग्रहकर्मणि ॥ ४२ ॥
न तेन मन्त्रो वक्तव्यो मुद्रा वा समयास्तु वा ।
स्वानुष्ठानेऽपि यत्कर्म सर्वं सर्वस्य गोपयेत् ॥ ४३ ॥
मन्त्रगुप्तिस्तु कर्तव्या सततं मन्त्रसिद्धये ।
ताद्व्याप्तिभावनोपेता ज्ञातव्या मन्त्रवादिना ॥ ४४ ॥
गुरुं प्रसाद्य देवं च शास्त्रं चालोक्य यत्नतः ।
तन्त्रज्ञो मन्त्रवद्धीरो द्वाभ्यां चैव द्विजोत्तमः ॥ ४५ ॥

[ अथाचार्यलक्षणम् ]

मन्त्रसिद्धिस्तु वै तस्य विज्ञाता गुरुणा यदा ।
गुरुणा वै सोऽभिषिक्तः(षेच्यः ?)ततः शिष्यः प्रसादतः ॥ ४६ ॥
कृत्वा यागं चतुर्थं तु तद्वित्तेन तु पूर्ववत् ।
पूजयित्वा समाहूय साधकं लक्षणान्वितम् ॥ ४७ ॥
पूजा कार्या विधानेन लययागोदितेन वै ।
स बाह्याभ्यन्तरोक्तेन निश्शेषेण यथा पुरा ॥ ४८ ॥
अग्नौ तु पूर्ववद्दीक्षां निर्वाणाख्यां समापयेत् ।
ततोऽभिषिच्य विधिना स्वाधिकारं निवेदयेत् ॥ ४९ ॥
गृहीत्वा तेन कर्तव्यं गुरुत्वमितरेषु च ।
पूजाग्निहवनं चैव जपध्यानान्वितं सदा ॥ ५० ॥
भक्तानां संशयच्छेदं कुर्याच्छास्त्रं विना तु वै ।
अनुग्रहं च शापं च मन्त्रारंभणमर्पणम् ॥ ५१ ॥
न लोभेन न रागेण न स्वार्थेन न नामतः ।

कुर्यादनुग्रहं जन्तोः कस्यचिद्वा शठस्य च ॥ ५२ ॥
भीतस्य च विनीतस्य भक्तस्यार्त्तस्य कारयेत् ।
प्रायश्चित्तैः सदा शान्तिं कुर्यान्नीतिच्युतस्य च ॥ ५३ ॥
विभागो लिंगिनां चैव वेदनीयः सदैव हि ।
वैखानसादि सर्वेषां वैष्णवानां च नारद ॥ ५४ ॥
प्रसन्नश्चाभिषिञ्चेत भक्तं भव्यमनेकधा ।
मोक्षार्थमाधिपत्यार्थं दुःखोपशमनाय च ॥ ५५ ॥
कुण्डमण्डलपद्मादीन्सूत्रयेत्प्रतिमादिकान् ।
शिष्याणामुपकारार्थं दर्शयेच्छिल्पिनस्तथा ॥ ५६ ॥
कुर्यात्सम्यक्प्रतिष्ठानं देवदेवस्य वै विभोः ।
समदृष्ट्या तथाऽन्येषां देवानां स्थापनं द्विज ॥ ५७ ॥
अवैष्णवेषु मर्त्येषु भक्तेष्वन्यत्र सर्वदा ।
तच्छासनं गुरूणां च अभयात्प्रार्थितोऽपि तैः ॥ ५८ ॥
स्वकल्पोक्तविधानेन कुर्यात्सर्वेष्वनुग्रहम् ।
अभ्यर्थितस्तदा विप्र यजनं च पवित्रकम् ॥ ५९ ॥
स्वशिष्यपरशिष्याणां लोभनिर्मुक्त आचरेत् ।
अशास्त्रज्ञे( षु ?) चान्येषु गुरुभावस्थितेन च ॥ ६० ॥
चुम्बुकत्वं न कुर्याद्वै तर्केणागमतोऽपि वा ।
नातीव संग्रहं कुर्यान्मात्रावित्तस्य नारद ॥ ६१ ॥
नित्यमभ्यस्यति त्यागमनित्यं भावयेद्भवम् ।
एवं लक्षणसंपन्नो यस्स आचार्य उच्यते ॥ ६२ ॥

इति श्रीपाञ्चरात्रे जयाख्यसंहितायां शिष्यभेदाख्यानं नाम सप्तदशः पटलः ।

---

अथाभिषेकाख्यानं नामाष्टादशः पटलः ।

श्रीभगवान्—

[ अभिषेकेऽधिकारः ]

अथाभिषेचयेच्छिष्यं सर्वलक्षणसंयुतम् ।
सुशान्तं स्पष्टमनसं संयतं देवपूजकम् ॥ १ ॥
गुरुभक्तं जिताक्षं च पूर्वोक्तसमयस्थितम् ।
एवंविधस्य सततं कर्तव्यमभिषेचनम् ॥ २ ॥

[ अभिषेक्तुराचार्यस्य ब्राह्मणजातीयस्य सर्वेषामभिषेकविधानेऽधिकारः ]

आचार्यस्सर्ववर्णानामाश्रमाणां तथैव च ।
तथा सामयिकादीनां त्रयाणां च विशेषतः ॥ ३ ॥
प्रभुत्वेनाभिषेक्तव्यमधिकारार्थमेव च ।
तेनापि सर्वजन्तूनां कार्यो नित्यमनुग्रहः ॥ ४ ॥
परितुष्टेन सततं दातव्यमभिषेचनम् ।
ब्राह्मणः पञ्चकालज्ञः कुर्यात्सर्वेष्वनुग्रहम् ॥ ५ ॥

[ ब्राह्मणाद्यभावे क्षत्रियादीनां स्वस्वावरवर्णानां शिष्याणामनुग्रहाभिषेककरणेऽधिकारः ]

तदभावाद्द्विजश्रेष्ठ शान्तात्मा भगवन्मयः ।
भावितात्मा च सर्वज्ञः शास्त्रज्ञः सत्क्रियापरः ॥ ६ ॥
सिद्धित्रयसमायुक्त आचार्यत्वेऽभिषेचितः ।
क्षत्रविट्शूद्रजातीनां क्षत्रियोऽनुग्रहक्षमः ॥ ७ ॥
क्षत्रियस्यापि च गुरोरभावादीदृशो यदि ।
वैश्यःस्यात्तेन वै कार्यो द्वयोर्नित्यमनुग्रहः ॥ ८ ॥
सु( स? )जातीयेन शूद्रेण तादृशेन महाधिया ।
अनुग्रहाभिषेकौ च कार्यौ शूद्रस्य सर्वदा ॥ ९ ॥

[ उत्तमवर्णस्याविदुष उपायेन संबोधप्रापणम् ]

उपायेन भयाल्लोभात्सर्वैर्मूर्खो द्विजोत्तमः ।
सन्मार्गे विनियोक्तव्यः शास्त्रेण क्रियया तथा ॥ १० ॥
यावत्संबोधमाप्नोति स्वात्मना शुभलक्षणम् ।

[ प्राप्तसंबोधस्य तस्य विनाऽनुग्रहबुद्ध्या सकलक्रियाधानपूर्वकं कालेन कृतकृत्यतापादनम् ]

पूर्वोक्तेन विधानेन इष्ट्वा यागेन चाच्युतम् ॥ ११ ॥
विधिनाऽग्नौ च सन्तर्प्य स्नापयित्वा द्विजोत्तम ।
विनाऽनुग्रहबुध्या वै तस्य कार्या क्रियाऽखिला ॥ १२ ॥
मन्त्रेणार्चापयेद्विष्णुमर्थितो ह्युपवेशितम् ।
कृतकृत्यो यदा स स्यात्क्रमात्कालान्तरेण च ॥ १३ ॥
आचारेण तथा नीत्या शास्त्रेण कृपया तथा ।

[ सजतीयस्यापि गुरोरलाभेन स्वस्य स्वेनैवानुग्रहाभिषेकयोः कर्तव्यता ]

तथा शास्त्रोक्तविधिना स्वयमिष्ट्वा जगद्गुरुम् ॥ १४ ॥

हुत्वा शास्त्रोक्तविधिना अर्चयित्वाऽच्युतं प्रभुम् ।
अनुग्रहाभिषेकौ च स्वयमात्मनि कल्पयेत् ॥ १५ ॥
स्वजातीयगुरोर्विप्र अभावादिदमाचरेत् ।
अनुकल्पं द्विजाद्यैश्च आत्मसंस्कारसिद्धये ॥ १६ ॥

[ सति गुरौ स्वेनैव कर्तव्यतायाः प्रतिषेधः ]

गुरौ वर्णोत्तमे विप्र विद्यमाने श्रुतेऽपि वा ।
स्वदेशतोऽपि वाऽन्यत्र नेदं कार्यं शुभार्थिना ॥ १७ ॥
स्वदेशतोऽपि यः कुर्याद्यत्र यत्र विपर्ययम् ।
तस्येह पुत्रनाशः स्यात्तस्माच्छास्त्रोक्तमाचरेत् ॥ १८ ॥

[ उत्तमवर्णस्य दीक्षादिविधानेऽवरवर्णस्यानधिकारः ]

क्षत्रविट्शूद्रजातीयः प्रातिलोम्यान्न दीक्षयेत् ।
त्रितत्त्वविद्द्विजातीयो दीक्षयेदनुलोमतः ॥ १९ ॥

[ समयज्ञाभिषेकविधानप्रकारः ]

मूलमन्त्रोपजप्तेन तद्वद्याप्तिविभवं विना ।
समयज्ञस्य संपाद्यं गुरुणाचाभिषेचनम् ॥ २० ॥

[ पुत्रकस्याभिषेकविधानप्रकारः ]

मन्त्रोच्चारणमात्रेण ध्यानसंवित्तिवर्जितम् ।
ध्यात्वाऽथ तत्त्वनिश्रेणीं नवधा बीजसंस्थिताम् ॥ २१ ॥
एकोनाधिष्ठितां सर्वां मूलेन सकलात्मना ।
तां तु संपूज्य संस्मृत्य सृष्टिधर्मक्रमेण तु ॥ २२ ॥
मनसा तु मुनिश्रेष्ठ पुष्पैर्वा विविधैः शुभैः ।
ततोऽभिषेको दातव्यस्तत्त्वाख्यः पुत्रकस्य च ॥ २३ ॥

[ साधकाभिषेकप्रकारः ]

साधकस्यापि वक्ष्यामि अभिषेकविधिं क्रमात् ।
ध्यात्वाऽथ तत्त्वनिश्रेणीं संहारं सृष्टियोगतः ॥ २४ ॥
नवधा त्रिविधेनैव भिन्नां सूक्ष्मादिना त्वथ ।
मन्त्रश्रेणीं च नवधा क्रमान्यस्य पुरोदिताम् ॥ २५ ॥
तत्रैव सृष्टिं योगेन सकलं निष्कलं द्विधा ।
पूजयित्वा विधानेन कलशेषु पृथक् पृथक् ॥ २६ ॥

प्राग्वत्संस्मृत्य संस्मृत्य साधकत्वेन पुत्रकम् ।
तत्त्वाभिषेचनं दद्याच्छुभं सिद्धिकरं महत् ॥ २७ ॥
तत्वमन्त्रावधिर्यावत्साधकस्याभिषेचनम् ।

[ आचार्याभिषेचनम् ]

दत्वैवं मन्त्रसिद्धस्य गुरुत्वेन ततो द्विज ॥ २८ ॥
तस्यैव यादृशं दद्यादभिषेकं हितं शृणु ।
ईश्वरादचलान्ताच्च साधिभूताधिदैवताम् ॥ २९ ॥
तत्त्वमालां स्मरेत्सर्वां सृष्टिन्यायेन वै पुरा ।
तत्र विन्यस्य विततां मन्त्रश्रेणीं पुरोदिताम् ॥ ३० ॥
त्रिविधेन प्रकारेण सप्राणांद्यावदङ्कुशम् ।
प्रपूज्य विधिना पश्चात्संहाराख्यक्रमेण तु ॥ ३१ ॥
परिजप्यं द्विजश्रेष्ठ यावद्वाणी निवर्तते ।
स्वभावस्थो गुरुः साक्षात्परेणानेकभेदिना ॥ ३२ ॥
ततोऽभिषेको दातव्यो मनसा विभवेन च ।
परतत्वावधिं ध्यात्वा देशिकश्चाभिषेचयेत् ॥ ३३ ॥

[ समयज्ञादीना चतुर्णामभिषेके भावनीयः पर्वभेदः ]

सेनापतिक्रमेणैव समयज्ञस्य सर्वदा ।
महामन्त्रित्वविधिना पुत्रकस्याभिषेचनम् ॥ ३४ ॥
युवराजविधानेन दातव्यः साधकस्य च ।
राजोपचारविधिना अभिषेको गुरोः स्मृतः ॥ ३५ ॥

[ आचार्याभिषेकप्रयोगः ]

दीक्षामण्डलवेद्यां तु सितेन रजसा गुरुम् ।
स्वस्तिकं मण्डलं कृत्वा तन्मध्ये मण्डलं शुभम् ॥ ३६ ॥
द्विहस्तं शाश्वतं पद्मं यज्ञवृक्षोद्भवं तु वा ।
सुकृतं चाऽथ सुश्लक्ष्णं सर्वत्राष्टाङ्गुलोच्छ्रितम् ॥ ३७ ॥
मृगचर्म तु तत्पृष्ठे सितं वस्त्रं तदूर्ध्वतः ।
वितानेनोर्ध्वताच्छेन (?) सपुष्पेण सितेन च ॥ ३८ ॥
पूर्णपात्रान्वितं तत्र दिक्षु पूर्णघटादिकम् ।
दद्याद्दीपाष्टकं तत्र लाजादीन् परितः क्षिपेत् ॥ ३९ ॥

संस्थाप्य पीठनिकटे भ्रमदक्षिणतः क्रमात् ।
चन्दनं सितमर्घ्यं च दूर्वा जातिफलानि च ॥ ४० ॥
तांबूलव्यञ्जनं दण्डं विचित्रे चाप्युपानहौ ।
शङ्खचक्रगदापद्मशुभमुद्राचतुष्टयम् ॥ ४१ ॥
वाससी उपवीतं च कौशेयं च पवित्रकम् ।
घटिकां करणीं सूत्रमर्घ्यपात्रं कमण्डलुम् ॥ ४२ ॥
गैरिकं मुखवासांसि सितमृद्रोमयं तथा ।
कृष्णसाररुरोश्चर्म दन्तधावनमेव च ॥ ४३ ॥
ततः सर्वाधिकारार्थं संहितापुस्तकादि च ।
ईशदिङ्मण्डलस्याथ स्थलीं कृत्वा तथाविधाम् ॥ ४४ ॥
शोभितां च वितानाद्यैस्तत्र मन्त्रेश्वरस्ततः ।
आदौ तु कलशे पूज्यस्ततो मण्डलमध्यगः ॥ ४५ ॥
वह्निमध्ये ततः पूज्यः शिष्यदेहे पुनः पुनः ।
आत्मस्थं च पुरा देवं संपूज्य तदनन्तरम् ॥ ४६ ॥
आनीय कलशान्दिव्यान् पूर्वलक्षणलक्षितान् ।
सर्वरत्नैश्च संपूर्णान्कदलीफलशोभितान् ॥ ४७ ॥
तीर्थोदकेन संपूर्णान् प्रागुक्तरचनान्वितान् ।
प्रदक्षिणेन विन्यस्य प्रागादौ मण्डलाद्बहिः ॥ ४८ ॥
स्वतत्त्वसंख्ययाऽऽचार्ये

[ आचार्याभिषेकात् साधकाद्यभिषेके कलशसङ्ख्याया भेदः ]

साधके पुत्रकेऽथ च ।
एकं वै समयज्ञस्य द्वे कर्म( व्यमेकं )विनिक्षिपेत् ॥ ४९ ॥
एवंविधांस्तु( स्त्रीन् )कलशान्सत्याद्यैश्च प्रतिष्ठितान् ।
पुरा कृत्वा विधानेन प्रागुक्तेन क्रमेण तु ॥ ५० ॥
मन्त्रैः संजप्य संपूज्य संचिन्त्य च यथाक्रमम् ।
प्रागादिष्वथ सर्वेषु गन्धपुष्पादिभिः क्रमात् ॥ ५१ ॥
पूर्वोदितेन विधिना इष्ट्वा मन्त्रेश्वरं विभुम् ।
प्रजापयेत्ततः शिष्यं स्वात्मीयेन क्रमेण तु ॥ ५२ ॥
चरुणा च ततः पूज्यमाधारादिक्रमेण तु ।

वेदिमध्यगतं चैव अभिषेकासनं शुभम् ॥ ५३ ॥
मन्त्रपीठत्वमापन्नं लाजप्रकरशोभितम् ।
तस्योपरि स्थितं कृत्वा शिष्यं मन्त्रशरीरिणम् ॥ ५४ ॥
गत्वाऽथ मण्डलाग्रं तु विज्ञाप्यः परमेश्वरः ।
त्वच्छासनप्रपन्नानामधिकारं करोम्यहम् ॥ ५५ ॥
शिष्यमात्मसमं भक्तमहं यास्यामि ते लयम् ।
लब्धानुज्ञस्ततो विप्र पूर्वदिक्संस्थितश्च यः ॥ ५६ ॥
कलशं पूजयित्वा तं स्वमन्त्रेण स्वमुद्रया ।
सहस्रपरिजप्तेन सम्यगष्टाधिकेन च ॥ ५७ ॥
शतजप्तेन दशभिः सकृत्पूर्वादितः क्रमात् ।
ध्यात्वा चामृतसंपूर्णं मन्त्रं रत्नोज्ज्वलं प्रभुम् ॥ ५८ ॥
तस्य मूर्ध्नि शुभं दत्वा कलशं मन्त्रपूजितम् ।
ततः क्रमेण कलशैः सकलैरभिषेचयेत् ॥ ५९ ॥
पठद्भिर्माङ्गलीयानि ऋक्सामानि यजूंषि च ।
मङ्गलैर्दीयमानैस्तु तन्त्रीवाद्यसमन्वितैः ॥ ६० ॥
शङ्खशब्दैः सपटहैर्जयशब्दसमन्वितैः ।
अनेन विधिना कुर्यादाचार्यस्याभिषेचनम् ॥ ६१ ॥
मन्त्रोपकरणं सर्वं तस्य संप्रतिपाद्य च ।
हस्तद्वयं च वक्तव्यं प्रणम्या( त्या ? )संस्थितस्य च ॥ ६२ ॥
सहस्रकिरणाभं तु सूर्यबीजेन चाच्युतम् ।
स्मरेद्दक्षिणहस्तस्थं पद्मे चानन्तपल्लवे ॥ ६३ ॥
कलाद्वादशसंयुक्ते अकाराद्यैरदारुणैः ( ? ) ।
द्रव्यशुद्धिविदाहार्थं द्रव्योत्पत्तौ ततः स्मरेत् ॥ ६४ ॥
सितं सहस्रपत्राढ्यं कलाषोडशकेसरम् ।
सोमबीजेन तन्मध्ये स्मरेन्नारायणं प्रभुम् ॥ ६५ ॥
स्रवन्तममृतं दिव्यं द्रव्योत्पादनकर्मणि ।
भौतं तान्मात्रिकं मान्त्रं विग्रहं चास्य दर्शयेत् ॥ ६६ ॥
विज्ञानपदवीं सर्वां स्वानुभूतामनेकशः ।
स्थानलक्षक्रमेणैव वक्तव्या विविधाश्च वै ॥ ६७ ॥

व्याख्याताः पुस्तके याश्च विज्ञानगतयः शुभाः ।
तच्चित्तं हि क्रमात्तासामनुसन्धाय वै गुरुः ॥ ६८ ॥
आचार्यसमयान् पश्चादूर्ध्वस्थाञ्छ्रावयेच्छुभान् ।

[ आचार्यपदासाधारणा विशेषसमयाः ]

संसारभयभीतानां भक्तानां परमेश्वरे ॥ ६९ ॥
शास्त्रक्रमेण विधिवदिदं शास्त्रं प्रकाशयेत् ।
गच्छंस्तिष्ठन्स्वपन् जाग्रद्भगवन्तं स्मरेत्सदा ॥ ७० ॥
पुण्डरीकस्य मध्यस्थं द्रव्यैर्दानसमुद्भवैः ।
मान्त्रभावाद्यजेद्विष्णुं देशे तस्करसंकटे ॥ ७१ ॥
नाभिमानाच्च वै बाह्या क्रिया त्याज्या कदाचन ।
चातुर्मास्यं च नियममवतिष्ठेदवश्यतः ॥ ७२ ॥
उपभुक्तं परेणैव विशेषादीक्षितेन तु ।
छत्रोपानहवस्त्राद्यं नोपयुञ्जीत जातु वै ॥ ७३ ॥
असंपत्तावथापत्सु न दोषं क्षालिते सति ।
स्वगुरोर्दीक्षितानां च आचार्याणां सदैव हि ॥ ७४ ॥
उपभुक्तं न दोषः स्यात्स्वदत्तादाहृतात्तु वा ।
भगवद्भक्तिनिष्णातास्तच्चित्तास्तत्परायणाः ॥ ७५ ॥
कर्मणा मनसा वाचा संमान्याश्च सदैव हि ।
भर्तव्याश्चैव पूज्याश्च वाग्दानैर्मधुरैः सदा ७६॥ ॥
जातिधर्ममनुज्झित्वा तथाच स्वगुरोः क्रमम् ।
स्वशास्त्रविहितं चापि ज्ञानं शिक्षेदशिक्षितम् ॥ ७७ ॥
एकतः समयाः सर्वे नियमाश्चैव सर्वशः ।
एकतो भगवान्विष्णुर्गुरुस्तद्भाविनो नराः ॥ ७८ ॥
ज्ञात्वा जीर्णमसारं च इदं पुत्र कलेवरम् ।
स्वाधिकारं समारोप्य योग्यस्याटनमाचरेत् ॥ ७९ ॥
दण्डी कषायवासाश्च नमो नारायणाय वै ।
ब्रुवन्प्रणवपूर्वं च त्यक्त्वा सर्वपरिच्छदम् ॥ ८० ॥
क्षेत्रायतनतीर्थानामन्ते ब्रह्मणि योजयेत् ।
आत्मतत्त्वं शरीरं च अग्नौ वा खेचरादिषु ॥ ८१ ॥
तत्त्वसन्यासयोगेन येन स्याच्छान्तिराच्युति ।

[ विष्णुहस्तप्रदानम् ]

इत्युक्त्वा दक्षिणे हस्ते स्वयं सञ्चिन्त्य वै गुरुः ॥ ८२ ॥
मन्त्रात्मानं परं विष्णुं परं सकलनिष्कलम् ।
संपूज्य गन्धपुष्पाद्यैर्दद्यात्तस्य च मस्तके ॥ ८३ ॥

[ शिष्येण गुरोः पादोदकप्राशनकर्तव्यता ]

न्यस्यासनं ततः शिष्यः पादयोर्निक्षिपेच्छिरः ।
प्रक्षाल्य सलिलेनाथ गुरोश्चरणपङ्कजम् ॥ ८४ ॥
तेनात्मानं तु संसिच्य पिपेदञ्जलिना ततः ।
पूर्ववत्पूजयेद्भक्त्या आत्मनाऽथ धनेन च ॥ ८५ ॥
अनेन विधिना कुर्यादाचार्यस्याभिषेचनम् ।

[ साधकाभिषेकातिदेशः ]

एवमेव विधानेन साधकं चाभिषेचयेत् ॥ ८६ ॥
समालम्भनपूर्वं यद्दन्तधावनपश्चिमम् ।
तस्य सर्वोपकरणं दातव्यं नियमैर्विना ॥ ८७ ॥

[ पुत्रकस्याभिषेके देयविशेषः ]

पूजाधिकारशास्त्रं च पुत्रकस्य प्रदीयते ।

[ समयज्ञस्याभिषेके देयविशेषः ]

केवलं समयज्ञस्य प्रदद्याच्छास्त्रपुस्तकम् ॥ ८८ ॥
अभिषेकावसाने च आज्ञायां योगदर्शने (?) ।

[ अभिषेकस्य श्रेयःप्रभृत्यनेकफलसाधनता ]

श्रेयोऽर्थी विधिनाऽनेन यः स्नायाच्छ्रेय आप्नुयात् ॥ ८९ ॥
जयार्थी वाऽथ भूपालो भाग्यार्थी वाऽथ दुर्भगः ।
पुत्रकामाऽथ वनिता पतिकामाऽथ कन्यका ॥ ९० ॥
चिरायुषोऽर्थी यः कश्चित्स्नायात्संवत्सरं प्रति ।
तस्यापमृत्युनाशश्च भवति ह्यचिरात्ततः ॥ ९१ ॥
यावदब्दानि कुरुते तावद्रोगविवर्जितः ।
वलीपलितनिर्मुक्तः सुभगः स्थिरयौवनः ॥ ९२ ॥
सर्वकामानवाप्नोति देहान्ते शाश्वतीं गतिम् ।

इति श्रीपाञ्चरात्रे जयाख्यसहिताया अभिषेकाख्यान नामाष्टादशः पटलः ।

अथ मन्त्रसिद्धिचिन्हाख्यानं नामैकोनविंशः पटलः ।

अभिषिक्तो ह्यनुज्ञातः कृतजापः प्रसन्नधीः ।
मन्त्रस्याराधनं कुर्याद्विधिनाऽनेन नारद ॥ १ ॥
एकान्ते स्वगृहे वाऽथ पूर्वोक्तध्याननिर्मितम् ।
बिम्बं सुलक्षणं कृत्वा पटस्थं धातुजं तु वा ॥ २ ॥
सर्वावयवसंपूर्णं तालं तालाधिकं तु वा ।
विधिना तं प्रतिष्ठाप्य तत्र मन्त्रं यजेत्सदा ॥ ३ ॥
सर्वकामविभूत्यर्थं मोक्षार्थं मुनिसत्तम ।
द्वादशाब्दानि विधिवन्नियमस्थोऽर्चयेत्सदा ॥ ४ ॥
हृद्यैः पुष्पैस्तथा गन्धैः सौभाग्यारोग्यवर्धनैः ।
जपहोमैश्च विविधैर्भूत्वा मन्त्राकृतिः स्वयम् ॥ ५ ॥
शुक्लाम्बरधरः स्रग्वी सितगन्धानुलेपनः ।
पीतयज्ञोपवीती च कटकाङ्गदभूषितः ॥ ६ ॥
ताम्बूलशुद्धवदनो मुखवास्यैः सुवासितः ।
विचित्रतिलकोपेतः सुनिर्मलशिरोरुहः ॥ ७ ॥
माल्यैर्मनोहरैर्गन्धैरशेषैरधिवासितः ।
कुङ्कुमालिप्तचरणस्तथाकृतकरद्वयः ॥ ८ ॥
मूर्तिमुद्राचतुष्केण उपतिष्ठेद्विभूषितः ।
पवित्रभृद्धविष्याशी, समाराध्यश्च मन्त्रराट् ॥ ९ ॥
अभावात्साधनस्यापि केशश्मश्रुविलुण्ठितः ।
यथासम्भववस्त्री च मलयूकादिवर्जितः ॥ १० ॥
सुविनीतसुहृद्युक्तो मन्त्रमाराध्य भक्तितः ।
पूजया जपहोमेन मन्त्रराडथ सिध्यति ॥ ११ ॥
तेन सिद्धेन वै कुर्यात्कर्माणि विविधान्यपि ।
यान्यात्मनोऽभीप्सितानि लोकानामीप्सितानि च ॥ १२ ॥

नारदः—

कैर्लिङ्गैर्लक्ष्यते नाथ सुसिद्धश्चैव मन्त्रराट् ।

भगवान्—

[ मन्त्रसिद्धौ प्रवृत्तस्य साधकस्य वत्सरत्रय विघ्नप्राप्तिः ]

साधकस्याक्षतार्थस्य नित्याभ्यासरतस्य च ॥ १३ ॥

समाराधनकामस्य ( सक्तस्य ) प्रथमं वत्सरत्रयम् ।
जायन्ते बहुशो विघ्ना नियमस्थस्य नारद ॥ १४ ॥
नोद्वेगं साधको याति कर्मणा मनसा यदि ।
[ विघ्नैरनुपहतचित्तस्य तस्य चतुर्थादिवत्सरेषु बहुशिष्योपसेव्यतादिलक्षणशुभप्राप्तिः ]
तृतीयाद्वत्सरादूर्ध्वं शुभं तस्य प्रजायते ॥ १५ ॥
सेव्यते बहुभिः शिष्यैरहर्निशमतन्द्रितैः ।
साधकाश्चोपसेवन्ते किङ्करत्वेन भक्तितः ॥ १६ ॥
निवेदयन्ति सर्वस्वं साधकस्य महात्मनः ।
[ सप्तमादारभ्य राजाद्युपसेव्यता ]
सप्तमाद्वत्सरादूर्ध्वं राजानश्च महीभृतः ॥ १७ ॥
प्रार्थयन्त्युपरोधेन गर्विताश्चाभिमानतः ।
प्रसादः क्रियतां नाथ ममोद्धारणकारणम् ॥ १८ ॥
प्रज्वलन्तं प्रपश्यन्ति तेजसा विभवेन च ।
अतस्ते मुनिशार्दूल निष्ठुरं वक्तुमक्षमम् ॥ १९ ॥
[ दशमादारभ्य नानाश्चर्यदर्शनम् ]
नवमाद्वत्सरादूर्ध्वं स्वयं पश्यति मन्त्रवित् ।
नानाश्चर्याणि हृदये हासानन्दमयानि तु ॥ २० ॥
सदाऽऽह्लादप्रदान्याशु प्रत्यक्षेण बहिस्तथा ।
जड आस्ते क्षणं विप्र क्षणमास्ते प्रहर्षितः ॥ २१ ॥
क्षणं दुन्दुभिनिर्घोषं शृणुयादन्तरिक्षतः ।
क्षणं च मधुरं वाद्यं नानारीतिसमन्वितम् ॥ २२ ॥
क्षणमाजिघ्रते गन्धान् कर्पूरमृगनाभिजान् ।
क्षणमुत्पतमानं च पश्यत्यात्मानमात्मना ॥ २३ ॥
चन्द्रार्ककिरणाकीर्णं क्षणमालोकयेन्नभः ।
गवाश्वगजनादांश्च शृणुयाच्च क्षणं द्विज ॥ २४ ॥
निर्झरस्याम्बुसंक्षोभं क्षणमाकर्णयेन्महत् ।
विद्युज्ज्वालाकुलं पश्येत् क्षणं क्षितितलं द्विज ॥ २५ ॥
तोयपूर्णं क्षणं पश्येत्समग्रं क्षितिमण्डलम् ।
ऋग्यजुस्सामघोषांश्च आकर्णयतिच क्षणम् ॥ २६ ॥
तारकाकारिणश्चित्रान्योगिनो नभसि स्थितान् ।

पश्यत्युग्रान्भयार्तांश्च क्षणं मन्त्रव्रती मुने ॥ २७ ॥
क्षणं किलकिलारावं सह वह्निरवं क्षणम् ।
क्षणं मेघोदयं पश्येत्क्षणं रात्रिं दिने सति ॥ २८ ॥
रात्र्यां च दिवसालोकं ससूर्यं क्षणमीक्षते ।
बलेन परिपूर्णस्तु तेजसा सूर्यवर्चसा ॥ २९ ॥
सूर्येन्दुसदृशः कान्त्या गमने पक्षिराडिव ।
स्वरेण युक्त उच्चेन गम्भीरेण महात्मना ॥ ३० ॥
स्वल्पाशनेन कृशता बहुना च न विद्यते ।
विण्मूत्रयोरथाल्पत्वं भवेन्निद्राजयो महान् ॥ ३१ ॥
जपध्यानरतो मौनी न खेदमभिगच्छति ।
विना भोजनपानाभ्यां पक्षमासाधिकं तु वै ॥ ३२ ॥
इत्येवमादिभिश्चिह्नैः स्वहृद्विस्मयकारकैः ।
प्रवर्तमानैर्बोद्धव्यः प्रसन्नो मम मन्त्रराट् ॥ ३३ ॥

[ मन्त्रसिद्धेरप्रकाश्यता ]

मन्त्रप्रसादजनितं लिङ्गं न तु गुरोर्विना ।
प्रकाशनीयं विप्रेन्द्र कदाचित्सिद्धिमिच्छता ॥ ३४ ॥
प्रकाशयति यो मोहादौत्सुक्यान्मन्त्रजं सुखम् ।
करसंस्थाश्च वै तस्य सिद्धयो यान्ति दूरतः ॥ ३५ ॥
आविर्भवन्ति दुःखानि शोकाश्च विविधा अपि ।
तस्मात्सर्वप्रयत्नेन सिद्धिलिङ्गानि नारद ॥ ३६ ॥
गोपनीयानि यत्नेन य इच्छेद्भूतिमात्मनः ।

इति श्रीपाञ्चरात्रे जयाख्यसंहितायां मन्त्रसिद्धिचिह्नाख्य नामैकोनविंशः पटलः ।

---

अथ प्रतिष्ठाविधानं नाम विंशः पटलः ।

नारदः

साधकानां हितार्थाय बिम्बं यदुदितं त्वया ।
तदहं ज्ञातुमिच्छामि कथं तत्क्रियते विभो ॥ १ ॥
क्व तस्यापि विधानेन स्थापनं कथयस्व मे ।
यस्य संपूजनान्नाथ लिङ्गान्येतानि चाप्नुयात् ॥ २ ।

श्रीभगवान्—

[ अथ पटे बिम्बविधानम् ]

पटे बिम्बविधानं तु सांप्रतं शृणु नारद ।
सर्वसिद्धिकरं रम्यं निर्दोषं नातिविस्तरम् ॥ ३ ॥

[ पटमानादि ]

द्विहस्तं चतुरस्रं तु हस्तमात्रं तु वा पटम् ।
कार्पासमथ वा क्षौमं नवं शुक्लमनाहतम् ॥ ३ ॥

[ पटस्य चित्रकरस्य च संस्कारः ]

प्रक्षाल्य बहुशोऽस्त्रेण चित्रज्ञं स्नाप्य वै द्विज ।
दाहोत्पादनयुक्त्याऽथ सपटं संस्मरेच्च तं ॥ ४ ॥

[ आसनपद्मम् ]

संसूत्र्य कमलं तत्र अष्टपत्रं सकर्णिकम् ।

[ गृहार्चामानम् ]

कर्णिकामध्यसंस्थं तु प्रोच्छ्रायं द्वादशाङ्गुलम् ॥ ५ ॥
त्रिविंशत्यङ्गुलान्तं च बिम्बं लिख्य सुलक्षणम् ।

[ लक्ष्म्यादिपरिवारोपेतस्य ग्राह्यता ]

लक्ष्म्यादिपरिवाराढ्यं लोकेशास्त्रसमावृतम् ॥ ६ ॥
संगृह्याद्यजनार्थं तु

[ गृहादन्यत्र मानाधिक्यम् ]

तत्प्रमाणं द्विजोर्ध्वतः ।
मानं कुर्याद्गृहाद्बाह्ये स्थाने प्रासादपूर्वके ॥ ७ ॥

[ गृहार्चासु लेख्यचित्रबिम्बस्य हस्ताधिकमानत्वेऽप्यदोषता ]

हस्ताधिकेऽपि च कृते चित्रबिम्बे गृहस्थिते ।
न दोषः साधकानां तु दारुमृच्छैलजैर्विना ॥ ८ ॥

[ अथ बिम्बस्यावयवमानविधानम् ]

बिम्बमानं तु नवधा प्रोच्छ्रयात्संविभज्य च ।
भागं भागं तु तं भूयो भजेद्द्वादशधा मुने ॥ ९ ॥
तदङ्गुलं तु बिम्बस्य तेनाङ्गावयवास्ततः ।
दर्शनीयाश्च गुरुणा शिल्पिकस्य समासतः ॥ १० ॥

चिबुकाच्च ललाटान्तं स्याद्वक्त्रं द्वादशाङ्गुलम् ।
ललाटादूर्ध्वतो विप्र त्र्यङ्गुलेनोन्नतं शिरः ॥ ११ ॥
द्वादशाङ्गुलविस्तीर्णं त्रिगुणं परिणाहतः ।
विस्तारद्व्यङ्गुलौ कर्णौ तन्मानद्विगुणोच्छ्रितम् ॥ १२ ॥
कनिष्ठाग्रसमं विद्धि रन्ध्रं श्रोत्रस्य चान्तरात् ।
कर्णभागावधोर्ध्वस्थमानेनार्धाङ्गुलौ स्मृतौ ॥ १३ ॥
कर्णछिद्रात्तु वै बाह्ये कर्णमध्येऽङ्गुलोऽवटम् ।
त्र्यङ्गुलं कर्णपाशाभ्यां व्यासो वा स्याद्यथेच्छया ॥ १४ ॥
भ्रूलता शशिलेखाय(खेव ?)आयामाच्चतुरङ्गुला ।
अर्धाङ्गुलेन विस्तीर्णा मध्ये स्थूलाऽग्रतः कृशा ॥ १५ ॥
भ्रूसन्धिरङ्गुलसमो नासा तु चतुरङ्गुला ।
द्व्यङ्गुलाच्चाग्रतः कार्या तिलपुष्पाकृतिर्यथा ॥ १६ ॥
नेत्राभ्यामन्तरं विद्धि द्व्यङ्गुलं नेत्रभ्रूस्तथा ।
दैर्घ्येण द्व्यङ्गुलं नेत्रं तदायामेन चाङ्गुलम् ॥ १७ ॥
त्र्यंशेन तारकं मध्ये ज्योतिस्[1]तत्र्यं शसम्मितम् ।
घ्राणाधश्चाङ्गुलेनैव पादहीनेन कल्पयेत् ॥ १८ ॥
गोजिकां(?)मुनिशार्दूल एकांशेन ततोऽधरः ।
उत्तराख्यो ह्यधस्थं तु प्रमाणेनाङ्गुलः स्मृतः ॥ १९ ॥
द्व्यङ्गुलं चिबुकं विप्र उच्छ्रायेण प्रकीर्तितम् ।
विस्तारद्व्यङ्गुलं विद्धि सृक्किणी चतुरङ्गुले ॥ २० ॥
ईषद्विहस्तमाने च कर्णपाल्योः परस्परम् ।
कपोलमूर्ध्वे शशिवत्तन्मध्ये चतुरङ्गुलौ ॥ २१ ॥
मुखगण्डौ समौ कुर्यात्सुसंपूर्णौ मनोहरौ ।
कर्णोच्छ्रायस्त्र्यङ्गुलस्याद्विस्ताराच्च नारद ॥ २२ ॥
अष्टाङ्गुलश्च परिधेस्त्रिगुणं परिकीर्तितम् ।
कण्ठादधः स्थितं वक्षो यावत्स्पन्दावधि द्विज ॥ २३ ॥
उन्नतत्वेन विहितं सदैव द्वादशाङ्गुलम् ।
द्विगुणं चैव विस्ताराद्व्यङ्गुलं स्तनमण्डलम् ॥ २४ ॥
एतयोश्चूचुके कुर्यादष्टमांशं स्वकाङ्गुलात् ।
परस्परं च स्तनयोरन्तरं द्वादशाङ्गुलम् ॥ २५ ॥

1 ज्योतिस्तु A.

अष्टाङ्गुलौ स्मृतौ चांसौ विस्तरेण महामते ।
प्रोन्नतत्वेन वै कुर्यात्स्कन्धमूर्ध्वं षडङ्गुलम् ॥ २६ ॥
उच्छ्रायेण तु नाभ्यन्तं स्पन्दाद्वै द्वादशाङ्गुलम् ।
परिधिं नाभिदेशस्य चत्वारोंऽशास्तु पञ्च वै ॥ २७ ॥
अङ्गुलं नाभिरन्ध्रं तु क्रमान्निम्नं द्विरङ्गुलम् ।
कुर्यात्प्रदक्षिणावर्तं नाभिमेढ्रान्तरं मुने ॥ २८ ॥
उच्छ्रायेण तु संपाद्यं सुसमं द्वादशाङ्गुलम् ।
नाभ्यावधेस्तदुदरं संपाद्यं चतुरङ्गुलम् ॥ २९ ॥
शेषं तत्कटिभूभागं विस्तारेणोदरं मुने ।
द्विसप्ताङ्गुलमानं स्यात्परिधेस्त्रिगुणं हितत् ॥ ३० ॥
त्रिषट्काङ्गुलविस्तीर्णं कटिमानं विधीयते ।
चतुः पञ्चाशदङ्गुल्यः परिधिस्तु कटेः स्मृतः ॥ ३१ ॥
षट्त्रिंशाङ्गुलमानेन परिधिस्तु कटेः स्मृतः(?) ।
कुर्यात्प्रजननं विप्र उच्छ्रायेण षडङ्गुलम् ॥ ३२ ॥
द्व्यङ्गुलेन तु विस्तीर्णं वृषणौ चतुरङ्गुलौ ।
त्रिचतुर्मुष्क(?)संपूर्णौ ऊरुदण्डौ ततो द्विज ॥ ३३ ॥
उच्छ्रायेण प्रकर्तव्यौ चतुर्विंशाङ्गुलौ समौ ।
पृथुमूलौ क्रमात्क्षामौ संलग्नौ गजपाणिवत् ॥ ३४ ॥
विस्तारेणाथ वा कुर्यादूरुमूलं नवाङ्गुलम् ।
षट्त्रिंशाङ्गुलमानं स्यादूरुमध्ये तु वेष्टनम् ॥ ३५ ॥
ऊरुभ्यामवसाने तु वेष्टितश्चैकविंशतिः ।
त्र्यङ्गुलं मुनिशार्दूल परितो जानुमण्डलम् ॥ ३६ ॥
विस्तारेणोन्नतश्चापि जानुभ्यामथ मे शृणु ।
द्विद्वादशेनाङ्गुलानां जङ्घोच्छ्राय इहोच्यते ॥ ३७ ॥
षडङ्गुलेन विस्तीर्णं जङ्घामूलं प्रकीर्तितम् ।
जङ्घामध्ये तयोर्नाहो ॥ ३८ ॥
जङ्घावसाने विस्तारे ज्ञेयः पञ्चाङ्गुलो मुने ।
तमेव त्रिगुणीकृत्य तस्यैव परिधिर्भवेत् ॥ ३९ ॥
गुल्फादधस्त्र्यंगुलं स्यात्पदोच्छ्रायस्तु नारद ।

तत्पार्ष्णिपृष्ठतो यावदङ्गुलाग्रं द्विजोत्तम ॥ ४० ॥
भवेत्पादस्तु दैर्घ्येण अङ्गुलानां द्विसप्तकम् ।
षडङ्गुलेन विततः कूर्मपृष्ठोन्नतः क्रमात् ॥ ४१ ॥
चतुरङ्गुलदैर्घ्येण अङ्गुष्ठं द्व्यङ्गुलं ततः ।
त्रिगुणं वेष्टनं तस्य दैर्घ्यात्तत्पादतोऽधिका ॥ ४२ ॥
पादप्रदेशिनी कार्या तत्समीपस्थिताङ्गुलिः ।
अङ्गुष्ठस्य समा कार्या तत्पादोना त्वनामिका ॥ ४३ ॥
अनामिकायाः पादेन हीना पादकनीयसी ।
त्र्यंशेन विद्धि सर्वासां पर्वमानं तु नारद ॥ ४४ ॥
पर्वार्धेन नखाः कार्या अर्धेन्दुसदृशाः शुभाः ।
षट्त्रिंशदङ्गुलं मानं पृष्ठमंसावधि स्मृतम् ॥ ४५ ॥
गोमुखं वा क्रमान्निम्नं यावद्विंशाङ्गुलं भवेत् ।
मध्यप्रदेशाद्विततः पृष्ठवंशोन्नतः क्रमात् ॥ ४६ ॥
सुश्लक्ष्णश्चाविभक्तश्च विभक्तश्च यथा मुने ॥
संमीलनं मीनयुक्तं कक्षा पञ्चाङ्गुला स्मृता ॥ ४७ ॥
सुवर्तुलौ स्फिजौ कार्यौ विस्तारात्षोडशाङ्गुलौ ।
सुविभक्ते च पीने च करिकुम्भोपमे शुभे ॥ ४८ ॥
अधस्तात् स्कन्धशीर्षस्य बाहुः स्याद्द्वादशाङ्गुलः ।
अष्टादशाङ्गुलं विद्धि उपबाहुं द्विजोत्तम ॥ ४९ ॥
मणिबन्धप्रदेशस्तु तत्र त्र्यङ्गुल उच्यते ।
मध्यमाङ्गुलिपर्यन्तं मणिबन्धावसानतः ॥ ५० ॥
द्वादशाङ्गुलमानं तु स्कन्धं स्यात्परिवर्तुलम् ।
चतुरङ्गुलविस्तीर्णं परिधेस्त्रिगुणं स्मृतम् ॥ ५१ ॥
मूलतश्चोपबाहुर्वै पञ्चाङ्गुलमुदाहृतम् ।
त्रिगुणं च तथा नाहं तं क्रमाद्ध्रासयेन्मुने ॥ ५२ ॥
गोपुच्छसदृशाकृत्या तथा स्यात्त्र्यङ्गुलं मुने ।
मणिबन्धप्रदेशस्तु विस्तारेण च वेष्टनात् ॥ ५३ ॥
नवाङ्गुलप्रमाणेन पाणेर्मानमतः शृणु ।
मणेरङ्गुलिमूलान्तं विद्धि सप्ताङ्गुलं सदा ॥ ५४ ॥
पञ्चाङ्गुलप्रमाणेन तिर्यग्विस्तरमुच्यते ।

निम्नं करतलं कुर्याच्छुभरेखाविभूषितम् ॥ ५५ ॥
तत्र मध्याङ्गुलिं विद्धि विप्र पञ्चाङ्गुलं तु वा ।
तस्या द्वे पार्श्वतोऽङ्गुल्यावूने त्वर्धाङ्गुलेन वै ॥ ५६ ॥
तत्पञ्चमांशहीनां च नित्यं कुर्यात्कनीयसीम् ।
सार्धत्र्यङ्गुलमङ्गुष्ठं द्विपर्व परिकीर्तितम् ॥ ५७ ॥
त्रिपर्वाङ्गुलयः शेषाः पर्वार्धेन नखाः स्मृताः ।
गोपुच्छसदृशः कार्या अङ्गुल्योऽङ्गुलमानतः ॥ ५८ ॥
पादहीना कनिष्ठा स्यात्सपादश्चाङ्गुलोङ्गुलाः ( ? ) ।
स्वकप्रमाणविस्तारात्त्रिगुणं विद्धि वेष्टनम् ॥ ५९ ॥
कूर्मपृष्ठनखाः सर्वे अग्रतश्चार्धचन्द्रवत् ।
लिङ्गाकृतिं ( ? ) मूलदेशान्मानमेषामनिश्चितम् ॥ ६० ॥
सलोमदन्तकेशानां मानं शोभाविकल्पितम् ।
केशैरलकजालं तु ललाटोपरि शोभितम् ॥ ६१ ॥
ललाटोर्ध्वाङ्गुलच्छादि कुर्यात्त्रिवलिसंयुतम् ।
मनोहरा ह्यवयवाः सर्वे कार्याः सुलक्षणाः ॥ ६२ ॥
समानविषमा विप्र सक्तासक्ता विशेषतः ।
मानेनानेन वै कुर्यात् बिम्बं विप्र सुलक्षणम् ॥ ६३ ॥
शतमष्टोत्तरं पूर्णमङ्गुलानां स्वकाङ्गुलैः ।
उच्छ्रायेण द्विजश्रेष्ठ मूर्ध्नः पादतलावधि ॥ ६४ ॥
हारनूपुरकेयूरमेखलामौलिशोभितम् ।
पीनाङ्गमध्यदेशाच्च समानवलिशोभितम् ॥ ६५ ॥
शेषं ध्यानोदितं सर्वमुक्तानुक्तं प्रकल्पयेत् ।

[ अथ बिम्बद्रव्यविधानम् ]

कुर्यादनेन मानेन सौवर्णं वाथ राजतम् ॥ ६६ ॥
बिम्बमाराधनार्थं तु आरकूटमयं तु वा ।
शिलामृद्दारुजं वाऽथ यथा संभवतो मुने ॥ ६७ ॥

[ सिद्ध्यभिकाङ्क्षिणा गृहे शैलजादिप्रतिषेधः ]

सम्भवे सति यः कुर्याच्छैलमृद्दारुजं गृहे ।
चिरेण सिद्ध्यस्तस्य प्रवर्तन्ते महामते ॥ ६८ ॥

निर्विघ्नेन भवेन्मोक्षो ह्यतस्सिध्यभिकांक्षिभिः ।
न कार्यं शैलजं गेहे दारुजं वाथ मृण्मयम् ॥ ६९ ॥

[ अथ पीठमानम् ]

बिम्बमानाद्यथा पीठं कुर्याद्देवस्य तच्छृणु ।

[ तत्र पीठद्वैविध्यम् ]

चतुरश्रं तु तद्विद्धि चतुरश्रायतं तथा ॥ ७० ॥

[ चतुरश्रपीठलक्षणम् ]

बिम्बोच्छ्रायसमं पीठं परितश्चैव विस्तृतम् ।
तदर्धेनोच्छ्रितं कुर्यादेतत्सामान्यलक्षणम् ॥ ७१ ॥
चतुरश्रस्य पीठस्य कथितं च महामुने ।

[ चतुरश्रायतपीठलक्षणम् ]

चतुरश्रायतस्याथ प्रमाणमवधारय ॥ ७२ ॥
बिम्बार्धेन तु विस्तीर्णं तत्प्रमाणेन चोन्नतम् ।
समं देवस्य दैर्घ्येण चतुरश्रायतं तु तत् ॥ ७३ ॥
कुर्यात्तुङ्गालयस्थानां देवतानां सदैवहि ।

[ चलार्चायागृहार्चायाश्च पीठमानम् ]

चलानां वेश्मसंस्थानां बिम्बानां पीठमन्यथा ॥ ७४ ॥
कुर्यात्स्कन्धसमं दैर्घ्यात् स्तनमानान्वितं तुवा ।
आपादाज्जानुपर्यन्तं विस्तारेणोच्छ्रयेण च ॥ ७५ ॥
ऊ( तदू ? )र्ध्वेनाथ वा कुर्यात् विस्तारं चापिचोन्नतिम् ।
उक्तोन्नतेर्वा विप्रेन्द्र स्यादर्धेन तु विस्तृतिः ॥ ७६ ॥
तच्चतुर्भागहीनं तु त्रिभागं चार्धमेव वा ।
तुङ्गत्वं विहितं पीठे चलबिम्बस्य सर्वदा ॥ ७७ ॥
धातुद्रव्यस्य चाभावात्स्थिराणामेवमेवहि ।

[ अथोपपीठलक्षणम् ]

कृत्वा तु तदधः कुर्यादुपपीठं प्रमाणतः ॥ ७८ ॥
त्रिभागेनाथ पीठस्य प्रणाळं मध्यतो भवेत् ।
तन्मानेन तु तद्दीर्घं स्वमानादग्रतः पुनः ॥ ७९ ॥
त्र्यंशमानेन विस्तीर्णं तस्यापि त्र्यंशमन्तरात् ।
खातव्यमग्रतो मूलात्तत्कुर्यान्मकराननम् ॥ ८० ॥

वराहकूर्मवक्त्रं वा सुश्लक्ष्णमथ केवलम् ।
उच्छ्रायं नवधा युंज्याच्चतुरश्रं तु मण्डलम् ॥ ८१ ॥
भागद्वयेन भूस्पर्शं कुर्याज्जान्वंघ्रिसंज्ञितम् ।
घण्टा(टा ? )कारं तदूर्ध्वे तु वृत्तं भागद्वयोन्नतम् ॥ ८२ ॥
वृत्तोपरि ततः कुर्यात्कण्ठभागद्वयोच्छ्रितम् ।
तं च भागेन भागेन परितः संप्रवेशयेत् ॥ ८३ ॥
अर्धभागेन निष्क्रान्तामेकांशेन तदूर्ध्वतः ।
कुर्याद्वै मेखलां विप्र भागेनार्धेन कुम्भवत् ॥ ८४ ॥
सार्धेनोपरि भागेन चतुरश्रां तु मेखलाम् ।
जलाधारः स विज्ञेयो द्विगुणश्चोर्ध्वविस्तृतम्(तः ? ) ॥ ८५ ॥
तत्र्यंशेन तुलापीठं निम्नखातेन खातयेत् ।
तदूर्ध्वे कमलं कुर्यान्नातिनिम्नं च नोन्नतम् ॥ ८६ ॥
देवतास्तत्र कर्तव्या दलस्थाः पूर्वचोदिताः ।
तासां वा पूजनार्थं तु केवलं विततच्छदम् ॥ ८७ ॥
पीठोच्छ्रायात्तु पादेन तदूर्ध्वे कमलोच्छ्रितम् ।
संभवे सति वै भिन्ना(न्न ? )मभिन्नां(न्नं ? ) सत्यसंभवे ॥ ८८ ॥

[ बिम्बपीठयोः सजातीयविजातीयद्रव्यत्वविकल्पः ]

सजातीयं हि यत्पीठं बिम्बस्य मुनिसत्तम ।
तदनन्तफलं विद्धि क्षेमारोग्यसुभिक्षदम् ॥ ८९ ॥
बिम्बेन सह यत्पीठं भिन्नं तच्छोभनं भवेत् ।
मोक्षदं कीर्तिदं चापि दद्यात्परिमितं फलम् ॥ ९० ॥
राजनं( तं ?) हेमबिम्बस्य पीठं भवति शोभनम् ।
ताम्रजं राजतस्योक्तमीरितं तस्य शैलजम् ॥ ९१ ॥
शैलजं शैलजस्योक्तं दारुजस्यापि दारुजम् ।
मृण्मयस्य च दारूक्तं शैलजं दारुजस्य च ॥ ९२ ॥

[ अथ प्रासादोपपीठः ]

चातुर्भागेन वै गर्भाद्भित्तिमानं विधीयते ।
गर्भमानात्सभित्तीकात्प्रासादस्य तु नारद ॥ ९३ ॥
पादहीनं पुरा पीठं वृत्तं वा चतुरश्रकम् ।
अर्धन्यूनं तु वै कुर्यात्संक्षिप्तं वा सुसम्मितम् ॥ ९४ ॥

सोपानपदवीयुक्तं चतुर्दिक्षु तथा मुने ।
एवमेव समं पीठं संपाद्यादौ विचिन्त्य वा ॥ ९५ ॥

[ अथ प्रासादलक्षणम् ]

प्रासादं च तथा कुर्यात्तस्य लक्षणमुच्यते ।

[ तत्र प्रासादपीठः ]

देवमानात्पुरा विप्र पीठमानाद्विचिन्तयेत् ॥ ९६ ॥
पीठं दैर्घ्येण वै कुर्यात्प्रासादस्य समन्ततः ।
गर्भद्विगुणविस्तीर्णं गर्भागारं त(य?)थाविधम् ॥ ९७ ॥
सिद्धविद्याधराकीर्णं देवद्विजनृपान्वितम् ।
उद्यानभूधराम्भोधिसंभवैः परिभूषितम् ॥ ९८ ॥
गजाश्वनृपसिह्माद्यैर्मृगयूथैश्च शोभितम् ।
तस्मिन्पीठोपरि शुभं प्रासादं परिकल्पयेत् ॥ ९९ ॥

[ प्रासादे भेदाः ]

चतुरश्रं चतुर्द्वारं वृत्तमष्टाश्रमेव वा ।
एकद्वारं विचित्रं वा यथाभिमतदिग्गतम् ॥ १०० ॥
प्रागुक्तात्क्षेत्रमानाद्वै तत्सार्धं च( द्वि ? ) गुणोन्नतम् ।

[ प्रासादपीठरचनाविधानम् ]

कृत्वा प्रासादपादार्धमंशकं भित्तिसम्मितम् ॥ १०१ ॥
दत्वा तस्मिंस्ततः कुर्यात्पीठोक्ता(क्तां ?)रचना( नां ?)मुने ।

[ प्रासादजङ्घा ]

गर्भोक्तोन्नतिमानेन जङ्घामुद्धृत्य यत्नतः ॥ १०२ ॥
स्तम्भाष्टकसमोपेतां प्रागुक्तरचनान्विताम् ।
नानापत्रलताकीर्णां पुष्पस्तबकभूषिताम् ॥ १०३ ॥

[ जङ्घोर्ध्वरचना ]

ततः शिष्टं तु शिखरं संविभज्य त्रिपञ्चधा ।
जङ्घोर्ध्वरचना कार्या एकांशेन महामते ॥ १०४ ॥
सद्गृहाणि विमानानि देवतायतनानि च ।
नानारूपाणि वै तत्र चतुर्दिक्षु प्रकल्पयेत् ॥ १०५ ॥

[ अथ भूमिकापञ्चकविधानम् ]

भागत्रिदशकेनाथ कुर्याद्वै भूमिकागणम् ।

सङ्कोचमुन्नतिं तासां रचनामवधारय ॥ १०६ ॥
एकीकृत्य पुरा सर्वभूमिकाभागसञ्चयम् ।
भु(भ?)ञ्जनवतिभिर्भागैस्समैरेकाधिकैर्मुने ॥ १०७ ॥
त्रयोदशभिरङ्गैस्तु कपोतोपरि भूमिका ।
एकापायेन तन्मानादूर्ध्वान्तं ह्रासयेत्क्रमात् ॥ १०८ ॥
भूमिर्वै मुनिशार्दूल यावदूर्ध्वं तु भूमिका ।
भवत्येकेन चांशेन अनेन विधिना भवेत् ॥ १०९ ॥
उच्छ्रायह्रासौ भूमीनां पार्श्वसङ्कोच उच्यते ।
कपोतपालेरूर्ध्वात्तु परितः शिखरं भवेत् ॥ ११० ॥
सप्तविंशतिभिर्भागैरूर्ध्वसूत्रैस्समानतः ।
कपोतपालेरर्वाक्तु भूमावेकांशमादितः ॥ १११ ॥
परितश्शोधयित्वा वै एकं चोपरि भूमिषु ।
एकैकमंशं संशोध्य यावदूर्ध्वं तु भूमिका ॥ ११२ ॥
पञ्चधा भूमिकाः कुर्यात्क्रमाद्वै विषमांशतः ।
एकस्मिन्मेखलास्तिस्रो भागे कार्यास्त्वधःस्थिते ॥ ११३ ॥
कपोतवद्द्वितीयेऽस्मिन्भागे तु रचना भवेत् ।
मेखलाद्वितयं कुर्यात्तृतीये च तदूर्ध्वतः ॥ ११४ ॥
चतुर्थं रचयेत्पश्चात्कम्बुभिः चक्रपङ्कजैः ।
एकैव मेखला कार्या ऊर्ध्वभागे तु पञ्चमे ॥ ११५ ॥
मेखलापत्रपुष्पाद्यै रचनीयाऽथ वा द्विज ।
सुश्लक्ष्णा केवला कार्या सुवृत्ता अश्रभूषिता ॥ ११६ ॥
एवं तु सर्वभूमीनां कृत्वा तु रचनाः शुभाः ।
ऊर्ध्वस्था ऊर्ध्वभूमौ तु भागः पञ्चदशो हि यः ॥ ११७ ॥

[ अथामलसारकविधानम् ]

तेनोष्णीषसमायुक्तं कुर्यादमलसारकम् ।
संविभज्य त्रिधा तद्वै उष्णीषं प्रथमेन वै ॥ ११८ ॥
भूमिकाग्राच्च निष्क्रान्तमीषच्छादनवद्द्विज ।
ऊर्ध्वात्तु भूमिकातुल्यः(ल्यं?)सुलक्ष्णं रचनोज्झितम् ॥ ११९ ॥
तदूर्ध्वं नवभिर्भागैः सुसमैः संविभज्य च ।

भागेन मध्यतः कण्ठं[1] विस्तीर्णं परिकल्पयेत् ॥ १२० ॥
परितश्चार्धभागेन कण्ठं[2] तु परिवर्त्तुलम् ।
कण्ठा[3]त्रितीयभागेन कुर्यात्तच्चापि चोन्नतम् ॥ १२१ ॥
तथाविधं तु कण्ठो[4]र्ध्वे कार्यं दण्डासनं शुभम् ।
शुक्तिसंपुटरूपैस्तु शृङ्गैरमलसारकम् (?) ॥ १२२ ॥

[ अमलसारकस्योर्ध्वमाणे चक्रविधानम् ]

युक्तं कुर्याद्द्विजश्रेष्ठ चक्रं चाथ तदूर्ध्वतः ।
ध्वजदण्डसमोपेतं द्वादशारं तु धातुजम् ॥ १२३ ॥
एवंविधानि सूक्ष्माणि प्रासादानि च नारद ।
कुर्याद्वै भूमिकोणेषु द्विपञ्चाशत्कसंख्यया ॥ १२४ ॥

[ अथ प्रासादद्वारविधानम् ]

द्वारं द्वाराणि वा चास्य कुर्यान्मानयुतानि च ।
सपीठात्प्रतिमानाच्च(मामानात्?)दशमांशेन चाधिकम् ॥ १२५ ॥
उच्छ्रितं कल्पयेद्द्वारं उच्छ्रायार्धेन विस्तृतम् ।
द्वारोच्छ्रायप्रमाणं तु विहीनेन तु कल्पयेत् ॥ १२६ ॥
द्वारशाखाद्वयं चैव तदूर्ध्वाध उदुंबरौ ।
नवशाखान्वितं कुर्याच्छाखायुग्ममुदुम्बरे ॥ १२७ ॥

[ द्वाराग्रे मण्टपविधानम् ]

द्वाराग्रे मण्टपश्चात्र कार्यो द्वारत्रयान्वितः ।
प्रासादक्षेत्रविस्तीर्णं चतुरश्रं समं ततः ॥ १२८ ॥
कपोतभूमिपर्यन्तमुन्नतस्तत्र मध्यतः ।
स्तम्भद्वादशकं दद्याद्भित्तिकाद्द्वादशान्वितम् ॥ १२९ ॥
प्रासादमानयुक्त्या तु भित्तयः स्युश्च नारद ।
एवं हि कौस्तुभं नाम कृत्वा प्रासादमुत्तमम् ॥ १३० ॥
तन्मध्ये संप्रतिष्ठाप्या मन्त्रमूर्तिः सनातना ।

[ प्रतिष्ठाकालः ]

शुक्लपक्षतिथौ श्रेष्ठे सुशुभे च महाग्रहे ॥ १३१ ॥
स्वानुकूले च नक्षत्रे शुद्धलग्ने स्थिते(रे?)तथा ।
आषाढकार्तिके चैत्रे यत्र यत्र स्थिते रवौ ॥ १३२ ॥

---

1 कर्णं Y 2 कर्णं Y 3 कर्णा Y 4 कर्णा Y

[ अधिवासमण्डप विधानम् ]

प्राग्वा ह्युदग्वा प्रासादात्त्रिशद्धस्तैर्द्विजायतम् ।
द्व्यधिकैर्मण्डपं कुर्यादन्य(?)द्वादशभिः करैः ॥ १३३ ॥

[ मण्डपमध्ये वेदिपञ्चककल्पनम् ]

स्याच्चतुर्यास्त्रायतं मध्ये वेदीनां तत्र पञ्चकम् ।
परितः पञ्चहस्तं च हस्ते हस्तेऽन्तरीकृतम् ॥ १३४ ॥
प्रदक्षिणगणोपेतं वितानाद्यैश्च भूषितम् ।

[ पञ्चाना वेदीनां विनियोगभेदः ]

वेद्यामुत्तरसंस्थायां कुर्यात्कुण्डं सलक्षणम् ॥ १३५ ॥
होमोपकरणं सर्वं तत्रोपरि निवेश्यच ।
ततोऽपरायां वेद्यां तु नेत्र उन्मील्य नारद ॥ १३६ ॥
मण्डलं मध्यमायां तु वेद्यामप्येकपङ्कजम् ।
प्रस्तार्य चित्रं शयनं चतुर्थ्यां मुनिसत्तम ॥ १३७ ॥
स्नानकर्म ततः कुर्यात्पञ्चमायां तु दक्षिणे ।

[ प्रतिष्ठाविधानोपक्रमः ]

एवं कृत्वा समानीय पीठं ब्रह्मशिलान्वितम् ॥ १३८ ॥
जपमानस्तु वाराहं मन्त्रमस्त्रं च देशिकः ।
भूमिष्ठे भद्रपीठे तु वेदिकायां निवेश्य च ॥ १३९ ॥
आचार्यान्साधकान्वाथ चतुरः परिकल्प्य च ।
वासुदेवादिभिर्मन्त्रैः कृतन्यासांस्तु पूजयेत् ॥ १४० ॥
वस्त्राद्यैः कर्मशालाश्च यायादस्त्रोदकेन तु ।
बिम्बमाकारशुध्यर्थं स्नापयित्वा समन्ततः ॥ १४१ ॥
उद्धृत्य मूर्तिपाद्यैस्तु शिल्पिभिर्वा रथस्थितम् ।
समानीय ततो यत्नाज्जपन्वै नारसिंहकम् ॥ १४२ ॥
वस्त्रेणाच्छाद्य संस्थाप्य पिण्डिकोपरि साधकः ।
चक्राभिमन्त्रितान्मूर्ध्नि दद्यात्सिद्धार्थकांस्ततः ॥ १४३ ॥
कृत्वा स्नानं समाचम्य द्वारं संपूज्य पूर्ववत् ।
संप्रविश्य च दिग्बन्धं कुर्यात्सिद्धार्थकाक्षतैः ॥ १४४ ॥

---

1 'चतुर्दशकराच्चैव यावत्त्रिंशत्करावधि' इति सात्वते प्रतिष्ठाविधिप्रकरणे २५-अ. श्लो. ५. दृश्यते, तत्समानार्थकतयाऽस्मिन् पाठ शोधनीय. प्रतिभाति ।

शिष्यस्य दीक्षाविधिना प्रागुक्तं च समापयेत् ।
बिम्बादिसर्वद्रव्याणामधिवासं यथास्थितम् ॥ १४५ ॥
स्वार्थतो वा परार्थेन साधकः सुसमाहितः ।
शिष्यवद्देवदेवस्य किं तु बिम्बं निवेदयेत् ॥ १४६ ॥
भगवन्भूतभव्येश त्वय्येवाराधनाय च ।
इदं बिम्बं करिष्यामि संस्तुत्य[1] रजनिक्षये ॥ १४७ ॥

[ शिल्पिदोषविनाशार्थस्नपनविधानम् ]

ततः स्नात्वा प्रभाते तु स्नापयेत्प्रतिमां मुने ।
प्रथमं कर्मशालोत्थ दोषविध्वंसनाय च ॥ १४८ ॥
[2]पञ्चविंश(ति?)त्तु कोष्ठानि कल्पयित्वा तु पूर्ववत् ।
नृसिंहमन्त्रजप्तेन केवलेनोदकेन च ॥ १४९ ॥
ततः प्रागादितो न्यस्य साधकः कलशाष्टकम् ।
पूर्वं क्षीराम्बुना पूर्णमपरं शुद्धवारिणा ॥ १५० ॥
तृतीयं रत्नतोयेन होमतोयेन चापरम् ।
गन्धसंमिश्रितं चान्यत्फलपुष्पोदकान्वितौ[3] ॥ १५१ ॥
शालीबीजाम्भसा पूर्णमष्टमं परिकीर्तितम् ।
सत्याद्यैः पञ्चभिर्मन्त्रैस्त्रिभिः सिंहादिकैः क्रमात् ॥ १५२ ॥
एकैकं सप्तधाऽऽमन्त्र्य प्रागादौ कलशं द्विज ।
एकैकस्मिन्विनिक्षिप्य दर्भमृद्गोमयांस्तिलान् ॥ १५३ ॥
ततस्तेषां बहिर्न्यस्य तथादिक्कलशाष्टकम् ।
धात्रीफलोदकं पूर्वे पथ्यातोयं ततो परे ॥ १५४ ॥
गळूचिक्वाथमन्यस्मिन्विभीतकजलं परे ।
कुमारिक्वाथितं तोयं व्याघ्रीसलिलमेव च ॥ १५५ ॥
नागरोदकमन्यस्मिन्तथाऽन्यस्मिन्मधूदकम् ।
एतानि चक्रमन्त्रेण हृदाद्येनाभिमन्त्र्य च ॥ १५६ ॥
पूर्वोक्तैरथ गायत्र्या कलशैः स्नापयेत्क्रमात् ।
द्वितीयावरणस्थैस्तु उपचारा हृदा मुने ॥ १५७ ॥
केवलेनोदकेनाथ अस्त्रजप्तेन सेचयेत् ।

1 संस्कृत्य A. 2 नृसिंहमन्त्रजप्तेनेत्यर्धस्यानन्तरं पञ्चविंशतीत्यस्य पाठः समुचितः प्रतिभाति ।
3 न्वितम् Y.

शिल्पिदोषविनाशार्थं स्नानमेतदुदाहृतम् ॥ १५८ ॥

[ अधिवासस्नपनार्थकलशस्थापनाविधानम् ]

विलिख्य तत्र चैशान्यां कमलं षोडशच्छदम् ।
कर्णिकोपरि संस्थाप्य कलशानां चतुष्टयम् ॥ १५९ ॥
पूर्वपत्रात्समारभ्य यावदीशानगोचरम् ।
षोडशान्यान्प्रतिष्ठाप्य तथैव कलशान्मुने ॥ १६० ॥
परिधाय ततो विप्र वाससी अधरोत्तरे ।

[ अथ नेत्रोन्मीलनविधानम् ]

द्वितीयवेद्यामूर्ध्वे तु शयनं परिकल्प्य च ॥ १६१ ॥
तत्र पूर्वशिरस्कं च बिम्बं प्रस्वापयेद्द्विज ।
स्वयं शलाकां सौवर्णीं ग्रहीत्वाऽस्त्राभिमन्त्रिताम् ॥ १६२ ॥
उल्लिखेत्साधको नेत्रे नेत्रमन्त्रेण नारद ।
स्नातः शुद्धाम्बरधरस्त्वाचार्येणावलोकितः ॥ १६३ ॥
अस्त्रमन्त्रितशस्त्रेण शिल्पी प्रकटतां नयेत् ।
पीठिका तु यदग्रे स्याद्ब्रह्मपाषाणसंयुता ॥ १६४ ॥
भद्रपीठे समारोप्य तथा बिम्बं तु सुस्थिरे ।
आधारादिक्रमोपेते सदा लब्धे सुपूजिते ॥ १६५ ॥
निरीक्षेत ततो बिम्बं प्रदीप्तं ज्ञानचक्षुषा ।
ताडयेदस्त्रपुष्पेण कवचेनावकुण्ठ्य च ॥ १६६ ॥

[ नेत्रोन्मीलनाङ्गभूतलघुस्नपनम् ]

हृदा वै पञ्चगव्येन ततश्चैव मृदम्बुना ।
सर्वौषध्युदकेनैव केवलेनाम्भसाऽथ वै ॥ १६७ ॥
संमृज्य वाससा चैव सुसितेनाहतेन च ।

[ कौतुकविसर्जनम् ]

कौतुकं मोचयेत्पश्चात् चक्रमन्त्रेण मन्त्रवित् ॥ १६८ ॥
दत्वा शिरसि चार्घ्यं तु पुष्पोदकसमन्वितम् ॥
संशोध्य धारणाभिस्तु ध्यात्वा तीक्ष्णांशुबिम्बवत् ॥ १६९ ॥
संहृत्य हृदि निक्षिप्य बहिस्थं स्नापयेत्ततः ।

[ अधिवासस्नपनविधानम् ]

पूजितैर्मन्त्रितैः शुद्धैः कलशैर्द्रव्यपूरितैः ॥ १७० ॥

चन्दनार्घ्यफलोपेतैर्वृक्षपल्लवशोभितैः ।
दर्भच्छदधरैः पट्टस्रग्गन्धपरिभूषितैः ॥ १७१ ॥
हृद्यैः षोडशभिर्विप्र तत्रैवेशानदिक्स्थितैः ।

[ स्नपनकलशेषु पूरणीयद्रव्याणि ]

प्रथमं पञ्चगव्येन केवलेन तु पूरयेत् ॥ १७२ ॥
गोमूत्रेण द्वितीयं तु तृतीयं गोमयाम्बुना ।
त्रेताग्निभूतिना विप्र च (तु ?)र्थं सोदकेन तु ॥ १७३ ॥
गजगोवृषभशृङ्गवल्मीकाख्य (कोत्थ?) मृदा परम् ।
शालिक्षेत्रान्नदीमध्यात्पद्मषण्डाच्च पर्वतात् ॥ १७४ ॥
मृद्भिः षष्ठं तु कलशं पूरणीयं ततो द्विज ।
सप्तमं सर्षपाम्भोभिः सर्वौषधिभिरष्टमम् ॥ १७५ ॥
क्षीरेण नवमं विद्धि दध्ना दशममुच्यते ।
घृतेन चैकादशकं मधुना द्वादशं द्विज ॥ १७६ ॥
सर्वैस्त्रयोदशं बीजैः फलैस्सर्वैश्चतुर्दशम् ।
समस्तधान्यैरपरं सर्वगन्धैस्तु षोडशम् ॥ १७७ ॥
हृदाऽभिमन्त्रितं कृत्वा एकैकं कलशं पुरा ।
स्नपयेन्मूलमन्त्रेण एकैकेन ततः क्रमात् ॥ १७८ ॥
उदकान्तरितेनैव सार्घ्येण मुनिसत्तम ।
मसूरमाषगोधूमचूर्णैरथ विमृज्य च ॥ १७९ ॥

[ बिम्बे मन्त्रन्यासविधानम् ]

प्रक्षाल्य चार्च्य शिरसा मूर्तिमन्त्रं न्यसेत्ततः ।
मूर्ध्नि वक्त्रेऽंसयोः कर्णे हृदि नाभौ तु पृष्ठतः ॥ १८० ॥
कटिमूले तथोर्वोश्च जानौ गुल्फे च पादयोः ।
शेषं मन्त्रगणं प्राग्वद्धस्तन्यासं विना न्यसेत् ॥ १८१ ॥

[ सकलीकरणादि विधानम् ]

सकलीकरणं कुर्यान्निष्कलीकरणं तथा ।
ततश्चोभयरूपात्मा(पत्वं?) सर्वं पूर्वोक्तवद्द्विज ॥ १८२ ॥

[ कर्णिकास्थितैः कलशैः स्नपनम् ]

सत्यादिमन्त्रैः संस्नाप्य कलशैः कर्णिकास्थितैः ।
पुष्पोदकेन प्रथमं गन्धस्वर्णोदकेन तु ॥ १८३ ॥

सर्वरत्नोदकेनाथ मार्जयेदथ वाससा ।

[ अथार्घ्यसमर्पणप्रभृतिविज्ञापनान्तमभ्यर्चनम् ]

मूलमन्त्राभिजप्तं तु दत्वाऽर्घ्यं मूर्ध्नि नारद ॥ १८४ ॥
समालभ्य ततो बिम्बं चन्दनाद्यैर्विलेपनैः ।
वाससी परिधायाथ अलङ्कृत्य यथाविधि ॥ १८५ ॥
किरीटनूपुराद्यैश्च दिव्यैराभरणैर्मुने ।
सुपुष्पधूपदीपादिमधुपर्केण चार्चयेत् ॥ १८६ ॥
नैवेद्यैर्विविधैश्चाथ मात्राताम्बूलदर्पणैः ।
मुद्रां बध्वा प्रणम्याथ विज्ञाप्य परमेश्वरम् ॥ १८७ ॥

[ अथ बिबसहिते पीठे समस्ताध्वमयत्वध्यानम् ]

विधिनाऽनेन संपूज्य पीठं ब्रह्मशिलान्वितम् ।
स्नापितं सह बिम्बेन यत्पुरा मुनिसत्तम ॥ १८८ ॥
समस्ताध्वमयीं ध्यायेत्पीठिका विग्रहान्विताम् ।

[ पीठे आधारशक्त्यादिध्यानम् ]

आधारशक्तिभूतान्नं स्मरेद्ब्रह्मशिलान्वितम् ॥ १८९ ॥

[ पीठस्याच्छादनम् ]

शिलां सपिण्डिकां पश्चादाच्छाद्य शुभवाससा ।

[ अथ नीराजनम् ]

निवेद्याचमनं चार्घ्यं कुर्यान्नीराजनं ततः ॥ १९० ॥

[ अथ रथयात्राविधानम् ]

पुण्याहजयघोषेण वेदध्वनियुतेन च ।
शङ्खवादित्रनिर्घोषपटहैर्गीतिभिस्सह ॥ १९१ ॥
सुशुभैरतुलैर्बिम्ब समारोप्याचलं यथा(रथे?) ।
ततः प्रदक्षणीकृत्य ग्रामं प्रासादपूर्वकम् ॥ १९२ ॥
तं रथं रथमार्गेण राजवेश्म प्रवेशयेत् ।
भक्त्याऽर्घ्यपाद्ये दत्वादौ द्वाराग्रस्थस्य वै ततः ॥ १९३ ॥

[ अथ शयनाधिवासविधानम् ]

श्वोभूतायां चतुर्थ्यां कुर्यात्स्वस्तिकमण्डलम् ।
रजसा वाऽथ कुसुमैः चतुर्वर्णैर्महोज्वलैः ॥ १९४ ॥

तत्र दर्भस्तरं दत्वालाजादीन्मध्यतः क्षिपेत् ।
सखट्वालिप्तकां(?) न्यस्य सर्वोपकरणान्विताम् ॥ १९५ ॥
पीठन्यासक्रमेणाथ मूर्ध्नो देशेऽथ नारद ।
पूर्वलक्षणसंयुक्तं पूजितं कलशं न्यसेत् ॥ १९६ ॥
तस्मिन्निद्रां तथा रात्रिमनन्तं पूजयेच्छ्रियम् ।
ततः पीठस्थितं देवमवतार्य शनैः शनैः ॥ १९७ ॥
शय्यायामुपरि न्यस्य प्राक्शिरो हृदयेन तु ।
वर्मणाऽऽच्छादनपटं दत्वा धूपादिवासितम् ॥ १९८ ॥
मूलेन शयनस्थस्य कुर्यादाप्यायनं ततः ।
वैभवं देवताचक्रं व्यूहाख्यं तदनन्तरम् ॥ १९९ ॥
सूक्ष्मं चापि मुनिश्रेष्ठ पादयोर्हृदि मूर्धनि ।
प्रपूज्य पुष्पधूपार्घ्यमुद्राभिः प्रणमेदथ ॥ २०० ॥

[ स्नपननेत्रोन्मीलनादितत्तत्क्रियाङ्गभूतहोमविधानम् ]

गत्वा कुण्डसमीपं तु व्यापारेष्वखिलेषु च ।
होमं कुर्याद्यथाशक्ति तिलाज्यैः शतपूर्वकम् ॥ २०१ ॥
स्मृत्वैकैकं तु वै कर्म कर्ता मन्त्रोदितेन च ।
हृन्मन्त्रेण समूलेन दत्वा पूर्णाहुतिं ततः ॥ २०२ ॥
आप्रभाताच्च तत्कालं कर्मणां पूरणाय च ।

[ शान्त्युदकेन बिम्बशिरसि प्रोक्षणम् ]

ततः शान्त्युदकं मूर्ध्नि होमान्ते स्वात्मनो(?)द्विज ॥ २०३ ॥
दत्वाऽथ बिम्बशिरसि मूलेनाष्टकमेव तत् ।

[ कर्ममन्त्राणां जपो बलिदान च ]

जपं च कर्ममन्त्राणां यथाशक्ति समाचरेत् ॥ २०४ ॥
भूतानां बलिदानं च कृत्वाऽस्त्रेण तु पूर्ववत् ।

[ चतुर्दिक्षु होमः ]

प्रासादस्य चतुर्दिक्षु कुण्डेषु सुशुभेषु च ॥ २०५ ॥
मण्डपस्याथवा कुर्याद्धोमं प्रागादि मूर्तिपः ।
स्वैस्वैर्मन्त्रैः सहस्रं तु शतं वाऽष्टाधिकं मुने ॥ २०६ ॥
†तैश्च शान्त्युदकं मूर्ध्नि बिम्बे वै दापयेद्गुरुः ।

† तैः—मूर्तिपैः

[ अथ ध्यानाधिवासनम् ]

अथाधिवासनं कुर्याद्विधिदृष्टेन कर्मणा ॥ २०७ ॥
ध्यानाख्यं निष्कलं शुद्धं येन सन्निहितः सदा ।
मन्त्रो ह्यर्चागतो विप्र स्यात्पटस्थोऽथवा पुनः ॥ २०८ ॥
न चोपसंहृतो यावद्गुरुणा तत्त्ववेदिना ।
प्राक्सर्वमुपसंहृत्य संहारक्रमयोगतः ॥ २०९ ॥
स्वरूपे(ऽ)विकृते शुद्धे गुरुरास्ते च नारद ।
स्वहृद्रश्मिमये पद्मे स्थितिं कृत्वा पुराऽत्मनः ॥ २१० ॥
एवमेवाविनाशां च निरस्तावयवामथ ।
बोधिविज्ञानदेहं च बिम्बं सम्भाव्य वै तथा ॥ २११ ॥
द्वौ सुषुम्नात्मकौ मार्गौ प्रज्वलद्भास्वराकृती ।
हृत्पद्मगोलकापूर्वमेकैकं तौ व्यवस्थितौ ॥ २१२ ॥
मणिप्रभेवचोद्बुद्धौ (र्ध्वाधो ? ) व्यापकत्वेन संस्थितौ ।
यथाऽत्मनि तथा देवे यथा देवे तथाऽत्मनि ॥ २१३ ॥
विभाव्य च ततो यायाद्दक्षिणेन पथा मुने ।
स्वदेहाद्धृदयं दे(दै?)वं वाममार्गेण संविशेत् ॥ २१४ ॥
यथात्मात्महृदये ह्यनुभूतो ह्यनूपमः ।
तदा तद्धृदयान्तस्थं स्मरेद्विज्ञानगोळकम् ॥ २१५ ॥
दृष्ट्वा स्वरश्मिखचितमानन्दापूरितं महत् ।
गमागमैकनिष्ठं तु शक्तौ ब्रह्मण्यथात्मनि ॥ २१६ ॥
देवदेहस्थितेनैव विज्ञानेन सहैकता ।
निष्पाद्या यावदस्पन्दकालमानं स्वदेहगम् ॥ २१७ ॥
पदं यदात्मना विप्र केवलेनानुभूयते ।
स्पन्दप्रवर्तितेनाथ कालेनैकात्मना द्विधा ॥ २१८ ॥
कृत्वाऽऽत्मनि तथा देवे निष्क्रामेदथ साधकः ।
देवदक्षिणमार्गेण विशेद्वामेन चात्मनः ॥ २१९ ॥
हृदयं भासुराकारं जन्मा(ज्ञाना ?)मृतपरिप्लुतम् ।
योगोऽयं मुनिशार्दूल बिम्बस्य द्रव्यजस्य च(?) ॥ २२० ॥
आपादान्मूर्धपर्यन्तं नाडीबृन्दस्य व्यञ्जकम्(कः ?) ।

[ ईश्वरसन्धानम् ]

येन सर्वेशता विप्र बिम्बस्यास्य प्रजायते ॥ २२१ ॥

तं योगमधुना वच्मि एकाग्रमवधारय ।
हृत्पुण्डरीकमध्यस्थः साधको वृत्तिवर्जितः ॥ २२२ ॥
स्वमन्त्रोच्चारयोगेन प्राग्वत्पदमनामयम् ।
यायादूर्ध्वं प्रवाहेण तावद्भूयः प्रवर्तते ॥ २२३ ॥
[1]अनिच्छन्नव्यथोऽक्षुब्धः स्वेच्छया क्षोभमेति च ।
यथाऽऽसन्नतरो दीपो ह्यकम्पः कम्पमेति च ॥ २२४ ॥
कोशकारो यथा तन्तुं गृहीत्वा संप्रवर्तते ।
विज्ञानशक्तिमालम्ब्य एवं भूयो हृदम्बुजम् ॥ २२५ ॥
स्वकीयं माययाऽऽचार्यः पूर्ववत्संविशेत्ततः ।
देवस्य हृदयाम्भोजं विलोक्य सह तेन वै ॥ २२६ ॥
भावयित्वाऽथ विज्ञानं बोधशक्त्या ततो व्रजेत् ।
तद्द्वादशान्तमागत्य ज्ञेयाख्यं नच नान्तरम् ॥ २२७ ॥
तत्पदात्पूर्वयुक्त्याऽथ दैवं हृदयमाश्रयेत् ।
ततो वै देवहृदयात्प्रविश्य हृदयं स्वकम् ॥ २२८ ॥
सह मार्गेण हृदयादेत्य स्वं नेत्रगोलकम् ।
एवं देवेऽनुसन्धाय निरीक्ष्य च परस्परम् ॥ २२९ ॥
देवालोकेन चात्मानमनुसिद्धिं च संस्मरेत् ।
आत्मालोकेन देवेशं भिन्नं सर्वत्र भावयेत् ॥ २३० ॥
एतदीश्वरसन्धानं भिन्नमेकान्तलक्षणम् ।
सर्वैश्वर्यप्रदं विद्धि सर्वदा प्रतिमासु वै ॥ २३१ ॥

[ शब्दानुसन्धानम् ]

अथशब्दानुसन्धानमनेकाद्भुतदर्शनम् ।
वक्ष्यामि चैव मन्त्रात्मा विम्बेनैकाङ्गतां व्रजेत् ॥ २३२ ॥
निष्कम्पबोधसामान्यरूपो भूत्वा पुनःस्वयम् ।
ये शब्दजनिता भावाः सूक्ष्मैः(क्ष्माः ?)सूक्ष्मतराखिलाः ॥२३३॥
[2]सामान्याबोधशब्देन तान्पश्येदेकतां गतान् ।
सङ्कल्पपूर्वपूर्वोत्थशब्दमात्रेण वर्जितान् ॥ २३४ ॥
सचाभिमुखमायाति संकल्पादुत्थितस्य च ।
शब्दरूपपदार्थस्य शब्दः स परमो द्विज ॥ २३५ ॥

1 अनिच्छन्नो C. L. 2 सामान्य A

सङ्कल्पपदवीरूढः स्फुरत्यन्तस्थितः स्फुटम् ।
पदार्थोपरि यः शब्दो मध्यमं विद्धि तं मुने ॥ २३६ ॥
हृत्पद्मकर्णिकासंस्थः प्रयत्नपदवीषु च ।
विज्ञानकरणोत्थासु यश्चाभिव्यक्तिमेति च ॥ २३७ ॥
वाच्यवाचकरूपेण स शब्दः स्थूल उच्यते ।
अतिस्थूलपरत्वेन स च वाग्विषये पुनः ॥ २३८ ॥
दृश्यादृश्येषु भावेषु अभिव्यक्तिं प्रयाति च ।
ततः स्थूलतरः शब्दो व्यवहारेऽखिलः स्थितः ॥ २३९ ॥
तस्माच्छब्दमयो देह इति चेतसि वै पुरा ।
निष्कम्पं साधकैः कृत्वा बिम्बं भाव्य तदात्मकम् ॥ २४० ॥
शब्दसंहारयोगेन स्वपिण्डं बिम्बसंयुतम् ।
निष्कम्पबोधशब्दात्मा यो गुरुः सम्पश्यति ॥ २४१ ॥
पूर्वोक्तक्रमयोगेन शब्दब्रह्मात्मना [1]तु तम् ।
पश्येत्परिणतं विप्र क्रमाद्बिम्बात्मना तु वै ॥ २४२ ॥
तेन संस्थापितं बिम्बं भुक्तिमुक्तिफलप्रदम् ।
एवं शब्दानुसन्धानं कृत्वा बिम्बस्य नारद ॥ २४३ ॥

[ अथ मन्त्रसन्धानम् ]

ततो वै मन्त्रसन्धानमारभेत प्रयत्नतः ।
अशब्दभेदं शब्दात्म नित्योदितमनाहतम् ॥ २४४ ॥
स्वहृत्पद्मस्थितं मन्त्रमुदितं नादसूत्रवत् ।
निस्सृतं मध्यमार्गेण बिम्बान्तः संविशन् स्मरेत् ॥ २४५ ॥
स्फुरत्तारकरूपं च मन्त्रैर्व्याप्तं तथाऽखिलैः ।
मन्त्रात्मानं जगन्नाथं बिम्बं तत्पद्ममध्यगम् ॥ २४६ ॥
संस्मरेत्सृष्टिसंहारौ कुर्वन्तं साधकोत्तमः ।
परः सएव बोद्धव्यः सुसूक्ष्मः स च निष्कलः ॥ २४७ ॥
सकलं निष्कलं चैव बोद्धव्यमुभयात्मकम् ।

[ भगवतो निद्रानुसन्धानप्रकारः ]

विज्ञानरजनीमध्ये ज्ञेयं निद्रारसान्वितम् ॥ २४८ ॥

1 कृतम् Y.

[ अथ प्रबोधप्रकारानुसन्धानम् ]

तत्त्वग्रामप्रभातेऽथ सम्भोगदिवसोदये ।
प्रबुद्धं संस्मरेद्देवमवतीर्णं परात्पदात् ॥ २४९ ॥

[ बिम्बस्य पीठेन सहैकीकृतत्वभावनम् ]

सर्वाध्वभोगभूपीठं तेनाक्रान्तं च भावयेत् ।
स्थितिराधारशक्तिर्वै विभोर्मन्त्रात्मकस्य च ॥ २५० ॥
तस्माद्ब्रह्मशिलापीठं बिम्बमेकीकृतं स्मरेत् ।

[ अथ मन्त्रन्यासपूर्वकमभ्यर्चनम् ]

ध्यानाधिवासयोगेन पूजयेत्तदनन्तरम् ॥ २५१ ॥
मन्त्रन्यासं पुरा कृत्वा त्रिधा पूर्वक्रमेण तु ।
हस्तन्यासं विना विप्र लययुक्ततयाऽखिलम् ॥ २५२ ॥
पाद्येनार्घ्येण पुष्पेण धूपेन च विलेपनैः ।
मधुपर्केण चान्नेन भक्ष्यैरुच्चावचैस्तथा ॥ २५३ ॥
पवित्रैः पानकै हृद्यैस्तै रसालादिभिः फलैः ।
मधुराम्बुरसैः सर्वैर्मूर्त्तैर्भोगैरनेकशः ॥ २५४ ॥
समस्तधातुभिर्बीजैर्वाद्यैर्गेयैस्तथाऽखिलैः ।
वसनच्छत्रवस्त्रैस्तु दर्पणाञ्जनवाहनैः ॥ २५५ ॥
उपानत्पादुकाभ्यां च चामरैः पादपीठकैः ।
प्रतिग्रहेण ताम्बूलैर्वासोभिर्ध्वजभूषणैः ॥ २५६ ॥
उद्यानवेश्मप्रासादरचनारचितैः शुभैः ।
शयनैरासनैः सर्वैः गृहोपकरणैस्तथा ॥ २५७ ॥
पताकाभिर्वितानैश्च शस्त्रैश्शास्त्रैस्तथाऽखिलैः ।
मात्रागोभिस्तथा ग्रामैः पशुभिः पक्षिभिस्तथा ॥ २५८ ॥
अन्तर्मानैरनन्तैश्च संपूर्णैरप्यकृत्रिमैः ।
बध्वा कामदुधां मुद्रां स्वमन्त्राभोगरूपिणीम् ॥ २५९ ॥
भोगमन्त्रेण चैकैकं गायत्र्या विनिवेद्य च ।
ततो जितंते स्तोतव्यो दत्वा धूपं मुहुर्मुहुः ॥ २६० ॥

[ पूर्वादिषु चतुर्षु दिक्षु पश्चिमाद्यभिमुखमवस्थितैर्ब्राह्मणैः क्रमादृगादिमन्त्रपठनम् ]

पूर्वे प्रत्यङ्मुखं कृत्वा आसनस्थं द्विजोत्तमम् ।

पुष्पमाल्यैस्तथोष्णीषैर्भूषणैस्त्वङ्गुलीयकैः ॥ २६१ ॥
ऋङ्मन्त्रान्पाठयेत्पूर्वं वीक्ष्यमाणमुदग्दिशम् ।
यजुर्बृन्दं वैष्णवं यत्पाठयेद्देशिकस्तु तत् ॥ २६२ ॥
गायेत्सामानि शुद्धानि सामज्ञः पश्चिमस्थितः ।
भक्तश्चोदक्स्थितो ब्रूयाद्दक्षिणस्थो(णास्यो?) ह्यथर्वणम् ॥२६३॥
स्वशाखोक्तांस्तथा मन्त्रान् [1]ज्ञातलिङ्गानशेषतः ।
एकैकं शिष्यवर्गेण वृतो याज्यक्रमेण तु ॥ २६४ ॥

[ आतायनुयायिभिः सह ईशादिविदिक्षु स्थितैः यत्यादिभिः एकायनीयशाखामन्त्रपठनम् ]

भगवद्भाविनो ये च [2]यतयः पाञ्चरात्रिकाः ।
चतुर्भिराशैर्विप्राद्यैर्युक्तांस्त्वीशदिशि न्यसेत् ॥ २६५ ॥
एकान्तिनस्तथाऽऽश्रैश्च(ऽनाशैः?)युक्तानाग्नेयदिग्गतान् ।
निवेश्य विप्र नैरृत्यां भक्तान्वैखानसैः(सान् ?)सह ॥ २६६ ॥
चतुर्भिरञ्जलीकैस्तु ततो वायव्यगोचरे ।
सारम्भिणस्सात्वतांश्च तत्काले भगवन्मयान् ॥ २६७ ॥
चत्वारोऽथ चतुर्दिक्षु योज्याश्च शिखिनो मुने ।
तेषां चैवानुयायित्वाच्चत्वारस्तु प्रवर्तिनः २६८ ॥
ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्च मुनिसत्तम ।
एकायनीयशाखोत्थान्मन्त्रान्परमपावनान् ॥ २६९ ॥
पाठयेच्च यतीनाम्नान् पूर्वान्वै पाञ्चरात्रिकान् ।
स्वानुष्ठानैः स्वकान्मन्त्रान्जपतः संशितव्रतान् ॥ २७० ॥

[ प्रागादिषु चतुर्षु दिक्षु गुर्वादीना स्थितिः ]

प्रागादौ चोन्तरान्तं च चत्वारो [3]गुरुपूर्वकाः ।
बहवः समयज्ञान्ताः द्वावेको वा स्वशक्तितः ॥ २७१ ॥
कृतन्यासास्तथा ध्यानमुद्रालङ्कृतपाणयः ।
स्ववाससि स्वकां मुद्रां छन्नां कुर्युः परस्परम् ॥ २७२ ॥
गीतनृत्तपराश्चान्ये अग्रतः स्तोत्रपाठकाः ।
वन्दिबृन्दयुता बाह्ये तथा दुन्दुभिवादिनः ॥ २७३ ॥
प्रतिकर्म ततः कुर्याद्धोमं शक्त्या तु साधकः ।

---

1 ज्ञान Y. 2 यत्यादीना लक्षणं द्वाविंशे पटले बोध्यम् 3 गुर्वादीना लक्षणामष्टादशे पटले प्रोक्तम्.

[ब्रह्मशिलापीठयोस्तत्त्वसंशोधनादि]

दीक्षाविधिक्रमेणैवं सकलां तत्त्वपद्धतिम् ॥ २७४ ॥
संशोध्य परभावस्थ आचार्यः सुसमाहितः ।
आधारशक्तिमन्त्रेण जुहुयाद्ब्रह्मसंज्ञिताम् ॥ २७५ ॥
सन्तर्प्य पीठिकां शक्त्याधारमन्त्रेण नारद ।
लयात्मरूपी भगवानाज्येन बहुना ततः ॥ २७६ ॥

[शान्त्युदकप्रोक्षणम्]

दद्याच्छान्त्युदकं मूर्ध्नि क्रमेणैव तु त्रिष्वपि ।
मूलमन्त्रेण विधिवद्धृदयाद्रेचितेन तु ॥ २७७ ॥
भगवन्तं कृते त्वेवं बिम्बस्थं श्रावयेद्गुरुः ।
मनसा सुविशुद्धेन इमं मन्त्रमुपस्थितम् ॥ २७८ ॥

[सान्निध्यप्रार्थनम्]

त्वया सन्निहितेनात्र भवितव्यमधोक्षज ।
मत्पूर्वाणां हि भक्तानां सिद्धिहेतोर्निरञ्जन ॥ २७९ ॥
ततः स भगवान्मन्त्रप्रबुद्धः [1]कमलेक्षणः ।

[उत्थापनसमुखीकरणादि]

बिम्बमुत्थाप्य तु ध्येय आचार्येण तु सम्मुखम् ॥ २८० ॥
कृत्वा तु पादपतनमष्टाङ्गेन तु साधकः ।

[लयभोगविधानेन यजनम्]

अत्यौत्सुक्याच्च यागस्थमवतार्य यजेत्ततः ॥ २८१ ॥
लयभोगात्मना सम्यक् पूर्वोक्तविधिना ततः ।

[वह्निस्थस्य पूजनम्]

तथा क्रमेण वह्निस्थं पूजयित्वा प्रतर्प्य च ॥ २८२ ॥

[शान्तिहोमविधानम्]

चतुर्द्रव्यमयं होमं ततः साधक आचरेत् ।
तत्त्वानां च समस्तानां विभवस्याखिलस्य च ॥ २८३ ॥
व्यूहस्य सूक्ष्मसंज्ञस्य मन्त्रस्यानेकरूपिणः ।
मन्त्रातिरिक्तशक्तेस्तु शक्तीशस्यायुतस्य च ॥ २८४ ॥
एकसन्धानकरणं विन्यस्यापि(स्तानां ?) ततो मुने ।

1 सकले A.

संहारस्थितियोगेन यथा तदवधारय ॥ २८५ ॥
बिम्बात्मनो विभोः स्पृष्ट्वा घृतेन चरणद्वयम् ।
तद्धृतं होमयेद्विप्र शतसंख्याष्टसंयुतम् ॥ २८६ ॥
अन्ते निक्षिप्य पादाभ्यां दर्भकूर्चेन चोपरि ।
तथैव दध्ना होमं च स्पृष्ट्वा नाभिं समाचरेत् ॥ २८७ ॥
क्षीरहोमं ततः कुर्याद्धृद्देशे स्पर्शने सति ।
अथोत्तमाङ्गं संस्पृश्य होमयेत्केवलं मधु ॥ २८८ ॥
एकीकृत्याथ वै सर्वं समभागेन नारद ।
सर्वगात्राणि संस्पृश्य होमयेत्तदनन्तरम् ॥ २८९ ॥
अनिरुद्धादिसत्यान्तैर्मन्त्रैः पादादि होमयेत् ।
दत्वा घृतेन वै पश्चात्पूर्णां मूलेन नारद ॥ २९० ॥

[ शान्तिहोमान्ते मध्वादिचतुर्द्रव्यैर्भोजनविधानं दक्षिणादान च ]

भोजयेन्मूर्त्तिमन्त्रेण मध्वाज्यघृतपायसैः ।
दक्षिणां च यथाशक्ति दद्याद्धेमादिकं ततः ॥ २९१ ॥

[ अथ लग्नकालप्रतीक्षाया कालापनोदनक्रमः ]

प्रतीक्षेल्लग्नकालं तु यावन्नायाति स द्विज ।
तावद्विनोदैर्होमैश्च हासैः पाठैश्च संक्षिपेत् ॥ २९२ ॥

[ अथ प्रतिष्ठासमये सन्निहिते प्रथम कर्तव्यः प्रार्थनाप्रकारः ]

प्राप्ते लग्नोदये विप्र सन्निरोध्य जगत्प्रभुम् ।
क्षणं क्षमस्व भगवन्सर्वज्ञ करुणास्पद ॥ २९३ ॥
निवेशयामि ते यावत्प्रासादे ब्रह्मपीठिकाम् ।

[ शयनस्थस्य भगवतो निद्रायमाणत्वेन स्मरणम् ]

स्मरेन्निद्रायमाणं तु शयनस्थं जगद्गुरुम् ॥ २९४ ॥

[ प्रासादप्रवेशविघ्नप्रशमनादिविधानम् ]

ततो मूर्तिधरैः सार्धं प्रासादं संव्रजेद्गुरुः ।
हन्याच्चक्रेण तत्रस्थान् विघ्नान्सास्त्रेण नारद ॥ २९५ ॥
प्रक्षाल्य च तमस्त्रेण स्मरेद्ब्रह्मशिलां ततः ।

[ ब्रह्मशिलास्थापनविधानम् ]

किञ्चित्पीठतलन्यूनां समां श्लक्ष्णां दृढां द्विज ॥ २९६ ॥

कृत्वा नवपदां पूर्वं पद्मं तस्यां पदे पदे ।
विलिख्य रेखया सम्यक् खनेत्सर्वेषु कर्णिकाम् ॥ २९७ ॥
सप्तधा तु ततः कुर्यात्प्रासादं सुसमैः पदैः ।
द्वारात्पश्चिमभित्यन्तमेकद्वारेण नारद ॥ २९८ ॥
द्वारदेशात्समारभ्य त्यक्त्वा भागचतुष्टयम् ।
द्वाभ्यां पदाभ्यां मध्ये तु न्यसेद्ब्रह्मशिलां मुने ॥ २९९ ॥
द्वारान्मध्यं न सन्त्याज्यं देवस्थापनकर्मणि ।
चतुर्द्वारे तु भवने मध्येऽथ विनिवेश्य च ॥ ३०० ॥
त्रिधा कृते चतुर्दिक्षु तत्र ब्रह्मशिलां दृढाम् ।
ब्रह्मशीलाक्षेपादौ सति गर्भे लभेर्चनम्( ? ) ३०१ ॥
ततो ब्रह्मशिलामानं बाहुव्यायामयोः खनेत् ।
तत्पूर्वं सूत्रमार्गेण सञ्चाल्योत्तरादिङ्नयेत् ॥ ३०२ ॥
श्वभ्रं तत्रापि मध्ये तु शुभं कुर्यात्षडङ्गुलम् ।
तस्मिंस्तु रत्नसंपूर्णं हेमजं वाऽथ ताम्रजम् ॥ ३०३ ॥
चतुरङ्गुलमात्रं तु कलशं कम्बुरूपिणम् ।
हृन्मन्त्रेण तु सम्मन्त्र्य गायत्र्या च निवेश्य च ॥ ३०४ ॥
सपिधानं तु तत्कृत्वा सुधालेपं तथोपरि ।
दत्वा ब्रह्मशिलां न्यस्येत्प्राङ्मन्त्रपरिभाविताम् ॥ ३०४ ॥
व्यापकत्वं समालम्ब्य स्वयमेव तदा गुरुः ।
तां शिलां व्यापिकां ध्यायेदाधाराधेयविग्रहाम् ॥ ३०५ ॥
तत्र सर्वोर्ध्वगं न्यासं मूलमन्त्रेण भावयेत् ।
एवं तत्सन्निधिं कृत्वा पश्चात्तत्रोपरि द्विज ॥ ३०६ ॥

[ रत्नादिन्यासः ]

न्यासं रत्नादिकं कुर्याद्यथा तदवधारय ।
हैममग्निं तथाऽनन्तं राजतं हेमजां धराम् ॥ ३०७ ॥
अष्टलोहमयं पद्मं मध्ये ब्रह्मशिलोपरि ।
प्राच्यादौ पद्मगर्भेषु क्रमादीशानगोचरम् ॥ ३०८ ॥
वज्रं च सूर्यकान्तं च इन्द्रनीलं तथैव च ।
महानीलं मुनिश्रेष्ठ मुक्ताफलमतः परम् ॥ ३०९ ॥
पुष्यरागमतश्चैव पद्मरागमतः परम् ।

ऐशान्ये न्यस्य वैडूर्यं मध्यतः स्फटिकं न्यसेत् ॥ ३१० ॥
प्रागादौ रजतं ताम्रं त्रपु वंगमतीरुतम् ।
लोहं तथायसं कांस्यं मध्ये हेम निवेश्य च ॥ ३११ ॥
तालं मनश्शिलां चापि रजनीं कुष्ठमेव च ।
स्रोतोऽञ्जनं तु दरदं सौराष्ट्रं हेमगैरिकम् ॥ ३१२ ॥
मध्ये तु राजपाषाणं पारदं चाथ सर्वतः ।
गोधूमांश्च यवान्वन्यान्मुद्गमाषांस्तथैव च ॥ ३१३ ॥
चणकान्मुनिशार्दूल कुलुत्थं च मसूरकम् ।
क्रमादष्टसु विन्यस्य मध्ये सिद्धार्थकांस्तिलान् ॥ ३१४ ॥
ह्रीबेरं रजनीं मांसीं सहदेवीं वचां ततः ।
विष्णुक्रान्तां वलां मोटां श्यामाकं नाङ्गपुष्पकम् ॥ ३१५ ॥
प्रागादौ मध्यपर्यन्तं विन्यसेन्मूलसन्ततिम् ।
अभावात्सर्ववस्तूनां हेमं सर्वत्र विन्यसेत् ॥ ३१६ ॥
तदभावात्तु तारं तु न्यसेन्मुक्ताफलानि च ।
घृतेन पयसा वाथ प्रापितेन पुरैव तु ॥ ३१७ ॥
प्रदद्यालेपनं विप्र सर्वगर्तेषु चैव हि ।
अहतं सुसितं पश्चात्तत्रोपरि दुकूलकम् ॥ ३१८ ॥

[ ब्रह्मशिलोपरि पीठन्यासविधानम् ]

ततः श्लक्ष्णं सुधालेपं दत्वा पीठं तु विन्यसेत् ।
सन्धाय पूर्ववत्तच्च शिलया सह नारद ॥ ३१९ ॥
पीठश्वभ्रेऽथ विन्यस्य सौवर्णं गरुडं मम(मुने) ।
क्षीरं दधि घृतं लाजं मधुपुष्पफलानि च ॥ ३२० ॥
सर्वगन्धानि विप्रेन्द्र सर्वौषधियुतानि च ।
भावयेत्पूर्ववत्पीठे धर्माद्यैरखिलैर्युतम् ॥ ३२१ ॥
चिदासनमयीं व्याप्तिं पुनस्तत्रोपरि न्यसेत् ।
हृदाऽथ विष्णुगायत्र्या एकैकमभिमन्त्र्य च ॥ ३२२ ॥
विन्यस्य कुर्याद्धवनं यस्मिन्यस्मिंस्तु कर्मणि ।
पीठन्यासविधिं यावत्ततः पूर्णाहुतिं जुहेत् ॥ ३२३ ॥

[ अथ प्रबोधनम् ]

प्राप्ते लग्नोदये विप्र शयनस्थं प्रबोधयेत् ।

मन्त्रात्मन् रूपमात्मीयमाग्नेयमुपसंहर ॥ ३२४ ॥
समाश्रयस्व सौम्यत्वं स्थित्यर्थं परमेश्वर ।
नमस्तेऽस्तु हृषीकेश उत्तिष्ठ परमेश्वर ॥ ३२५ ॥
मदनुग्रहहेत्वर्थं पीठभूमिं समाक्रम ।

[ देवस्य प्रासादे प्रवेशनम् ]

उद्धृत्य मूर्त्तिपैः सम्यक् पृष्ठे वा साधकोऽग्रतः ॥ ३२६ ॥
यायात्प्रक्षिपमाणस्तु साध्यार्थ(?)रत्नकं बहु ।
प्रदक्षिणं ततः कुर्यात्प्रासादस्य च नारद ॥ ३२७ ॥
शनैः प्रवेशयेद्देवं यथोर्ध्वं तु न संस्पृशेत् ।
पार्श्वद्वयं तु द्वारीयं

[ अथ पीठे देवस्य स्थापनम् ]

पीठमध्येऽथ विन्यसेत् ॥ ३२८ ॥
हृदा संपुटयोगेन मूलमन्त्रेण नारद ।
तत्र तं चाग्रतः स्थाप्य तत्पार्श्वे पृष्ठतोऽपि च ॥३२९ ॥
वज्रलेपेन गायत्र्या पीठस्यैकात्म्यतां नयेत् ।
तारकं पूर्वमुच्चार्य गुरुः प्रणतमस्तकः ॥ ३३० ॥

[ विज्ञापनम् ]

आराधितोऽसि भगवन्साधकानां हिताय च ।
त्वयाऽप्यनुग्रहार्थं च वस्तव्यमिह सर्वदा ॥ ३३१ ॥
त्वं तिष्ठसि प्रभो यत्र तत्र सिद्धिर्न दूरतः ।
भवेद्वै साधकेन्द्राणामित्युक्तं च पुरा त्वया ॥ ३३२ ॥
तस्माध्रुवं सदा तुष्टस्सानुकम्पापरो महान् ।
सदा ह्यनुग्रहपरस्तिष्ठस्वाचन्द्रतारकम् ॥ ३३३ ॥
एवमुक्त्वा ततो दद्यादर्घ्यं शिरसि पादयोः ।

[ अथ तत्त्वसंस्थापनम् ]

तत्त्वसंस्थापनं कुर्यात्प्रकृतिस्थापनादनु ॥ ३३४ ॥
विज्ञानानन्दकल्लोलज्ञेयभासां तथा रवैः ।
अनेकाह्लादजनितैराचारादिभिरा(राचाधाराच्छिरो ?)वधि॥३३५
पश्येन्मन्त्रमयं बिम्बमनेकाद्भुतविग्रहम् ।
एवं सर्वसमुत्पत्तिस्थाने संकल्पसिद्धिदम् ॥ ३३६ ॥

[ बिम्बस्य मन्त्रमयवृक्षत्वेन भावन ]

बिम्बं मन्त्रमयं वृक्षं प्रतिष्ठाप्यामलात्मना ।
तद्विज्ञानमयीं शाखां प्रवरायाति चो(मायतो?)न्नताम् ॥ ३३७ ॥
अनन्तगगनाक्रान्तां भावयेत्साधको द्विज ।
प्रभूतेन तु वै तस्मादनौपम्यामृतेन तु ॥ ३३८ ॥
मन्त्रबिम्बमयं वृक्षं सरसं भावयेत्सदा ।
यथा भौमेन तोयेन गगनोत्थेन नारद ॥ ३३९ ॥
मन्दारपुष्पविटपी तद्वदेव हि नान्यथा ।

[ बिबपीठादिषु न्यस्तस्य मन्त्रचक्रस्य लयभोगादिविधानेन पूजनविधानम् ]

ततः संपूजयेत्तत्र लययागेन चाखिलम् ॥ ३४० ॥
पीठस्थं भोगयागेन मन्त्रचक्रं यजेत्पुनः
पीठमूलं समाश्रित्य लोकेशान्सायुधान्यजेत् ॥ ३४१ ॥
पीठीयमन्त्रसङ्घं च विलोमेनाथ पूजयेत् ।
आधारशक्तिपर्यन्तं सृष्टिन्यासेन नारद ॥ ३४२ ॥

[ प्रतिष्ठादिवसे कर्तव्य प्रतिष्ठानन्तर स्नपनम् ]

पूजयित्वा ततो देवं स्नापयेत्

[ चतुःस्थानार्चनम् ]

मण्डले पुनः ।
प्रपूज्य पूर्वविधिना मण्डलानुक्रमेण तु ॥ ३४३ ॥
होमान्तं निखिलं कृत्वा दद्यात्पूर्णाहुतिं ततः ।

[ सुप्रतिष्ठितत्वाभिशंसनम् ]

स्वामीति च स्वनामान्तं रूढिशब्दं प्रकल्प्य च ॥ ३४४ ॥
ताल(र ?)शब्दयुतं सर्वैरेवमस्त्विति चोच्चरन् ।
पुष्पाक्षताञ्जलिं पूर्णं क्षिपमाणाश्च नारद ॥ ३४५ ॥
सर्वे वदेयुस्तत्रस्था भगवान्सुप्रतिष्ठितः ।

[ स्तुतिजयोद्घोषः ]

ततः सर्वैस्स भगवान्स्तोतव्यो जगतः पतिः ॥ ३४६ ॥
जितन्तेनोच्चया वाचा ततो जयजयेति च ।

जीवभूतेन वै तेन विभुना मन्त्रमूर्त्तिना ॥ ३४७ ॥
प्रतिष्ठितेन विप्रेन्द्र विद्धि सर्वं प्रतिष्ठितम् ।

[ प्रदक्षिणप्रणामौ ]

आमूलाद्ध्वजपर्यन्तं प्रासादे यः पुराकृतः ॥ ३४८ ॥
देवं प्रदक्षणीकृत्य अष्टाङ्गेन प्रणम्य च ।

[ बलिदानम् ]

ग्रहीत्वा चार्घ्यपात्रं तु यायाद्देवगृहाद्बहिः ॥ ३४९ ॥
प्रभूतानां च भूतानां बलिदानं समापयेत् ।
गृह्णन्तु भगवद्भक्ता भूताः प्रासादबाह्यगाः ॥ ३५० ॥
बलिं मन्त्रपवित्राश्च(त्रं च ?) तेषामनुचराश्च ये ।
सोदकेन तु पात्रेण दत्वा देवं प्रणम्य च ॥ ३५१ ॥

[ न्यूनाधिकशान्त्यर्थपूर्णाहुतिः ]

व्रजेद्यागगृहं पश्चात्पूर्णहोमं समाचरेत् ।
ऊनाधिकनिमित्तं च दद्यात्पूर्णाहुतिं ततः ॥ ३५२ ॥

[ अथ फलश्रुतिः ]

आदेवालयभूभागाद्ध्वजान्ताच्चापि मण्डपात् ।
सर्वोपकरणोपेतात्परमाणुषु नारद ॥ ३५३ ॥
यावती जायते सङ्ख्या तावत्कर्ता समावसेत् ।
भोगभुग्विष्णुलोके च यात्यन्ते परमं पदम् ॥ ३५४ ॥

[ प्रतिष्ठाकर्मणि वृतानां पूजनम् ]

ततः संपूज्य विधिवत्क्रमात्सर्वान्पुरोदितान् ।
गन्धार्घ्यपुष्पधूपेन माल्यैश्चैवानुलेपनैः ॥ ३५५ ॥
भोजनैर्विविधैश्शक्त्या दक्षिणाभिर्महामुने ।

[ अथ रात्रौ जागरणम् ]

रात्रौ जागरणं कुर्यान्नृत्तगीतैर्महोत्सवम् ॥ ३५६ ॥

[ प्रतिष्ठादिनाद्यावद्दिनचतुष्टय होमस्य कर्तव्यता ]

अव्युच्छिन्नोदितं होमं कुर्याद्दिनचतुष्टयम् ।
क्षणवारानुसारेण(?)बहिः कुण्डेषु चान्तरे ॥ ३५७ ॥
यथा दिनचतुष्कं तु धूमच्छेदो न तत्र वै ।

[ प्रतिष्ठादिनाच्चतुर्थदिने स्नपनादिविधानम् ]

चतुर्थेऽहनि संप्राप्ते संस्नाप्य परमेश्वरम् ॥ ३५८ ॥
प्रपूज्य पूर्वविधिना होमं कुर्याच्च शक्तितः ।
समग्रमन्त्रजालस्य दत्वा पूर्णाहुतिं ततः ॥ ३५९ ॥

[ अथ विष्वक्सेनपूजनम् ]

प्रागुक्तेन विधानेन प्रासादाभ्यन्तरे द्विज ।
ऐशान्यां चलपीठस्थं कुम्भे वा तोयपूरिते ॥ ३६० ॥
प्रपूज्य विष्वक्सेनं च पूजितव्याश्च मूर्तिपाः ।

[ शिष्टद्रव्यविनियोगप्रकारः ]

निर्वर्त्य सर्वसंभारं स्वगुरोर्विनिवेद्य च ॥ ३६१ ॥
स्वयं वा यः प्रतिष्ठानमाचार्यस्त्वाचरेद्द्विज ।
यत्नाद्विभजनीयं तन्मूर्त्तिपादिष्वनुक्रमात् ॥ ३६२ ॥

[ अवभृथः ]

सिद्धिमुक्त्योरभीप्सार्थं स्नायादवभृथेन च ।
इत्येतत्साधकस्योक्तं मन्त्राराधनकांक्षिणः ॥ ३६३ ॥
मन्त्रमूर्त्तिप्रतिष्ठानं यत्रस्थः सिद्धिमाप्नुयात् ।

[ चित्रप्रतिष्ठायां विशेषः ]

लेपभित्तिपटस्थानां स्नानाद्यं दर्पणे मुने ॥ ३६४ ॥
कुर्यान्निरवशेषं च पुष्पैः पूजां जलोज्झितैः ।

[ तत्र रत्नन्यासप्रतिषेधः ]

भित्तिगानां पटस्थानां बिम्बानां स्थापने द्विज ॥ ३६५ ॥
पीठब्रह्मशिलारत्नन्यासाख्यो न भवेद्विधिः ।

[ अन्यत्र धातुजादिषु तद्विधानम् ]

समानयोनिपीठानां धातुजानां तु नारद ॥ ३६६ ॥
चलानां लघुदेहानां बिम्बानां तु समाचरेत् ।
शैलमृद्दारुजानां तु एवमेवहि नान्यथा ॥ ३६७ ॥
निस्सारे सति वै पीठे अन्तस्सारे स्मरेद्धिया ।

[ अथ जीर्णोद्धारविधानम् तत्र जीर्णबिम्बस्याभ्यर्चनप्रतिषेधः ]

पटे कुड्ये परिक्षीणे भग्ने बिम्बे प्रमादतः ॥ ३६८ ॥

नार्चनं विहितं विप्र न सुशोभनमर्चनम् ।
तस्मात्कृत्वाऽर्चनं होमविशेषेण महामते ॥ ३६९ ॥
दानपूजा यतीनां च भगवत्तत्त्ववेदिनाम् ।
अवतारक्रमेणैव निखिलं हृदि चारभेत् ॥ ३७० ॥
आधारनिचयं न्यस्तं पूर्वोक्तविधिना मुने ।

[ धातुद्रव्योद्भवादन्यस्य भग्नबिम्बस्य जलाशये प्रक्षेपविधानम् ]

विष्वक्सेनस्य मन्त्रेण न्यासपूजामिव क्षिपेत् ॥ ३७१ ॥
जलाशये ह्यगाधे च धातुद्रव्योद्भवं विना ।
यस्मात्त..........बिम्बकर्मणि संस्कृतिम् ॥ ३७२ ॥
इत्येतदेकदेहानां बिम्बानां परिकीर्तितम् ।

[ पीठेन सहसन्धिगमितेषु बिंबेषु विशेषाः ]

अन्योन्यैकीकृतानां तु वज्रबन्धेन मे श्रुणु ॥ ३७३ ॥

[ तत्र किञ्चित्पीठभङ्गे निर्दोषत्वम् ]

किञ्चित्पीठविभङ्गे तु न दोष उपजायते ।

[ ईषदङ्गक्षते सन्धानम् ]

ईषदङ्गक्षते कुर्याद्बिम्बस्य स्वर्णवर्षणम् ॥ ३७४ ॥

[ पीठस्य भङ्गाधिक्ये तत्त्यागः ]

बृहद्भङ्गे समुत्थाप्य पीठाद्बिम्बं तु तं क्षिपेत् ।
कृत्वा चाभिनवं पीठं तत्र संस्थापयेत्पुनः ॥ ३७५ ॥

[ बिंबस्य भङ्गाधिक्ये तत्त्यागः ]

भग्ने बिम्बे शुभे पीठे सति बिम्बं नवं स्मृतम् ।

[ अविज्ञाते बीजन्यासे प्रणवेन विधानम् ]

बीजन्यासे ह्यविज्ञाते ब्रह्मतत्त्वं हि तद्गतम् ॥ ३७६ ॥
तत्त्ववित्प्रोद्धरेद्यत्नात्प्रणवेनात्र कर्मणि ।
सर्वज्ञानानि तत्स्थाने मन्त्राश्च प्रणवे स्थिताः ॥ ३७७ ॥
वाच्यवाचकसंबन्धस्ताभ्यां नान्यस्य वै यतः ।
अनेन विधिना विप्र कृतमायतनस्य यत् ॥ ३७८ ॥
तिष्ठत्यविषयं कालं नान्तर्धानं व्रजेत्पुनः ।

[ देशभङ्गाद्युपद्रवे अवधानेन संरक्ष्यता ]

देशभङ्गे तु मरणे दुर्भिक्षे चातिसङ्कटे ॥ ३७९ ॥
अनावृष्टिभयात्स्थानं निरीक्ष्यं यदि तद्भवेत् ।
प्राधान्यात्सन्निधानस्य नाशुद्धिं बिम्बमाप्नुयात् ॥ ३८० ॥
तस्करादिषु संस्पर्शात्तस्मिन्वेशाभिषेवणात् । (?)
यो यो मन्त्र(त्रि ?)वरो भक्तः साधकः कृतनिश्चयः ॥ ३८१ ॥
स सोऽत्र सिद्धिमचिरात्प्राप्नुयान्मानसेप्सिताम् ।

[ महोत्सवस्य कर्तव्यताविधानम् ]

सनक्षत्रं दिनं शुभ्रं सौम्यग्रहसमन्वितम् ॥ ३८२ ॥
देशकर्तृनृपादीनामनुकूलं च मन्त्रिणः ।
समाश्रित्य नृपः कुर्यात्कर्ता धन्योऽपि वैष्णवः ॥ ३८३ ॥
महानिमित्तमुद्दिश्य त्रीन्वारान्वत्सरं प्रति ।
स्वदेशविहितेनैव विधिना च महोत्सवम् ॥ ३८४ ॥
कर्मबिम्बं विमानस्थं हित्वा चक्रादिकं तु वा ।
नृत्तगीतस्वनैर्गीतैर्वाद्यदानपुरस्सरम् ॥ ३८५ ॥
बलिकर्मसमोपेतं भ्रमणीयं सुशान्तये ।
सर्वग्रामादिवीथीनां कीर्तिपुण्यफलाप्तये ॥ ३८६ ॥

इति श्रीपाञ्चरात्रे जयाख्यसंहितायां प्रतिष्ठाविधिर्नाम विंशः पटलः ।

---

अथ पवित्रविधानं नाम एकविंशः पटलः ॥

नारदः—

[ अनुष्ठानलोपे निष्कृतिप्रकारप्रश्नः ]

नियमस्थस्य भगवन्साधकस्याभियोगिनः ।
मोहाद्वा देशभङ्गाच्च ज्वरादिव्याधिपीडितात् ॥ १ ॥
अनुष्ठानमसम्पन्नं कदाचित्कर्मदोषतः ।
किं कार्यं तेन वै नाथ किंवा तस्य भवेद्वद ॥ २ ॥

श्रीभगवान्—

[ पवित्रारोपणस्य निष्कृतित्वविधानम् ]

क्रियया जपहोमेन कृतेन ..................।
क्रियाजपार्चनादीनां लुप्तानां साधकस्य च ॥ ३ ॥

पवित्रारोपणाद्विप्र ऋते नान्या भवेद्गतिः ।

नारदः—

[ प्रवित्रारोपणविधानप्रकारप्रश्नः ]

पवित्रारोपणं विष्णोः श्रोतुमिच्छामि तत्त्वतः ॥ ४ ॥
येनाहं कृतकृत्यः स्यां क्रियासक्तः सदैव हि ।

श्रीभगवान्—

[ पवित्रारोपणकालविधानम् ]

कर्कटस्थे द्विजादित्ये सिह्मकन्यातुलास्थिते ॥ ५ ॥
द्वादश्यां शुक्लपक्षे तु राकायां यत्र रोचते ।
जपहोमक्रियालोपशान्तये विधिपूर्वकम् ॥ ६
यागं पवित्रकोद्देशे कृत्वा पूर्वोदितश्च(तं च ?)यः ।

[ सूत्रादिद्रव्याणामधिवासकालविधानम् ]

दशम्यामधिवासं तु द्रव्याणां विधिपूर्वकम् ॥ ७ ॥
कुर्याच्चैव ससूत्राणां

[ सूत्राणां कौशेयत्वादिविकल्पः ]

तत्सूत्रं विद्धि पट्टजम् ।
कार्पासमथ वा क्षौमं श्लक्ष्णं दृढमकौशिमम् ॥ ८ ॥
तस्य शुद्धिं पुरा कृत्वा दहनाप्यायनेन च ।
पञ्चभूतात्मकं ध्यात्वा व्यापकत्वेन तत्पुनः ॥ ९ ॥

[ अथ सूत्रैः पवित्रनिर्माणविधानम् ]

पुरा तत्त्रिगुणं कृत्वा ततः कुर्याच्चतुर्गुणम् ।
समतां सर्वभावानां द्विजोत्पादयते यतः ॥ १० ॥
अतो न विषमैः कुर्यात्तन्तुभिः सूत्रमेव तत् ।
तेन सूत्रेण विप्रेन्द्र पवित्राण्यारभेत्ततः ॥ ११ ॥

[ मण्डले प्रतिमन्त्र समर्पणीयपवित्रसङ्ख्या ]

मूलमन्त्रादिसर्वस्य मन्त्रचक्रस्य नारद ।
त्राणि त्रीण्यथवा द्वे द्वे एकैकं सत्यसम्भवे ॥ १२ ॥
पवित्रकं तु प्रत्येकमनुकल्पेषु नारद ।

[ तेषां पवित्राणा व्यासमानग्रन्थिसङ्ख्यादिविधानम् ]

व्यासादर्धसमैः[1](?) कुर्याद्धाराकारं च तन्तुभिः ॥ १३ ॥
शतेनाष्टोत्तरेणाद्यं द्विगुणेन द्वितीयकम् ।
त्रिगुणेन तृतीयं तु व्यासमेवं तु तन्नयेत् ॥ १४ ॥
षट्त्रिंशद्ग्रन्थिकं चाद्यं द्वितीयं द्विगुणं स्मृतम् ।
तृतीयं त्रिगुणं विप्र

[ प्रवित्रग्रन्थीना रञ्जनादिविधानम् ]

ग्रन्थि वै कुङ्कुमेन तु ॥ १५ ॥
रञ्जयेच्चन्दनाद्येन यथा शोभानुरूपतः ।
ग्रन्थियुक्तेन तुल्येन मृदुना सुसितेन तु ॥ १६ ॥
पूरयेद्ग्रन्थयोर्मध्ये शङ्खाकारं यथा भवेत् ।
मण्डले मन्त्रमूर्तीनां पूजनार्थं तु नारद ॥ १७ ॥
व्यासमानं तु कथितं पवित्राणां च सर्वदा ।

[ बिम्बस्य शिरःप्रभृत्यवयवभेदेन पवित्राणामाकृतिभेदमानभेदविधानम् ]

प्रतिष्ठितस्य बिम्बस्य परादौ(?) धातुजस्य वा ॥ १८ ॥
मालाकृतिं च शिरसि यथेच्छग्रन्थिपूरकैः ।
द्वितीयमंसयोर्यावल्लम्बितं जानुमण्डले ॥ १९ ॥
मूर्ध्नः पादावधिर्यावत्त्रितीयमतिविस्तृतम् ।

[ पीठपवित्रप्रमाणविधानम् ]

पृथक्पीठस्य वै कुर्यात्स्वप्रमाणेन शोभनम् ॥ २० ॥

[ प्रतिसराणा व्यासानियमः ]

बिम्बप्रतिसराणां च व्यासश्चानियतः स्मृतः ।
सूत्रमानं च पूर्वोक्तं द्विगुणं सम्भवे सति ॥ २१ ॥
त्रिगुणं वा मुनिश्रेष्ठ आलभेत्पूरयेत्ततः ।
त्र्यङ्गुलान्तरिता देयास्सर्वेषां ग्रन्थयः समाः ॥ २२ ॥
सङ्ख्यानेन विना सम्यग्ज्ञातुलङ्गोपमाः शुभाः ।

[ कुम्भादिपवित्रनिर्माणप्रकारविधानम् ]

कुम्भोत्तमाभ्यामग्रे तु विद्यापीठस्य चैवहि ॥ २३ ॥

---

1 शमै. CL

स्रुक्स्रुवाभ्यां च घण्डायामक्षसूत्रे च नारद ।
अर्घ्यपात्रस्य चैककं सूत्रगर्भैर्यथेच्छया ॥ २४ ॥

[ गुर्वादीना षण्णा यथाक्रम पवित्रविधानप्रकारभेदः ]

गुर्वादिसमयज्ञानां यतीनां भावितात्मनाम् ।
कुटुम्बिनां क्रमात्कुर्यात्तन्तुभिर्मुनिसत्तम ॥ २५ ॥
चतुर्विंशतिभिश्चैव सूत्रैः षोडशभिस्तथा ।
ततो द्वादशभिर्ब्रह्मन्नष्टभिस्तदनन्तरम् ॥ २६ ॥
षड्भिस्त्रिभिस्ततो देया ग्रन्थयः सूत्रसङ्ख्यया ।
रञ्जयेत्पूर्वविधिना न कुर्याद्दर्भपूरणम् ॥ २७ ॥

[ पवित्राधिवासाख्यकर्मविधानम् ] (तत्र पवित्रासादन प्रकारः )

†संस्थाप्य वै दले भाण्डे पलाशपुटकेऽथवा ।
आच्छाद्य वाससा पश्चात्सुसितेनाहतेन तु ॥ २८ ॥
मध्ये तु यागद्रव्याणां तद्भाण्डं विनिवेश्य च ।

[ नित्यार्चनपूर्वकविशेषयजनविधानम् ]

स्नात्वा तु पूर्वविधिना कुर्यान्नित्यार्चनं हरेः ॥ २९ ॥
ततो विशेषयजनं दीक्षाख्येन क्रमेण तु ।
द्वारयागादिकं कृत्वा सर्वं कलशपूर्वकम् ॥ ३० ॥
संविधानं मुनिश्रेष्ठ हवनेन समन्वितम् ।
एवं हि पूजनं कृत्वा मन्त्रसन्तर्पणं पुरा ॥ ३१ ॥
मुद्राबन्धजपान्तं च दद्यात्पूर्णाहुतिं ततः ।
पुरा यस्मिन्दिने विप्र अतीते वत्सरे कृतः ॥ ३२ ॥
पवित्रकोपसंहारस्तद्दिनादादितः स्मरेत् ।
अर्घ्यपुष्पादिबलिभिः पूजयेत्सर्वमध्वरम् ॥ ३३ ॥
समाचम्य स्मरेत्सर्वं मन्त्रबृन्दं क्रमेण तु ।
पुरा प्रतिष्ठितं बिम्बं स्वयमन्य(कृ)तंतु वा ॥ ३४ ॥
निर्गत्य स्नापयेद्भक्त्या पूर्वोक्तविधिना ततः ।

---

† 'सस्थाप्य वै दले भाण्डे' इत्यादिना रात्रौ जागरणं कुर्यादित्यन्तोग्रन्थः ( २८–५० ) पवित्राधिवासाख्य कर्मविधानपरः । सात्त्वतसहिता व्याचक्षाणै प्राचीनैः पवित्रारोपणप्रकरणव्याख्यानावसरे 'दशम्येकादश्य. कर्तव्य पवित्राधिवासाख्यं कर्माह–'दशम्यामित्यारभ्य जागरेण निशां नयेत्' इत्यन्ते नेत्युक्तम् ।

पूजयित्वा विशेषेण दत्वाऽर्घ्यं पुनरेव च ॥ ३५ ॥
संस्मृत्य मूलमन्त्रं तु जपमुद्रासमन्वितम् ।
स्मरेत्कृताकृतं सर्वं पूर्ववद्रासरीयकम् ॥ ३६ ॥
कृत्वा प्रदक्षिणं यायाद्भूयो यागनिकेतनम् ।

[ चतुःस्थानार्चनविधानम् ]

स्थलस्थस्य च वै तत्र मन्त्रमूर्तेर्निवेद्य च ॥ ३७ ॥
ताम्बूलदन्तकाष्ठं च पञ्चगव्यपुरस्सरम् ।
अग्रतो देवदेवस्य सिह्ममूर्तौ तु दक्षिणे ॥ ३८ ॥
प्रदीपं च तथा धूपं दर्पणं हेमसूत्रकम् ।
पश्चिमे कापिले मूर्तौ हेमपात्रं तु नारद ॥ ३९ ॥
निवेद्य हविषा पूर्णं वाराहे चोत्तरे ततः ।
माल्यान्यथौषधीस्तोयं क्षीरं माक्षिकमेव च ॥ ४० ॥
फलानि शालिबीजानि त्वन्येषां दन्तधावनम् ।
ताम्बूलेन समायुक्तं ततः प्रतिसरं मुने ॥ ४१ ॥
निवेद्य पात्रतः कृत्वा कुम्भेऽग्नावेवमेव हि ।
बाह्यतः प्रतिमायां च सर्वं प्रतिसरान्तकम् ॥ ४२ ॥

[ आमन्त्रणम् ]

ततो निमन्त्रयेन्मन्त्रामिष्टं येन क्रमेण तु ।
आमन्त्रितोऽसि देवेश कृतो यागो यथाविधि ॥ ४३ ॥
तमाहरस्व भगवन्सर्वकर्मप्रपूरणम् ।
एवं संश्रावयित्वा तु मनुभेदस्थितं विभुम् ॥ ४४ ॥

[ सूत्रेण यागसदनवेष्टनम् ]

सर्वं सितेन सूत्रेण त्रिरावृत्तेन चान्तरा ।
सेषुणा यागसदनं वेष्टयेत्तदनन्तरम् ॥ ४५ ॥
पिधाय पात्रैः सुदृढैः पवित्राणि पृथक् पृथक् ।

[ पूर्वोक्तप्रकारेण प्रासादवेष्टनम् ]

तथैव वेष्टयेद्विप्र प्रासादं बाह्यतस्ततः ॥ ४६ ॥

[ भूतबलिः ]

सम्यग्भूतबलिं दद्यादस्त्रमन्त्रेण नारद ।

[ पञ्चगव्यप्राशनादिविधानम् ]

पञ्चगव्यं पुरा पीत्वा भुक्त्वा चान्नं चरुस्थितम् ॥ ४७ ॥

संचर्व्य दन्तकाष्ठं तु ताम्बूलं वा यथेच्छया ।
आचम्य न्यासपूर्वं तु सकळीकृत्य विग्रहम् ॥ ४८ ॥
स्थलस्थमुद्धरेन्मन्त्रं कलशे न्यस्य वाऽऽत्मनि ।

[ रात्रौ जागरणस्य मण्डलकर्मणः समापनस्य च विधानं ]

रात्रौ जागरणं कुर्यान्मण्डलं च समापयेत् ॥ ४९ ॥
रात्रिक्षये ततः स्नायाद्विभवेनाच्युतं यजेत् ।

[ पवित्रारोपणप्रकारविधानम्—तत्र नित्यार्चनपूर्वक चतुस्स्थानार्चनम् ]

नित्यकर्म पुरा कृत्वा कुंभस्थं तु यजेत्क्रमात् ॥ ५० ॥
मण्डलस्थं ततः पश्चादग्निस्थं तदनन्तरम् ।
स्नानपूर्वं तु बिम्बस्थं प्रासादाभ्यन्तरे द्विज ॥ ५१ ॥

[ प्रथम कलशस्थस्य पवित्रारोपणप्रकारः ]

प्रविश्य यागसदनं गत्वा कलशसन्निधिम् ।
पूजयित्वा समुद्घाट्य पात्रं प्रातिसरीयकम् ॥ ५२ ॥
अवलोक्य समादाय तस्मिन्ध्यायेद्द्विजाखिलम् ।
संवत्सरं तु यत्कर्म आप्रभातान्निशान्तकम् ॥ ५३ ॥
ध्यानोत्थं निष्कळं सम्यगपवर्गपदं तु यत् ।
संस्मृत्य निष्कळं मन्त्रं शुद्धोच्चारक्रमेण तु ॥ ५४ ॥
मन्त्रं सन्धाय तत्सूत्रं सूत्रे मन्त्रं तथैव च ।
एकीकृत्यात्मना सार्धं दद्याद्वै मन्त्रमूर्धनि ॥ ५५ ॥
समादाय परं सूत्रं तस्मिन्सकळनिष्कळम् ।
ज्ञानकर्मस्वरूपं तु कर्म ध्यायेच्च वत्सरम् ॥ ५६ ॥
स्मृत्वा चोभयरूपं तु मन्त्रं [1]कलशपूजितम् ।
पूर्ववच्चानुसन्धानं कृत्वा दद्यात्पवित्रकम् ॥ ५७ ॥
ततः प्रतिसरं विप्र तृतीयं च समाहरेत् ।
बाह्यं सांवत्सरं कर्म सकलं चाखिलं स्मरेत् ॥ ५८ ॥
पूजयन्तं स्वमात्मानमाधाराच्च परावधिम् ।
लयभोगाधिकाराख्यक्रमेण सकलात्मना ॥ ५९ ॥
सकलं मन्त्रनाथं तु लयभोगादिविग्रहम् ।
स्मृत्वा कृत्वा च सन्धानं दद्यात्प्रतिसरं ततः ॥ ६० ॥

---

1 सकल A.

अर्घ्यैः पुष्पैस्तथा माल्यैः धूपान्तैश्च विलेपनैः ।
अन्तरान्तरयोगेन पूजां कुर्यात्त्रिधा तथा ॥ ६१ ॥
मूलमन्त्रस्य विप्रेन्द्र गायत्र्योपह्वतात्मना ।
[1]दत्वैवं कलशस्थस्य पुत्रा विप्र पवित्रकम् ॥ ६२ ॥

[ मण्डलस्थस्य पवित्रारोपणम् ]

अनेन विधिना दद्यान्मण्डलस्थस्य वै पुरा ।
पवित्रकत्रयं शुभ्रं भोगस्थाने च नारद ॥ ६३ ॥
दद्यात्समस्तमन्त्राणां त्रीण्येकं वा यथेच्छया ।

[ अग्निस्थस्य ततो बिम्बस्थस्य च पवित्रारोपणम् ]

पूजयित्वा ततोऽग्निस्थं विभुं बिम्बगतं ततः ॥ ६४ ॥
कलशोक्तप्रयोगेण भूषणैस्तु त्रिभिस्त्रिभिः ।

[ अग्निस्थस्य समर्पणे विशेषनिरूपणम् ]

अग्नौ निवेदयेद्विप्र भूषणं न तु होमयेत् ॥ ६५ ॥
यस्मात्सन्यासमूर्ध्वे तु विहितं भूषणस्य च ।
नाहर्तुं युज्यते दग्धुं दोषमाहरणं विना ॥ ६६ ॥
पवित्रकावधेरूर्ध्वं साधकानां तु नारद ।

[ महामन्त्रजपविधानम् ]

पश्चात्पद्मासनं बध्वा देवस्याभिमुखस्थितः ॥ ६७ ॥
सकृज्जपं महामन्त्रं सर्वकर्मप्रवर्धनम् ।
नाशनं सामयानां च दोषाणां स्मरणादपि ॥ ६८ ॥

[ अथ विज्ञापनम् ]

ततः संश्रावयेद्देवं त्रिस्थानस्थं क्रमेण तु ।
कामतोऽकामतो वाऽपि न कृतं नियतार्चनम् ॥ ६९ ॥
केनचिद्विघ्नदोषेण मया यत्परमेश्वर ।
तेन मे मनसाऽतीव सन्तापो दहनात्मकः ॥ ७० ॥
यतः समयदोषेण बाधितोऽस्मि जनार्दन ।
त्वयोद्दिष्टं पुरा नाथ भक्तानां हितकाम्यया ॥ ७१ ॥
दोषविध्वंसकृच्छुद्धं पवित्रं तत्कृतं मया ।
प्रसीद मे कुरु त्राणं जहि कोपं हि लोपजम् ॥ ७२ ॥

1 गत्वै A.

निमज्जतो भवाम्भोधौ समयमच्युतस्य च ।
नमो नमस्ते मन्त्रात्मन् प्रसीद परमेश्वर ॥ ७३ ॥
पाहि पाहि त्रिलोकेश केशवार्त्तिविनाशन ।
त्वत्प्रसादाच्च मे मास्तु दोषः समयसंज्ञि(श्रि?)तः ॥ ७४ ॥
अद्यास्तु कर्मसंपत्तिर्नित्यनैमित्तिकी प्रभो ।
श्रुत्वैवमादरात्तस्य संसारार्तस्य मन्त्रराट् ॥ ७५ ॥
पूर्णभावं नयच्छीघ्रं हन्ति दोषांश्च सामयान् ।

[ अथ गुरोः पूजनम् ]

एवं कृत्वा ततो भक्त्या पूजयेद्विष्णुवद्गुरुम् ॥ ७६ ॥
दक्षिणाभिर्यथाशक्ति विविधैः पानभोजनैः ।
आप्ता नियन्त्रिताश्चान्ये भगवद्भाविनस्तु वै ॥ ७७ ॥

[ पवित्रोत्सवान्ते कृतस्य यत्यादिभ्यो दानस्य फलाधिक्यकथनम् ]

पञ्च वैखानसान्ताश्च यतिपूर्वाश्च नारद ।
आप्तादिपञ्चभेदेन चत्वारो ब्राह्मणादयः ॥ ७८ ॥
पञ्च योगरताद्यास्तु शास्त्रसन्धारणान्तिमाः ।
असंख्यं यतये दत्तं वैष्णवाय प्रकीर्तितम् ॥ ७९ ॥
विद्धि कोटिगुणञ्चैव दत्तमेकान्तिने तु यत् ।
तस्माद्दशशतांशोनं दत्तं यच्छिखिने तु वै ॥ ८० ॥
सात्वताय शतांशोनं दशांशोनं तु नारद ।
विद्धि वैखानसे दत्तं दानं प्रतिसरावधौ ॥ ८१ ॥
चतुर्विधे द्विजाप्ते तु एवमेवमुदाहृतम् ।
आकोटेर्दानह्रासस्तु अनाप्तानामतः शृणु ॥ ८२ ॥
अनाप्ते लक्षगुणितं ब्राह्मणे परिकीर्तितम् ।
एवमेव तु दत्तं च बुहुशो बहुभोजनन् ॥ ८३ ॥
यो निरस्यति विप्रेन्द्र साधको [1]वाऽप्यसाधकः ।
तस्याशु भवते सिद्धिरिह लोके परत्र च (?) ॥ ८४ ॥
इत्येतत्साधकानां च क्रियासंपूरणं मया ।
कथितं मुनिशार्दूल तत्सहस्रशतांशतः ॥ ८५ ॥
शतांशोनं तदंशेन दत्तमेव नृपादितः ।

1 बाह्य A.

लक्षार्धत्रिगुणं दानं ततस्तामेति नारद ॥ ८६ ॥
अङ्गुलीयकविप्राय यद्दत्तं विधिपूर्वकम् ।
सहस्रांशशतांशेन.. ........ह्रसेच्च तत् ॥ ८७ ॥
नृपादिशूद्रपर्यन्तं वक्ष्ये त्वारम्भिणामतः ।
लक्षपादगुणं दानं विप्रायारंभिणे मतम् ॥ ८८ ॥
सहस्रांशादशांशोनं विद्धि क्षत्रादिपूर्वकम् ।
अथायुतगुणं दानं ब्राह्मणे संप्रवर्तिनि ॥ ८९ ॥
नृपे सहस्रगुणितं वाऽपि तच्छतसंज्ञकम् ।
अतो दशगुणं विद्धि योगज्ञादिष्वतः शृणु ॥ ९० ॥
कोटिकोटिगुणं दानं भगवद्योगवेदिनि ।
विप्रे वेदविदां श्रेष्ठे तत्सहस्रांशवर्जितम् ॥ ९१ ॥
क्षत्रिये वैश्यजातौ तु शतांशोनं तदेव तु ।
दशांशहीनं तच्छूद्रे भगवद्योगसेविनि ॥ ९२ ॥
कोटिलक्षगुणं चैव जपनिष्ठे द्विजोत्तमे ।
सहस्रांशशतांशोनं दशांशोनं नृपादिषु ॥ ९३ ॥
कोटिसाहस्रगुणितं ब्राह्मणे विष्णुतापसे ।
प्राग्वदूनं सहस्रादेस्तत्क्षत्रादिषु नारद ॥ ९४ ॥
नारायणागमज्ञे तु दानं द्विजवरे तु यत् ।
दत्तं काले पवित्रे तु कोटीशतगुणं स्मृतम् ॥ ९५ ॥
राजन्यवैश्यशूद्राणां पूर्ववत्कल्पयेच्च तत् ।
धत्ता(धृता?)गमानां यो विप्रो वैष्णवानां च भक्तितः ॥९६॥
कोटीदशगुणं दानं तद्दत्तं भवतीति च ।
क्षत्रादिष्वेव विहितं तत्सहस्रादितो भवेत् ॥ ९७ ॥

[ वैष्णवमात्रस्य पूज्यता ]

यः कश्चिद्वैष्णवस्तस्मिन्काले तत्रावतिष्ठते ।
स पूजनीयो विप्रेन्द्र यथाशक्ति च भक्तितः ॥ ९८ ॥
स्वभाववैष्णवो जन्तुरास्तां तावन्महामुने ।

[ वैष्णवलिङ्गधारिमात्रस्य पूज्यता ]

गृहीत्वा वैष्णवं लिङ्गं भक्तो यः कश्चिदागतः ॥ ९९ ॥
अर्थ्यहं वैष्णवो देहि ब्रूते ह्येवमभीक्ष्णशः ।

सोऽपि यत्नाद्यथाशक्ति पूज्योऽज्ञातोऽपि नारद ॥ १०० ॥

[ आरोपितानां पवित्राणां यावदपनयनकाल तथैव मण्डलादौ सस्थाप्यता ]

एकरात्रं त्रिरात्रं वा सप्तरात्रं तु वा द्विज ।
पवित्रकं स्थापनीयं मण्डलेऽर्चागतं तथा ॥ १०१ ॥
अथवाऽर्चागतं विप्र तद्वत्संस्थाप्य भूषणम् ।
यावदेकादशी शुक्ला संप्राप्ता कार्तिकस्य तु ॥ १०२ ॥

[ पुष्पमात्रस्य प्रत्यहमपनीयता ]

पुष्पपूजापनयनं कृत्वा वै प्रत्यहं पुनः ।
पवित्रकं योजनीयं संप्राप्ते कालवासरे ॥ १०३ ॥

[ पवित्रविसर्जनप्रकारविधानम् ]

अपनीय गुरोर्भक्त्या निवेद्य ब्राह्मणस्य वा ।
पञ्चकालप्रसक्तस्य तदभावात्तु नारद ॥ १०४ ॥
षट्कर्मसंप्रसक्तस्य विष्णुभक्तस्य तत्त्वतः ।
विशेषयागं होमान्तं कृत्वाऽऽचार्यप्रपूजनम् ॥ १०५ ॥
वैष्णवाः पूर्ववत्पूज्या दद्यादाच्छादनं ततः ।
तेषां चैव यथाशक्ति अभावादथ नारद ॥ १०६ ॥
युग्ममेकं तु वा वस्त्रमेकस्यावश्यमेव हि ।
उपवीतानि चान्येषां सोत्तरीयाणि योजयेत् ॥ १०७ ॥

[ यतीना सन्निधौ प्रार्थना ]

प्रार्थना च ततः कार्या यतीनां संयतात्मनाम् ।
युष्मत्प्रसादसामर्थ्यान्ममास्तु परिपूर्णता ॥ १०८ ॥
क्रियाङ्गानां च सर्वेषां मा मेऽस्तु समयच्युतिः ।

[ अथ यत्यादीना प्रतिवचनम् ]

एवमस्त्विति वक्तव्यं सर्वैस्तालसमन्वितम् ॥ १०९ ॥
सांवत्सरः क(त?)दाऽकृत्यदोषः समयपूर्वकः ।
नाशमायाति वै क्षिप्रं पवित्रारोहणान्मुने ॥ ११० ॥

[ पवित्रशब्दनिर्वचनम् ]

पाति यस्मात्सदोषं हि पतनात्परिरक्षति ।
विशेषेण द्विजां स्त्राति पूर्णं कर्म करोति च ॥ १११ ॥

साधके च क्रियाहीने तस्मादुक्तो मया महान् ।
याग एष पवित्राख्य उक्तलक्षणलक्षितः ॥ ११२ ॥

[ पवित्रकर्मविधानानन्तर पालनीया विशेषनियमाः ]

कृते पवित्रके विप्र भक्तैर्मन्त्रक्रियापरैः ।
कश्चिद्विशेषनियमः पालनीयः प्रयत्नतः ॥ ११३ ॥
यावदेकादशी शुक्ला कार्तिकस्यातिपुण्यदा ।
भूयस्तदादि विप्रेन्द्र प्रयत्नाद्दिनपञ्चकम् ॥ ११४ ॥
कुर्याद्व्रतपरं किञ्चिद्दानपूजनपूर्वकम् ।
समस्तदोषशमनं समस्तसुखवर्धनम् ॥ ११५ ॥
मधुमांसमसत्यं च मैथुनं मृगयान्वितम् ।
तैलाभ्यङ्गं च मत्स्यं च बहुशो बहुभोजनम् ॥ ११६ ॥
यो निरस्यति विप्रेन्द्र साधको वाऽप्यसाधकः ।
तथाऽस्य भवते सिद्धिरिह लोके परत्र च ॥ ११७ ॥
इत्येतत्साधकानां च क्रियासंपूरणं मया ।
कथितं मुनिशार्दूल पवित्रं पापनाशनम् ॥ ११८ ॥
मन्त्राराधनसक्तानामचिरात्सिद्धिदं महत् ।
मन्त्रतन्त्रविहीनानां भक्तानां भुवनत्रये ॥ ११९ ॥
पवित्रस्य फलं शश्वत्प्रददाति समापनात् ।

नारदः—

कोऽसौ मन्त्रो जगत्कर्तर्यो जप्तव्यः क्रियापरैः ॥ १२० ॥
पूजावसानकाले तु यथावत्कथयस्व मे ।

श्रीभगवान्—

[ पवित्रकर्मावसाने जप्तव्यतया पूर्वमुक्तो महामन्त्रः ]

ओङ्कारत्रितयं पूर्वं प्रथमं केवलस्ततः ॥ १२१ ॥
पवित्र ऋतधामाऽथ परा प्रकृतिरेव च ।
ताललक्ष्मा तदन्ते तु बुद्धिरानन्दचिह्निता ॥ १२२ ॥
आकारेणाङ्कितं दद्याद्रेफं च तदनन्तरम् ।
केवलोऽथ यकारश्च शास्ता तद्वद्द्विजोत्तम ॥ १२३ ॥
त्वां प्रपन्नोऽस्मि तदनु रक्षरक्ष पदान्वितम् ।
ततो मकारमादाय व्योमेशानन्दभूषितम् ॥ १२४ ॥

[1]स(श?)र्ववज्रद्वयश्चान्ते दमनो विक्रमीयुतः ।
नृसिंहः सिद्धिदश्चान्तो यकारद्वयभूषितः ॥ १२५ ॥
हलायुधोऽप्यकारस्थो विसर्गेण विभूषितः ।
ततः [2]सकारमादाय वरुणस्थस्ततोऽनलः ॥ १२६ ॥
[3]सकारश्च मकारश्च सुसूक्ष्मस्तदनन्तरम् ।
ओंयुक्तो विबुधाद्यस्तु बकारो विग्रहान्वितः ॥ १२७ ॥
गकारोऽथ यकारस्थ आकारेण विभूषितः ।
तृप्तिं च वरुणारूढमुद्धरेत्कालपावकम् ॥ १२८ ॥
सकारः केवलश्चाथ पग संवित्ततोऽनलः ।
गकारोऽथ सकारश्च पारूढश्चानलः स्मृतः ॥ १२९ ॥
एकारेणाङ्कितश्चैव शान्तोऽथ वरुणः स्थितः ।
रेफं च केवलं दद्यात्सर्वशक्तपदं ततः ॥ १३० ॥
सर्वाधारपदोपेतं सर्वान्तर्बहिरेव च ।
स्थितेवर्णद्वयं दद्यात्सर्ववर्णद्वयं ततः ॥ १३१ ॥
परां प्रकृतिमादाय रेफं च तदधो न्यसेत् ।
इष्टेनाप्यङ्कयेत्तच्च यकारं चोद्धरेत्ततः ॥ १३२ ॥
आकारेण समायुक्तमेकदंष्ट्रमथोद्धरेत् ।
[4]गकारं तदधो दद्यादाकारं च ततो मुने ॥ १३३ ॥
इकारेणाङ्कितं दद्यान्नरं तदनु नारद ।
द्विधा मकारं तदनु पूरयेति पदं ततः ॥ १३४ ॥
सर्वाणि पदमादाय [5]ङकारस्तदनन्तरम् ।
उत्तमं तदधो न्यस्याद्विधा नारायणं ततः ॥ १३५ ॥
आकारेणाङ्कयेत्पूर्वमिकारेण परं द्विज ।
द्विधा मकारस्तदनु प्रकाशय पदं द्विधा ॥ १३६ ॥
सर्वाणि करणानीति पदं कालं ततो द्विधा ।
स्वात्मलाभे पदं चाथ नियोजय पदं द्विधा ॥ १३७ ॥
भगवंस्त्र्यक्षरमिति त्र्यक्षरं भवहेति च ।
भूतात्मानमथादाय तदधस्थं गदाधरम् ॥ १३८ ॥

---

1 नृद्वय A. 2 मकार CL. 3 सतार Y. 4 दकारं A. 5 दकार A

गोपनेनाङ्कितं मूर्ध्नो रेफं वै योजयेत्ततः ।
वैराजोपरिसंस्थं च ओंकारेणाङ्कयेच्च तम् ॥ १३९ ॥
व्योमेशाढ्यो हकारश्च शङ्खश्चानन्दभूषितः ।
आदाय चञ्चलं विप्र ईश्वरं तदधो न्यसेत् ॥ १४० ॥
आनन्देनाङ्कितं कुर्याज्जिते पाणिपदं ततः ।
चतुरर्णं तु संयोज्य मकारं च ततो न्यसेत् ॥ १४१ ॥
व्योमेशाकारसंभिन्नं सत्यं तदनु चोद्धरेत् ।
तदन्तेऽभयदं न्यस्य गकारं तदनन्तरम् ॥ १४२ ॥
व्योमेशभिन्नो वैकुण्ठो वाराहस्त्विनभूषितः ।
शार्ङ्गभृद्वरुणारूढो न्यस्यो व्योमेशचिह्नितः ॥ १४३ ॥
संस्कारोऽथ(?)यकारश्च ल्क्षिप्तोऽस्मि त्र्यक्षरं पदम् ।
सकारोऽथ मकारश्च यकारस्तदनन्तरम् ॥ १४४ ॥
ततो धरेशमादाय ओंकारेण विभूषितम् ।
पकारश्च वकारश्च लक्षणं केवलास्त्वमी ॥ १४५ ॥
विश्वभावकमादाय कमलोपरिसंस्थितम् ।
शिरसाऽविग्रहाख्येन वर्णेन परिभूषितम् ॥ १४६ ॥
नकारं केवलं चाथ पदं निर्मलमित्यथ ।
मापादय पदं दद्यात्सकलेति पदं द्विज ॥ १४७ ॥
उद्दामस्थं गकारं तु लकारं केवलं ततः ।
आदिदेवान्वितः पन्था रामोपेतश्च माधवः ॥ १४८ ॥
पकारश्च तकारश्च यकारोऽविग्रहान्वितः ।
द्विधा जहि पदं देयं कालं त्र्यश्रेन चाङ्कितम् ॥ १४९ ॥
चतुर्गतिसमारूढं वैराजमथ योजयेत् ।
आनन्दाख्येन चाक्रान्तं न्यसेद्रेफमतो द्विज ॥ १५० ॥
वैराजोपरिसंस्थं तु [1]सोमेशाख्यं स्थितं पुनः ।
पदं तु मानसं तेदं(दोषं?) दद्यात्पञ्चाक्षरं द्विज ॥ १५१ ॥
वाचिकांस्त्र्यक्षरं चातो दुरुक्तान् कायिकांस्ततः ।
षडक्षरं कुवृत्तीन्वै त्र्यक्षरं तदनु न्यसेत् ॥ १५२ ॥

---

1 सोम शङ्ख A.

परमेश्वरशब्दं तु दद्यात्पञ्चाक्षरं मुने ।
ततः परममूर्तौ(र्तें?)च प्रसीद पदमेव च ॥ १५३ ॥
मे प्रपन्नस्य च पदं न्यसेत्पञ्चाक्षरं मुने ।
आदेशाच्छलविध्वंसी इकारेण विभूषितः ॥ १५४ ॥
रामोपेतं नरं दद्यान्माधवं तदधो न्यसेत् ।
भिन्धि संसारमिति च दद्यात्पञ्चाक्षरं मुने ॥ १५५ ॥
[1]दकारं भुवनारूढं विसर्गेण समन्वितम् ।
विश्वभावनमादाय केवलं च तदन्तगम् ॥ १५६ ॥
उद्धरेद्द्विजशार्दूल शाश्वतं तदनन्तरम् ।
व्योमेशानन्तसंभिन्नं वामनं प्रोद्धरेत्ततः ॥ १५७ ॥
पन्थानं माधवारूढं व्योमेशानन्तभूषितम् ।
[2]ककारश्चैव रेफश्च द्वावेतौ भुवनोपरि ॥ १५८ ॥
एकारेणाङ्कितः कालो वैराजो रामभूषितः ।
सर्वेभ्योऽनुग्रहं चैव पदं सप्ताक्षरं ततः ॥ १५९ ॥
ज्ञानात्मनो पदं दद्यात्पुरुषोत्तमसंयुतम् ।
महातमः प्रविष्टस्य पदमष्टाक्षरं त्विदम् ॥ १६० ॥
. ... . ..मादाय जगद्योनिविभूषितम् ।
विज्ञानालोकशब्दं तु [3]प्रदाने त्र्यक्षरं पदम् ॥ १६१ ॥
हकारश्च मकारं च सर्वदेहमथोद्धरेत् ।
क्रमात् त्रयाणां योक्तव्या ना(रा?)मोदामोऽपि विक्रमी ॥ १६२ ॥
[4]भकारश्च वकारश्च व्यापकः केवलास्त्वमी ।
[5]रारूढः पद्मनाभस्य(श्च?)स्रग्धरो रामभूषितः ॥ १६३ ॥
[6]हकारश्च तकारश्च पुण्डरीकश्च केवलः ।
वैराजस्थोऽथ कमलश्शङ्खस्त्र्यश्रेण चाङ्कितः ॥ १६४ ॥
परमात्माऽथ सूक्ष्मस्थः पुण्डरीकश्च केवलः ।
रामस्ततस्तकारस्थः सूक्ष्मस्थश्चामृतस्ततः ॥ १६५ ॥
कालश्चैकारसंभिन्नस्समुद्धरपदं ततः ।
अजितस्तु पदं त्र्यर्णं मम जन्मपदं द्विज ॥ १६६ ॥

---

1 इकारं A 2 अकार A 3 प्रधाने A 4 हकार A. 5 आरूढ A 6 ककार A.

केवलश्च ततो ह्रस्वो [1]नकारस्त्रासनस्थितः ।
त्र्यैलोक्यैश्वर्यदोपेतो घातयेति पदं द्विधा ॥ १६७ ॥
ज्ञानैश्वर्यपदं दद्याल्लीलासक्तपदं त्वनु ।
पद्मनाभश्च रारूढः कमलो[क्त]तथात्म(धाम?)गः ॥ १६८॥
इष्टोपेतस्तु कमलो वैराजं भुवनोर्ध्वगम् ।
केवलः पद्मनाभस्तु धन्वी चानङ्गभूषितः ॥ १६९ ॥
हकारश्च नकारश्च वकारो रामभूषितः ।
आह्लादस्थं ततो भानुं मदनेन समन्वितम् ॥ १७० ॥
त्र्यैलोक्यैश्वर्यदोपेतं परमात्मानमुद्धरेत् ।
स्रग्धरं वरुणारूढं त्र्यैलोक्यैश्वर्यदान्वितम् ॥ १७१ ॥
मम त्राता पदं योज्यं सकलेति पदं ततः ।
जकारश्च नकारश्च शरणेति पदं ततः ॥ १७२ ॥
शरणागतोऽक्षरं(?)दद्यात्पदं विप्र षडक्षरम् ।
त्र्यश्रान्वितं च वैराजं कुरुवीप्सापदं ततः ॥ १७३ ॥
दकारं केवलं शङ्खं गोपनेनाङ्कितं न्यसेत्।
नकारं च द्विधा दद्यादन्त्यं वै गोपनाङ्कितम् ॥ १७४ ॥
देयो भुवनपालश्च सकारः शङ्खसंस्थितः ।
पन्था गोपनसंभिन्नः केवलः सर्वरोधकः ॥ १७५ ॥
पुण्डरीकाक्षशब्दं तु परमं त्र्यक्षरं पदम् ।
पदं कराणि(कारुणि?)केत्युक्त्वा ततो भक्तजनेन(ति?) च ॥१७६॥
पदं वत्सलमादाय पिण्डभावनसंयुतम् ।
विश्वात्मा च[2] ततः शब्दं विश्वेश्वरपदं ततः ॥ १७७ ॥
हृषीकेशपदं दद्यान्मोक्षलक्ष्मीपदं ततः ।
पद्मनाभश्च रेफस्थो दकारः केवलस्ततः ॥ १७८ ॥
भगवन्सर्वमन्त्रात्मन् पदमष्टाक्षरं शुभम् ।
नरहयश्रेण संभिन्नस्मर्वमन्त्रपदं ततः ॥ १७९ ॥
केवलं पुण्डरीकं च रेफं वै विष्णुनाऽङ्कितम् ।
भूयस्तं विक्रमीयुक्तं त्र्यैलोक्यैश्वर्यदान्वितम् ॥ १८० ॥

---

1 नकरो CL. 2 न A.

नमो नमःपदोपेतं पञ्चधाऽथ त्रिकं न्यसेत् ।
क्रमेण द्विजशार्दूल कूट(?)सूर्यामृताभिधाम् ॥ १८१ ॥
विसर्गेणाङ्कयेत्पूर्वं व्योमेशेन पदं ततः ।
तृतीयमौर्वसंज्ञेन चतुर्थं छादनेन तु ॥ १८२ ॥
पञ्चमं योगधात्रा तु योज्यः षष्ठेन नारद ।
अविग्रहः सप्तमे तु देवदत्तं नियोजयेत् ॥ १८३ ॥
तारकं त्वष्टमे विप्र विष्टरं नवमे ततः ।
दशमे ऋतधामानमूर्जमेकादशं मुने ॥ १८४ ॥
द्वादशेऽभ्युदयं विद्धि न्यसेद्विष्णुं त्रयोदशे ।
रामं द्विसप्तमे विप्र विन्यसेत्तदनन्तरम् ॥ १८५ ॥
आनन्दं पञ्चदशमे बीजे तदनु नारद ।
प्रणवस्सनमस्कोऽन्ते तदन्ते प्रणवः पुनः ॥ १८६ ॥
भूयः प्रणवमादाय भगवत्पदमेव च ।
ममेति द्व्यक्षरं शब्दं विवेकपदमेव च ॥ १८७ ॥
पकारं केवलं दद्यादकारं गोपनाङ्कितम् ।
ताललक्ष्माणमन्ते तु अप्रमेयोज्झितं मुने ॥ १८८ ॥
समयोत्थानतः शब्दं दोषं ज्ञानाङ्कुशेन वै ।
पदं सप्ताक्षरं दद्यात्कमलं केवलं ततः ॥ १८९ ॥
विश्वरूपसमारूढं दण्डधारं न्यसेत्ततः ।
तदन्ते कमलं दद्याद्दण्डधारमथोद्धरेत् ॥ १९० ॥
वृषकर्मा च तदधः अकरालस्ततो द्विज ।
अखण्डविक्रमी देयस्तदधस्थः प्रतर्दनः ॥ १९१ ॥
शश्वच्छब्दस्ततो विप्र चन्द्रांशुश्छन्दपृष्ठतः ।
आलन्देनाङ्कितः कार्यो व्योमेशेनाङ्कितेन तु ॥ १९२ ॥
रामाङ्कं स्रग्धरं चाधो मापादय पदं ततः ।
कालत्र्यश्राङ्कितं दद्यान्नरं रामाङ्कितं ततः ॥ १९३ ॥
अनलं वरुणं चैव केवलं योजयेत्क्रमात् ।
पुण्डरीकोऽग्निरूपश्च वैकुण्ठस्तु तृतीयकः ॥ १९४ ॥
छन्दस्त्र्यश्राङ्कितो (तं?) योज्यश्च(ज्यंच ?)न्द्रांशुं प्रोद्धरेत्ततः ।
छन्दःपतिसमारूढमानन्देनाथ चाङ्कयेत् ॥ १९५ ॥

गकारं केवलं दद्याद्दैकुण्ठं व्योमराड्युतम् ।
पूजयेति वदेद्दीप्तां मूर्ये तदनु चोद्धरेत् ॥ १९६ ॥
सामदाम( फाठ? )कमस्यान्ते दीप्तिमन्तमनन्तरम् ।
उत्फुल्लनयनश्चान्ते चतुर्णां योजयेत्क्रमात् ॥ १९७ ॥
त्र्यैलोक्यैश्वर्यदं मूर्ध्नि प्रज्ञाधारमथासने ।
ततो झषं समादाय ज्वालारूढं तु नारद ॥ १९८ ॥
व्योमेशेन समायुक्तं घर्मांशुं प्रोद्धरेत्ततः ।
तस्यासने तु लिङ्गात्मा योजनीयोऽवसानतः ॥ १९९ ॥
अप्रमेयोज्झितः स्रग्वी आधेयश्चाथ लाङ्गली ।
आसने भगवानस्य वैराजस्तस्य पूर्वकम् ॥ २०० ॥
द्विधाऽनलं समुद्धृत्य न्यस्यस्ताभ्यामथ क्रमात् ।
लाङ्गली विश्वरूपश्च व्यापी बाह्यात्तु मस्तके ॥ २०१ ॥
प्रथमस्यासने योज्यं नाम्ना वर्ण प्रसारणम् ।
दीर्घघोणं द्वितीयस्य योजयेत्तदनन्तरम् ॥ २०२ ॥
अथानलं द्विजादाय तदधः सामफाठकम् ।
अशेषभुवनाधाररूढं कृत्वाऽस्य मूर्धनि ॥ २०३ ॥
ऐश्वर्यसंवृतं व्योम न्यसेदेकं द्विधा मुने ।
ततोऽनलं समादाय सूर्यं न्यस्येदधस्ततः ॥ २०४ ॥
अस्य चाधोऽनलं चोर्ध्वे व्योमचैरावणस्थितम् ।
ततस्तु रेफमादाय झषोपरि गतं मुने ॥ २०५ ॥
तदधोपरि तेजस्वी तदधो ह्यनलं पुनः ।
लोकेशोपरिसंस्थं तु अंकारश्चास्य मूर्धनि ॥ २०६ ॥
पट्कारद्वितयं चान्ते केवलो लाङ्गली ततः ।
रामाङ्कितो दण्डधरः स्रग्वी तेनैव चाङ्कितः ॥ २०७ ॥
महामन्त्रेति च पदं शब्देनेति पदं ततः ।
विघ्नोऽयमिति वै देयं समयेति पदं ततः ॥ २०८ ॥
दोषहृद्दन्त( बृन्दं न ? )दन्ते तु आविद्यानिचयं ततः ।
बधरीभूतमिति वै शीघ्रं कुरु कुरु द्विज ॥ २०९ ॥
ततः प्रणवमादाय सूर्यो योज्यस्ततो मुने ।

1 देव LC.

सुपर्णं च तदन्ते तु प्राणस्तदनु नारद ॥ २१० ॥
कूटस्तदवसाने तु सर्वलोकेशसंस्थितः ।
व्योमेशभूषितश्चैव भगवन्मे पदं ततः ॥ २११ ॥
संपूर्णे च पदं दद्याद्दानवर्णयुतं[1] ततः ।
कर्मणिशब्दमथ च संपादय पदं द्विधा ॥ २१२ ॥
तदन्ते कौस्तुभपदं ओंभगवन्पदं ततः ।
ततश्चामृतमूर्ते वै समस्तपदमेव हि ॥ २१३ ॥
पदं मन्त्रगणं चातो [2]यकारः केवलस्ततः ॥
नारायणः प्रधानस्थश्शान्तिदः केवलस्ततः ॥ २१४ ॥
नरोऽथ भुवनारूढो रारूढोऽथ गदाधरः ॥
ओतदेहाङ्कितप्राणश्शङ्खस्थश्चाथ शान्तिदः ॥ २१५ ॥
व्योमेशयुक्तो वैराजः स्रग्धरः केवलस्ततः ।
ताललक्ष्मा तदन्ते तु तृप्तिं च तदधो न्यसेत् ॥ २१६ ॥
तस्याप्यधो वराहं तु पिण्डोऽयं गोपनाङ्कितः ।
नारायणोऽथ चैकाकी भूयस्स दमनोर्ध्वगः ॥ २१७ ॥
आदिदेवेन चाक्रान्तो मन्दरोऽथाङ्कुशस्थितः ।
औकारसंयुतः स्रग्वी त्र्यश्रयुक्तोऽथ दीप्तिमान् ॥ २१८ ॥
केवलश्च ततः पन्थास्सन्तर्पयपदं द्विधा ।
सोमोऽथ वरूणारूढो द्विधा देयश्च नारद ॥ २१९ ॥
व्यापी चान्द्री तथाऽऽनन्दो योज्यस्तदनु वै द्वयोः ।
वराहोऽथामृतस्थस्तु तदधः पुरुषेश्वरः ॥ २२० ॥
उद्दामो ह्यथ तस्याधो व्यापी चान्द्री च मूर्धनि ।
एतदेव पुनर्दद्याद्भुवनार्णेन वर्जितम् ॥ २२१ ॥
विष्णुनाऽलङ्कृतं किं तु सानन्दममृतं ततः ।
तदधश्चामृताधारं शङ्खं तस्याप्यधो न्यसेत् ॥ २२२ ॥
विश्वाप्यायकरानन्दं त्रैलोक्यैश्वर्यदान्वितम् ।
परमेश्वरसंयुक्तं न्यसेत्सोममथ द्विधा ॥ २२३ ॥
वरुणो भूधरोपेतस्त्वग्निरूपोऽथ केवलः ।
दण्डधारस्ततो देयः प्रणवेनाङ्कितो मुने ॥ २२४ ॥

1 द्वय A. 2 वकार. A.

नमो नमस्ततः स्वाहा मन्त्रोऽयं त्रिदशार्चितः।
शतानि षट् च वर्णानां वर्णा द्वादश च द्विज ॥ २२५ ॥
अर्धाक्षराणि वै पञ्च इत्येतत्कथितं मुने।

[ अस्य महामन्त्रस्य प्रशंसा ]

मन्त्रोऽयं सूचितः प्राग्वै रक्षणीयः प्रयत्नतः ॥ २२६ ॥
छिन्नानामपि भिन्नानां मन्त्राणां चारुरूपिणाम्।
एषा(षां?) मन्त्रवरः श्रेष्ठस्सर्वेषामपि पूरयेत् ॥ २२७ ॥
तेजसाऽपि च वीर्येण सौम्यत्वेन सदैव वा।
समस्तदोषशमनो विघ्नविध्वंसकृन्महान् ॥ २२८ ॥
मन्त्रोऽयं मुनिशार्दूल गोपनीयः प्रयत्नतः।
सामान्यं साधकानां च सच्छासननिषेविणाम् ॥ २२९ ॥
अनेकवक्त्रनयनमनेकाङ्घ्रिकरान्वितम्।
अनेकाद्भुतदातारमनेकाभरणभूषितम् ॥ २३० ॥
अनेकगन्धपुष्पाढ्यमनेकायुधधारिणम्।
अनेकदीप्तनयनमनेकफलभूषितम् ॥ २३१ ॥
अनेकमन्त्रकोटीभिस्संस्मरेत्सेवितं सदा।
यस्तु नैमित्तिके यागे नित्ये वानन्यमानसः ॥ २३२ ॥
सोऽचिरात्प्राप्नुयात् सिद्धीर्नावसीदति कर्हिचित्।

इति श्रीपाञ्चरात्रे जयाख्यसंहितायां पवित्रकविधानं नामैकविंशः पटलः।

---

## अथ वैष्णवाचारलक्षणं नाम द्वाविंशः पटलः।

नारदः—

[ यतिप्रभृतीनां वैष्णवानां स्वरूपप्रश्नः ]

श्रोतुमिच्छामि भगवन्वैष्णवानां च लक्षणम्।
सर्वेषां यतिपूर्वाणामाचारं च विशेषतः ॥ १ ॥
दानं प्रदानं द्विविधं येषामुक्तं त्वया फलम्।
तानहं तु कथं नाम वेद्मि वै लक्षणं विना ॥ २ ॥

श्रीभगवान्—

[ भागवतधर्मैकनिष्ठानां साम्येऽपि भेदे कारणम् ]

भगवद्धर्मतन्त्राणां पञ्चकालनिषेविणाम्।

अप्रतिग्राहकाणां च कणभिक्षाभिवर्तिनाम् ॥ ३ ॥
बाह्याभ्यन्तरतुल्यानां श्रद्धासंयमसेविनाम् ।
नारायणैकनिष्ठानां येऽस्मिन्जाता महाकुले ॥ ४ ॥
ऊनाधिकेन विप्रेन्द्र कर्मणाऽनुष्ठितेन च ।
कालह्रासवशाच्चैव वैषम्यमुपयान्ति च ॥ ५ ॥

[ यतीनां लक्षणम् ]

संस्कृताश्च निषेकाद्यैः पित्रा वा गुरुणा त्वनु ।
स्वयं विवेकभावस्था ब्रह्मचारिगुणैर्युताः ॥ ६ ॥
सर्वभूतस्थितं विष्णुं पश्यन्त्यमलया धिया ।
सर्वे भूतास्तदन्तस्था भावयन्तीति सर्वदा ॥ ७ ॥
कर्मणा मनसा वाचा यजन्त्येकमधोक्षजम् ।
आद्यद्विजेन्द्रवेश्मभ्यस्तदभावान्महामते ॥ ८ ॥
षट्कर्मरतविप्रेभ्यो नित्यं चायाचितेन तु ।
सिद्धान्नेन च [1]वर्तन्तो मुण्डितश्मश्रुमस्तकाः ॥ ९ ॥
काषायवासोधर्त्तारो दण्डमात्रपरिग्रहाः ।
ते विप्रा यतयः शुद्धाः सत्वस्था वैष्णवाः स्मृताः ॥ १० ॥

[ एकान्तिलक्षणम् ]

भ्रान्त्वा भिक्षां च षट्कर्मनिरतेभ्यस्तु सत्कृताम् ।
अपरिग्रहवान्यो वै तया संपूजयेत्प्रभुम् ॥ ११ ॥
पुमान्गोप्तारमव्यक्तमष्टाङ्गविधिना महत् ।
गुणिना सह शिष्येण वसत्येको विचारधीः ॥ १२ ॥
कुलक्रमेणाधिकारी स एकान्तीह वैष्णवः ।

[ वैखानसलक्षणम् ]

यः परिग्रहवान्विप्रः पूजयेत्परमेश्वरम् ॥ १३ ॥
याचितेन द्विजेंद्राच्च मात्रेनायाचितेन तु ।
धनेन क्षत्रियाद्वैश्यात्कुटुम्बमपि पालयन् ॥ १४ ॥
विद्धि वैखानसः सोऽपि जटी छत्री सिताम्बरः ।

[ कर्मसात्वतस्य लक्षणम् ]

मुख्यत्वेन क्रियार्थं यः कुटुंबस्य च पालने ॥ १५ ॥

1 वर्तन्ते A.

आत्मनो भरणे चापि इत्यु(उद्यु?)क्तश्चोपसर्पति ।
वृत्त्यर्थमपि राजानं स विप्रः कर्मसात्त्वतः ॥ १६ ॥

[ शिखिनो लक्षणम् ]

स्फुरत्यविरतं यस्य वैष्णवं यजनं हृदि ।
प्राधान्येनाथ पित्र्यादि तदर्थं कृषिपूर्वकम् ॥ १७ ॥
समाचरति वै कर्म शिखी साक्षाद्द्विजोत्तमः ।
[1]मय्यपेक्षावशेनैव यद्यप्युत्कृष्टतां गतः ॥ १८ ॥
तथापि चातुराश्रम्यं सर्वेषां विहितं सदा ।

[ वैखनसादिभ्यो वैष्णवेभ्यो भगवत्पूजनशेषभूतवृत्तिप्रदाना फलविशेषः ]

भगवत्पूजनार्थं तु त्रणायां यः प्रयच्छति ॥ १९ ॥
मठं सायतनं कृत्वा वृत्तिपूर्वमकण्टकम् ।
दासीकर्मकरोपेतं शुद्धवेदवरान्वितम् ॥ २० ॥
ते यान्ति भगवत्स्थानं भक्तानां सदनं महत् ।

[ गृहस्थेभ्यो वैष्णवेभ्यो ग्रामादिदाने फलम् ]

भगवद्यजनार्थं वा सात्त्विकेन तु चेतसा ॥ २१ ॥
मठायतनभिन्नं च ग्रामभूद्रविणं महत् ।
गृहाश्रमरतानां च वैष्णवानां निवेदयेत् ॥ २२ ॥
न्यायोपायविधिप्राप्तं यस्स मोक्षमवाप्नुयात् ।

[ ब्राह्मणादन्यतो वृत्तिग्रहणप्रतिषेधः ]

अलाभाच्चैव भिक्षाणामसामर्थ्यात्तथाऽऽत्मनः ॥ २३ ॥
स्वकर्मणि ह्यलोपार्थं पुत्रादेर्भरणाय च ।
अत्यापद्यपि जातायां कुटुम्बी वैष्णवो द्विजः ॥ २४ ॥
ब्राह्मणादेव गृह्णीयाद्वृत्तिं देवमठाश्रिताम् ।
केवलां ग्रामपूर्वां वा याचितायाचितात्तथा ॥ २५ ॥
आप्रभातान्निशान्तेन कर्मणा वैष्णवेन च ।
क्रियमाणेन तदुत तदर्थमवमेति वै ॥ २६ ॥
इत्येतद्यतिपूर्वाणां वैष्णवानां च लक्षणम् ।
कथितं मुनिशार्दूल आप्तादीनामथो शृणु ॥ २७ ॥

[ आप्तलक्षणम् ]

ये यजन्ति क्रमादेवं पञ्चकाल्येन कर्मणा ।

---

1 मया Y. त्रय्य A.

द्विजातीनां चतुर्णां तु अधिकारं ददत्यपि ॥ २८ ॥
शुद्धे तु भगवन्मार्गे सत्त्वस्थास्सात्त्वताश्च ते ।
असंकीर्णा द्विजश्रेष्ठ ब्रह्मरुद्रेन्द्रपूर्वकैः ॥ २९ ॥
विशेषदेवतायागैरमुख्यैर्नातिनिर्मलैः ।
वासुदेवं विना [ चातुरात्म्यं त ] त्प्रभवादिना ॥ ३० ॥
संन्यासकर्म (कर्मसंन्यास ?) योगेन फलसंपद्विनैव हि ।
वेदान्तविधि( न्तार्थवि ? )शेषज्ञाश्चतुर्णामुपरि स्थिताः ॥ ३१ ॥
†मोक्षार्थमपि विप्रेन्द्र स्थितास्तेऽञ्जलिकारिणः ।
प्रतिभात्यधिकं येषां यत्स्यात्संस्थापने हरेः ॥ ३२ ॥
धनं समार्ज्य यत्नेन प्रतिष्ठामाचरन्ति ये ।
वैष्णवीं भक्तियुक्तेन चेतसा कीर्तयन्ति च ॥ ३३ ॥
भगवद्भाविनो विप्रा इत्याप्तास्समुदाहृताः ।

[ अनाप्तलक्षणम् ]

वर्णधर्ममनुज्झित्य ह्याप्तादिष्टेन कर्मणा ॥ ३४ ॥
यजन्ति श्रद्धया देवमनाप्तास्ते प्रकीर्तिताः ।

[ आरम्भिलक्षणम् ]

विना तेनार्थसिध्यर्थं विश्वात्मानं यजन्ति ये ॥ ३५ ॥
आरम्भिणस्ते बोद्धव्या वैष्णवा ब्राह्मणादयः ।

[ सप्रवर्तिलक्षणम् ]

श्रद्धया ये प्रवर्तन्ते स्वयं संपूजने हरेः ॥ ३६ ॥
अमार्गेण तु विप्रेन्द्र विद्धि तान्संप्रवर्तिनः ।
लिङ्गैरेतैस्तु बोद्धव्यास्सदैवाप्तादयो मुने ॥ ३७ ॥
अथातो योगिपूर्वाणां वैष्णवानां समासतः ।
विप्रादिमौद्गलान्तानां लक्षणं चावधारय ॥ ३८ ॥

[ योगिनां लक्षणम् ]

शय्यासनपथिस्थश्च हृद्गतं संस्मरेत्प्रभुम् ।
निष्कलादिप्रभेदेन अथवायतने हरेः ॥ ३९ ॥

---

† अञ्जलिकारिलक्षणपरस्य 'मोक्षार्थमपी'त्यस्य 'आरम्भिणस्ते' बोद्धव्या वैष्णवा ब्राह्मणादय इत्यस्यानन्तर पाठो युक्तः । अत्र त्वसङ्गतः ।

निमीलिताक्षोपविष्टस्समाधिं चाभ्यसेत्सदा ।
नमो नारायणायेति वासुदेवेति वा वदेत् ॥ ४० ॥
कर्मणा मनसा वाचा नानिष्टं कस्यचित्स्मरेत् ।
लिङ्गैरेतैस्तु बोद्धव्या भगवद्योगसेविनः ॥ ४१ ॥

[ जपनिष्ठाना लक्षणम् ]

यो नु शुद्धश्शान्तमना दण्डी काषायवस्त्रभृत् ।
भगवद्भाविजन्तूनां साभिलाषं निरीक्षते ॥ ४२ ॥
पौत्रदीपक[1]पद्माक्षस्फाटिकेनामलेन वा ।
गणित्रेण करस्थेन भजमानो जपेद्धरिम् ॥ ४३ ॥
मनसा मुनिशार्दुल विष्णोरर्चापरः स्थितः ।
जपेदुपांशुना मन्त्रमादराद्वा स्तुतिं पठेत् ॥ ४४ ॥
जपनिष्ठं तु तं विद्धि वैष्णवे शासने स्थितम् ।

[ तापासलक्षणम् ]

यत्किञ्चिद्व्रतमातिष्ठेत्तत्तद्भगवदाश्रितम् ॥ ४५ ॥
चान्द्रायणपराकादीनेकादश्यादिकं चरेत् ।
सदैवायतने विष्णोस्तदभावे गृहस्थितः ॥ ४६ ॥
उत्तिष्ठन्संस्मरेद्विष्णुमुपविष्टस्तथैव च ।
मासोपवासी भिक्षाशी विष्ण्वायतनलोलुपः ॥ ४७ ॥
व्रतान्ते पत्रपुष्पाद्यैः पूजयेद्भगवन्मयान् ।
औदकीमाचरेच्छुद्धिमेकद्वित्रिजलाप्लवः ॥ ४८ ॥
क्षाळनं वसनाभ्यां वा ताभ्यां वा परिवर्तनम् ।
समीपवर्तिनां(नो ?)नित्यमुद्बोधयति यत्नतः ॥ ४९ ॥
नक्तोपवासपूजायामेकादश्यां प्रयत्नतः ।
यस्त्वेवमादि सततमाचरेत्प्रयतात्मवान् ॥ ५० ॥
वैष्णवस्तापसः प्रोक्तः पयोमूलफलाशनः ।

[ शास्त्रज्ञलक्षणम् ]

पुराणं धर्मशास्त्राणि इतिहासांश्च वैष्णवान् ॥ ५१ ॥
वेत्ति वेदान्तसिद्धान्तान् शृणुयाद्व्याकरोत्यपि ।
प्रणष्टपाठवाक्यानां कृत्वा वस्तुविचारणम् ॥ ५२ ॥

---

1 जीवक A.

तज्ज्ञैस्सह प्रयत्नाद्वै ह्यागमं संस्करोति यः ।
अतन्द्रितः सदा विद्धि तं शास्त्रज्ञं हि वैष्णवम् ॥ ५३ ॥

[ शास्त्रधारकलक्षणम् ]

श्रद्धया यः समुच्चित्य यत्र कुत्रचिदागमम् ।
ब्रह्म ध्यायंस्तथा पश्चात्सन्धारयति यत्नतः ॥ ५४ ॥
पूजयत्यर्घ्यपुष्पाद्यैश्शास्त्रपीठं क्रमेण तु ।
ददाति वैष्णवानां च गोपयत्यकृतात्मनाम् ॥ ५५ ॥
अन्यदर्शनभक्तानां विद्धि तं शास्त्रधारकम् ।
इत्येतत्कथितं विप्र वैष्णवानां च लक्षणम् ॥ ५६ ॥

[ उक्तलक्षणलक्षितानां वैष्णवानां यागपूजार्हत्वविधानम् ]

यजस्व पूजयस्वैतान् भक्त्या भावेन नारद ।
समुद्दिश्य निमित्तं यच्छ्राद्धं यजति वैष्णवे ॥ ५७ ॥
यत्यादिपञ्चकेवाऽथ ह्यनाप्ते ब्राह्मणे द्विज ।
तस्मिन्नञ्जलिकारे वाऽऽरम्भिणेऽथ प्रवर्तिने ॥ ५८ ॥
तदक्षयं पितॄणां तु विशेषान्मन्त्रसंस्कृतम् ।
षडेतेऽर्हाश्च विप्रेन्द्र पितृकर्मणि सर्वदा ॥ ५९ ॥
जपहोमव्रतादीनामासक्ताः षडिमे त्वपि ।
दानकर्मणि दिव्ये च प्रायः क्षत्रादयः स्मृताः ॥ ६० ॥
भवन्ति यादृशाश्चैव तापसा जपिनस्तु वा ।
दैवे पित्र्ये द्विजश्रेष्ठ योगी चार्हति सर्वदा ॥ ६१ ॥
यद्वयः पूर्णमासीत्तु किं तु योगपरो यदि ।
तस्य ब्रह्ममयो देहो विशेषाद्वैष्णवस्य च ॥ ६२ ॥
तस्मात्स[1] पूजनीयो हि यथाशक्ति च सर्वदा ।
दुर्लभा भगवद्यागा भाविनो भुवि मानवाः ॥ ६३ ॥
तद्दर्शनात्तदालापात्सुलभं शाश्वतं पदम् ।

नारदः—

एको हि श्रूयते देव कालो लोके न चापरः ॥ ६४ ॥
पञ्च कालास्त्वयोद्दिष्टाः किमेतन्मेऽत्र संशयः ।

1 त्सपू A.

श्रीभगवान्—

[ पञ्चकालभेदः तत्र कर्तव्यकर्मभेदश्च ]

एकस्यैव हि कालस्य वासरीयस्य नारद ॥ ६५ ॥
आप्रभातान्निशान्तं वै पञ्चधा परिकल्पना ।
पृथक्कर्मवशात्कार्या न काला बहवः स्थिताः ॥ ६६ ॥

नारदः—

एककालस्थितानां च कर्मणां लक्षणं वद ।
परिज्ञातैस्तु यैस्सम्यक्कृतकृत्यो भवाम्यहम् ॥ ६७ ॥

श्रीभगवान्—

ब्राह्मान्मुहूर्तादारभ्य प्रागंशं विप्र वासरे ।
जपध्यानार्चनस्तोत्रैः कर्मवाक्चित्तसंयुतैः ॥ ६८ ॥
अभिगच्छेज्जगद्योनिं तच्चाभिगमनं स्मृतम् ।
ततः पुष्पफलादीनामुत्थायार्जनमाचरेत् ॥ ६९ ॥
भगवद्यागनिष्पत्तिकारणं प्रहरं परम् ।
तदुपादानसंज्ञं वै कर्मकालपदाश्रितम् ॥ ७० ॥
ततोऽष्टाङ्गेन यागेन पूजयेत्परमेश्वरम् ।
[1]सार्धं तु? प्रहरं विप्र इज्याकालस्तु स स्मृतः ॥ ७१ ॥
श्रवणं चिन्तनं व्याख्या ततः पाठसमन्विता ।
[2]अध्यायसंज्ञं तं विद्धि कालांशं मुनिसत्तम ॥ ७२ ॥
दिनावसाने संप्राप्ते पूजां कृत्वा समभ्यसेत् ।
योगं निशावसाने च विश्रमैरन्तरीकृतम् ॥ ७३ ॥
पञ्चमो योगसंज्ञोऽसौ कालांशो ब्रह्मसिद्धिदः ।

नारदः—

श्रुतो मयाऽखिलः पूर्वं भगवद्याग उत्तमः ॥ ७४ ॥
तस्याङ्गानि विभागेन श्रोतुमिच्छाम्यहं पुनः ।

श्रीभगवान्—

अन्तःकरणयागादि यावदात्मनिवेदनम् ॥ ७५ ॥
तदाद्यमङ्गं यागस्य नाम्नाऽभिमनं महत् ।

1 साधक A, 2 स्वाध्याय A,

पूजनं चार्घ्यपुष्पाद्यैर्भोगैर्यदखिलं मुने ॥ ७६ ॥
बाह्योपचारैस्तद्विद्धि भोगसंज्ञं तु नारद ।
मध्वाज्याक्तेन दध्ना वै पूजा च पशुनाऽपि वा ॥ ७७ ॥
तत्तृतीयं हि यागाङ्गं तुर्यमन्तेन पूजनम् ।
निवेदितस्य यद्दानं पूर्वोक्तविधिना मुने ॥ ७८ ॥
संप्रदानं तु तन्नाम यागाङ्गं पञ्चमं स्मृतम् ।
वह्निसन्तर्पणं षष्ठं पितृयागस्तु सप्तमः ॥ ७९ ॥
प्राणाग्निहवनं नाम्ना त्वनुयागस्तदष्टमम् ।
इत्येतत्कथितं सम्यक् यत्त्वया परिचोदितम् ॥ ८० ॥
प्रददात्यचिराद्यद्वै तन्निष्ठानां परं पदम् ।

इति श्रीपाञ्चरात्रे जयाख्यसंहितायां वैष्णवाचारलक्षणं नाम द्वाविंशः पटलः ।

---

अथ श्राद्धविधानं नाम त्रयोविंशः पटलः ।

नारदः—

विधानमादिश विभो निमित्तं श्राद्धकर्मणि ।
दीक्षितैर्भगवद्भक्तैः कथं कार्यं क्रियापरैः ॥ १ ॥

श्रीभगवान्—

[ दीक्षितैरपि श्राद्धस्यावश्य कर्तव्यता ]

कर्मणा मनसा श्राद्धं यत्नात्कार्यं सदैव हि ।
सद्गुणैरगुणैः सर्वैर्यावद्देहान्तिमं द्विज ॥ २ ॥
विविक्तं धर्ममेतावत्सिद्धानामपि देहिनाम् ।

[ सिद्धैरपि लोकसग्रहार्थं धर्मस्य कर्तव्यता ]

नाचरेद्योऽपि वै सिद्धो लौकिकं धर्ममग्रतः ॥ ३ ॥
उपप्लवमसिद्धास्तु कुर्वन्त्यविरतं महत् ।
उपप्लवाच्च धर्मस्य ग्लानिर्भवति नारद ॥ ४ ॥
विवेकज्ञैरतस्तस्माल्लोकाचारो यथास्थितः ।
आदेहपाताद्यत्नेन रक्षणीयः प्रयत्नतः ॥ ५ ॥

[ धर्मेषु श्राद्धस्य श्रैष्ठ्यम् ]

आचाराणां हि सर्वेषां धर्म्माणां मुनिसत्तम ।
श्राद्धं मे रोचते यादृक् तादृक् न परमं तु वै ॥ ६ ॥

[ श्राद्धनिमित्तभूतकालादिनिरूपणम् ]

तस्य कालं विधानं च यथा तदवधारय ।
सितासिते च द्वादश्यावमावास्या च पुर्णिमा ॥ ७ ॥
राहुसन्दर्शनं चैव सूर्यसंक्रमणं तथा ।
श्राद्धं तत्र प्रयत्नेन काम्यं कुर्याच्च भक्तितः ॥ ८ ॥
अष्टकान्वष्टकाभ्यां च श्राद्धपक्षे विशेषतः ।
पितृऋक्षे त्वमावास्यात्रयोदश्योस्तथैव च ॥ ९ ॥
नवान्नप्राशने चैव सुतसंस्कारकर्मणि ।
गुरोर्वा वं(?) प्रवृद्धे तु तद्भ्रातरि गृहागते ॥ १० ॥
शुद्धेऽर्थे [1]पात्रतो लब्धे तीर्थे वाऽऽयतने हरेः ।
प्राप्ते क्षेत्रेऽथ संसिद्धे प्रतिष्ठायां पवित्रके ॥ ११ ॥
वापीकूपतटाकानां वृक्षाणां परिमोक्षणे ।
गोदानादौ वृषत्यागे व्रतारम्भे तदन्ततः ॥ १२ ॥
शास्त्रश्रवणनिष्पत्तावारम्भे च तथैव हि ।
वत्सरे वत्सरे विप्र मि(पि!)त्रादीनां कुटुम्बिनाम् ॥ १३ ॥
श्राद्धं कार्यं दीक्षितेन लौकिकीषु तिथिष्वपि ।

[ श्राद्धविधानप्रकारः ]

पूजयित्वा पुरा देवं तर्पयित्वा हुताशनम् ॥ १४ ॥
प्रागुक्तेन विधानेन ततस्त्वाहूय वैष्णवान् ।
प्रक्षालिताङ्घ्रीन्स्वाचान्तान् प्रोक्षितानस्त्रवारिणा ॥ १५ ॥

[ तत्र—आमन्त्रितानां वैष्णवानामासनपरिकल्पनविधानम् ]

सम्मुखान्मन्त्रनाथस्य उत्तराभिमुखानपि ।
आसनेषु विविक्तेषु परिच्छिन्नेषु नारद ॥ १६ ॥
गायत्र्या भस्मरेखासु शङ्कुनाऽस्त्रान्वितेन वा ।
हृदाऽस्त्रपरिजप्तानि आसनानामथोर्ध्वतः ॥ १७ ॥
सतिलानि च दर्भाणि निक्षिप्याम्बुयुतानि च ।

[ गुरुवर्गे पितृवर्गे मातृवर्गे च तेषां स्थापनप्रकारविधानम् स्थापनीय-
वैष्णवसङ्ख्याप्रदर्शनं च ]

गुरोर्वा गुरुवर्गस्य मूलमन्त्रेण नारद ॥ १८ ॥

---

1 पदतो A.

प्रतिष्ठाप्यासने पूर्वमेकमादौ तु वैष्णवम् ।
हृद्युक्तेनाथ तेनैव स्वधा संभूषितेन च ॥ १९ ॥
पितुः पङ्क्त्यवसाने तु नाम्नाऽन्यमुपवेशयेत् ।
शिरसा संयुतेनाथ गृहीत्वा पाणिना द्विज ॥ २० ॥
नाम्ना पितामहीयेन प्रतिष्ठाप्यासने परम् ।
नेत्रे [ण] स्वावसानेन त्र्यक्षेरेण समूर्त्तिना ॥ २१ ॥
प्रपितामहनाम्ना तु वैष्णवं चापरं न्यसेत् ।
चत्वार एव वै पूर्वं मन्त्रपीठस्य सन्मुखाः ॥ २२ ॥
देवीमन्त्रचतुष्केण मातुर्वास्य कुलस्य वा ।
अस्त्रेण पितृवर्गस्य उत्तराभिमुखं द्वयम् ? ॥ २३ ॥

[ पित्रादौ जीवति तत्स्थाने पितामहादीना नियोज्यता ]

विद्यमाने तु पितरि पितुर्योज्यः पितामहः ।
सत्यां मातर्यपि मुने तात्पितर्यपि तेन वै ॥ २४ ॥
मातुः पितामहो योज्यो मातुर्मन्त्रेण सर्वदा ।

[ वैष्णवानामलाभे सङ्कोचविधानम् ]

पितृमातृकुलाभ्यां द्वौ वंशकैकमथोभयोः ॥ २५ ॥

[ पित्रादिस्थाने वृताना तेषा देहन्यासविधानं ]

मनसा मुनिशार्दुल द्वादशार्णेन कल्पयेत् ।
देहन्यासं च सर्वेषां न्यस्यो हस्ततलेऽस्त्रराट् ॥ २६ ॥

[ तेषा ध्यानप्रकारः ]

सर्वे चतुर्भुजा ज्ञेयाः शङ्खचक्रगदाधराः ।
किरीटकौस्तुभधरा वैनतेयासने स्थिताः ॥ २७ ॥
प्रोद्यता इव चोद्धर्तुं प्रेतीभूतस्य नारद ।

[ पितणां पाद्यार्घ्यदानविधानम् ]

ततो हृदयमन्त्रेण अर्घ्यपात्रोदकेन तु ॥ २८ ॥
सिञ्चेत्क्रमेणाङ्घ्रियुग्ममेकैकस्मिन्महामते ।
मूलमन्त्रेण तदनु पाणिभ्यां तु तिलोदकम् ॥ २९ ॥

[ अर्घ्यसस्त्रावस्य पितृपात्रेण ग्रहणविधानम् ]

दत्वा दत्वा समाहृत्य पात्रे ह्यस्त्राभिमन्त्रिते ।
एकैकस्यापिधायाथ पूज्यत्र्यर्णेन नारद ॥ ३० ॥

[ तन्मध्ये पितॄणां विष्णुरूपाणां ध्यानम् ]

संस्थाप्य [1]भगवदग्रे तन्मध्ये मनसा स्मरेत् ।
तान्पितॄन् विष्णुरूपांश्च भासा भास्वरविग्रहान् ॥ ३१ ॥
पितृमन्त्रेण तदनु पितृमातृमयान्पितॄन् ।
त्रिस्सप्तकुलसंस्थापनोक्तानत्रैव भावयेत् ॥ ३२ ॥
अर्थयित्वा ततोऽनुज्ञां गृहीत्वा शिरसा ततः ।
पात्रासनस्थितेभ्यस्तु पित्रर्थं यागमाचरेत् ॥ ३३ ॥

[ मन्त्रेशसान्निधावभ्यर्थनम् ]

भगवन्पितृयागार्थं यजामि त्वां विशेषतः ।
तेषामनुग्रहार्थं तु यागमाहर मेऽच्युत ॥ ३४ ॥
एवं विज्ञाप्य मन्त्रेशं

[चरुसाधनम् ]

चरुं क्षीरेण साधयेत् ।
संस्कृतेऽग्नौ पुरा यद्यत्सिद्धं तच्चावलोकयेत् ॥ ३५ ॥
प्रोक्षयेदस्त्रमन्त्रेण भक्तं सव्यञ्जनादिकम् ।
संस्कृतेनाग्निना ताप्य कृत्वा मधुघृताप्लुतम् ॥ ३६ ॥
तिलदर्भान्वितं पश्चात्प्राग्वदाप्याय्य निर्दहेत् ।
सर्वं यत्साधितं किञ्चित् भक्ष्यपानादिभोजनम् ॥ ३७ ॥
चेतसा कल्पयेत्सर्वं पितॄणां तर्पयेत्तु तत् ।

[ साधितेन भक्ष्यभोज्यादिना देवस्य यजनम् ]

ततस्तेन यजेद्देवमर्घ्यपुष्पादिकेन तु ॥ ३८ ॥
यथा निवेशिताः पूर्वं मण्डलेष्वथ नारद ।
तेषां तृप्त्यर्थमुद्धृत्य संपूर्णं तु फलादिकैः ॥ ३९ ॥
दधिक्षीरान्नपात्रं तु क्रमादस्योद्धृतं च यत् ।
अर्घ्यपुष्पैस्तथा धूपलेपनाञ्जनदीपिकैः ॥ ४० ॥
तद्वीर्यमूष्मणा सार्धं तस्मिन्परिणतं स्मरेत् ।
तेन तं भावयेत्तृप्तमतीव मुनिसत्तम ॥ ४१ ॥
सर्वेषामन्नवीर्यं हि एवं परिणतं नयेत् ।

1 भगवत्य Y भगवन्य CL.

[ पितृसन्तर्पणमंत्रः ]

प्रणवेनामृतेनैव व्योमेशेनान्वितेन तु ॥ ४२ ॥
स्वनाम्ना च स्वधाऽन्तेन ततो नारायणात्मने ।
तदन्ते तु नमस्कुर्यान्मन्त्रोऽयं पितृतर्पणे ॥ ४३ ॥

[ अथाग्नौ होमविधानम् ]

ततो नारायणाग्नौ तु यायादग्रं च नारद ।
तमिन्धनेन शुष्केण संबोध्याज्ययुतेन च ॥ ४४ ॥
दक्षिणाग्रान् न्यसेत्तत्र दर्भान्भूयः स्तरोपरि ।
पूर्ववत्पूजयित्वाऽग्निं पितॄन् तेन तु तत्स्थितम् ॥ ४५ ॥
मन्त्रमूर्तिं यजेत्पश्चाद्बलिदानेन वै पुनः ।
त्र्यक्षरेण तु मन्त्रेण दद्यादन्नाहुतित्रयम् ॥ ४६ ॥
मध्येऽग्नि मन्त्रनाथस्य मध्याद्बाह्येऽग्निमध्यतः ।
प्रदक्षिणक्रमेणैव द्वादशाप्याहुतीस्ततः ॥ ४७ ॥
मूर्तिमन्त्रात्तु वर्णेन एकैकेन तु नारद ।
ओमादिना स्वधाऽन्तेन ततोऽस्त्रेण [1]तथा बहिः ॥ ४८ ॥

[ अथ पितृभ्यः पिण्डदानविधानम् ]

प्रदक्षिणे च प्रागादौ स्तरस्योपरि सोदकम् ।
दत्वा बल्य(?)ष्टकं चाथ अन्नावग्रे तिलं क्षिपेत् ॥ ४९ ॥
हृन्मन्त्रेण पुरा विप्र पितृभ्यस्तत्र वै क्रमात् ।
गायत्र्या च स्वनाम्ना वै स्वधायुक्तेन पूर्ववत् ॥ ५० ॥
पाणिना त्वपसव्येन बलिदानं समाचरेत् ।
तद्वीर्यं पूर्ववत्तेषां पितॄणां परिभावयेत् ॥ ५१ ॥
तिलोदकं ततो दद्यादाद्यन्तेन हृदा द्विज ।
स्वधाप्रणवयुक्तेन नाम्ना गोत्रान्वितेन च ॥ ५२ ॥
राजाऽथ(?)सगुणध्यानचेतसा भावितेन वै ।
अग्रतो मन्त्रमूर्तौ तु वह्नावपि ततः क्रमात् ॥ ५३ ॥

[ अथ पितॄणामन्नसविभजनविधानम् ]

पूजयेदुपविष्टांश्च पुष्पधूपानुलेपनैः ।
नैवेद्यहुतशेषं च तेषामन्नं विभज्य च ॥ ५४ ॥

---

1 यथा A.

व्यञ्जनादिफलोपेतं यत्किञ्चित्साधितं पुरा ।
स्वधान्वितेन मूलेन मूर्तिना भूषितेन तु ॥ ५५ ॥
पात्रं पूर्णेन्दुवद्ध्यायेत्तन्मध्ये तं तु संस्मरेत् ।
मन्त्रेशममृताकारं तृप्तिसंजननं महत् ॥ ५६ ॥

[ भुञ्जानेषु पितृषु जपध्यानविधानम् ]

भुञ्जानेषु तथैतेषु दश दिक्ष्वस्त्रमास्मरेत् ।
जपेत् ध्यायेच्च मन्त्रेशं नारसिंह्मं महामुने ॥ ५७ ॥

[ भोजनान्ते दक्षिणादानम् ]

भक्त्या संप्रीणयद्देवं दद्याच्छक्त्या च दक्षिणाम् ।
नैवेद्यमपि सन्धार्य तावदेव हि नारद ॥ ५८ ॥
यावद्भुजिक्रियान्तस्तु तदन्ते प्रतिपाद्य च ।

[ शेषान्नसविभजनम् ]

स्वं स्वमेव हि सर्वस्य अन्नस्याभ्यागतस्य च ॥ ५९ ॥
तेषु वा संविभज्यादौ एकं तत्रैव वर्जयेत् ।
यत्पितामहनाम्ना तु हरेः पूर्वं निवेदितम् ॥ ६० ॥
तद्गृहाश्रमिणो दद्यात् जायायां सुतवृद्धये ।
अथ पूर्णाहुतिं दद्याद्देवदेवं विसृज्य च ॥ ६१ ॥
उपसंहृत्य चैवाग्रे........................... ।

नारदः—

कव्यं श्राद्धविधानं तु इदं ज्ञातं मया विभो ॥ ६२ ॥
और्ध्वदेहिकसंज्ञं तु ज्ञातुमिच्छामि वै प्रभो ।

श्रीभगवान्—

संस्कृत्य वैष्णवं प्रेतं विधिदृष्टेन कर्मणा ॥ ६३ ॥

[ प्रेतश्राद्धविधानम् ]

[ तत्र प्रथमेऽहनि कर्तव्यविधिः ]

ततस्तस्य क्रिया कार्या स्वाश्रमे वा जलाशये ।
दिक् विदिक् सिंह्ममन्त्रं तु सास्त्रं न्यस्य पुरा ततः ॥ ६४ ॥
तदन्तरे कुटिं ध्यायेद्धर्ममन्त्रं स्वमुद्रया ।
कृतन्यासं ततोऽस्त्रेण प्रोक्षयेदस्त्रवारिणा ॥ ६५ ॥

उत्तराभिमुखां चुल्लीं तत्रास्त्रेणानलं क्षिपेत् ।
वर्मणाऽभिनवां स्थालीं क्षाळयित्वोपाळिप्य च ॥ ६६ ॥
हृदयेनाम्भसाऽऽपूर्य तेनैव क्षाल्य तण्डुलम् ।
समारोप्य च संसाध्य गायत्र्या तं चरुं द्विज ॥ ६७ ॥
मधुक्षीराज्यसंमिश्रं सिद्धमुत्तारयेत्ततः ।
आमूलादस्त्रपर्यन्तैस्तन्मन्त्रैरभिमन्त्र्य च ॥ ६८ ॥
वीक्षमाणो दिशं ह्यग्नेस्ततोऽस्त्रेणोपलिप्य च ।
मण्डलं भूतले रम्ये केशकण्टकवर्जिते ॥ ६९ ॥
कृत्वाऽर्घ्यपात्रं तदनु प्रोक्षयेत्तज्जलेन तु ।
तत्रास्त्रेण तिलान् दर्भान्विकिरेन्मध्य(?)मिश्रितान् ॥ ७० ॥
तत्र भद्रासनं चैवावतार्यास्त्राभिमन्त्रितम् ।
तत्रोपर्यथवा भूमौ मन्त्रपीठं प्रकल्पयेत् ॥ ७१ ॥
निष्कलं लययागेन मन्त्रेशं पूजयेत्ततः ।
अर्घ्यपुष्पादिना पूर्वं विना न्यासक्रमेण तु ॥ ७२ ॥
वह्निपूजावसानं च शश्वन्नातीव विस्तरम् ।
हृन्मन्त्रमन्त्रिते पात्रे राजते वाऽथ ताम्रके ॥ ७३ ॥
चरुस्थमुद्धरेदन्नं पात्राभावे च पिण्डवत् ।
संस्थाप्य भगवत्यग्रे हृन्मन्त्रेण तु नारद ॥ ७४ ॥
ततो नैवेद्यमध्यस्थं हृद्बीजं प्रणवान्वितम् ।
प्रेतनाम्ना समायुक्तं नमस्कारपदान्वितम् ॥ ७५ ॥
प्रेतरूपानुकारं च ध्यात्वाऽतो देवतात्मना ।
स्वधाऽन्तेन स्वनाम्ना वै पूजयेत्तदनन्तरम् ॥ ७६ ॥
अर्घ्यपुष्पैस्तथा दीपैर्लेपनाभ्यञ्जनाञ्जनैः ।
वाससा मधुपर्केण अन्नेन त्वर्हणादिना ॥ ७७ ॥
तर्पणेनाथ मात्राभिः प्रणम्य परमेशवत् ।
एवं कृत्वा तु मन्त्रेशो निष्कलस्तत्र यः स्थितः ॥ ७८ ॥
लयदेहश्च विप्रेन्द्र तं किञ्चित् खप्लुतं स्मरेत् ।
ततास्तिलेन मधुना दध्नाऽन्नेनोदकेन तु ॥ ७९ ॥

पूरयित्वाऽञ्जलिं पात्रं राजतं वाऽर्घ्यसंयुतम् ।
नैवेद्यस्यापसव्येन परितः प्रक्षिपेद्बहिः ॥ ८० ॥
नमस्कृत्य यथान्यायं क्षान्त्वा चाथावसृज्य च ।
मुद्रया सह मन्त्रेण पूर्वोद्दिष्टेन नारद ॥ ८१ ॥
पूर्णं हृदाऽम्भसा कृत्वा कलशं सतिलं द्विज ।
नैवेद्यान्नसमायुक्तं ब्राह्मणस्य निवेद्य च ॥ ८२ ॥
गोषु वा तदभावाच्च तदभावे जले क्षिपेत् ।
ततस्तिलोदकं दत्वा हृन्नाम्ना तु स्वधां सह ॥ ८३ ॥
प्रक्षाल्य पाणिपादं तु आचम्य तदनन्तरम् ।
संहृत्य पीठन्यासं तु पूजास्थानं द्विजाम्भसा ॥ ८४ ॥
प्लावयित्वोपलिप्याऽथ कृतन्यासो विशेद्गृहान् ।
पूर्ववत्कृतरक्षस्तु भुञ्जीयात् पावनं लघु ॥ ८५ ॥
तदन्ते नृहरिं ध्यायेद्यथाशक्ति तु संजपेत् ।
दिनान्तेऽस्त्रेण सिद्धार्थान् क्षिप्त्वा शयनमाचरेत् ॥ ८६ ॥
विधानमेतदखिलमाचर्तव्यं प्रयत्नतः ।

[ द्वितीयदिनमारभ्य यावद्दशमदिनं कर्तव्यविधिः ]

दिनानि दश मेधावी प्रेतानुग्रहकाम्यया ॥ ८७ ॥
आरभ्य शिरसो यावदस्त्रमन्त्रैस्तु नारद ।
अथोर्ध्वमनिरुद्धादिवासुदेवावसानकम् ॥ ८८ ॥
दशाहमेवं निर्वर्त्य प्राप्ते त्वेकादशे दिने ।

[ एकादशेऽहनि कर्तव्यश्राद्धविधानम् ]

श्राद्धकर्म तु वै कुर्यात्संपन्ने त्वाह्निके सति ॥ ८९ ॥
तदर्थमभ्यर्थ्य गुरुं गुरुपुत्रं तु वा द्विज ।
साधकं तदभावात्तु पुत्रकं सामयं तु वा ॥ ९० ॥
प्रागुक्तं यतिपूर्वं वा वैष्णवं त्वेकमेव हि ।
प्रक्षालिताङ्घ्रिं स्वाचान्तं कृत्वा तं संप्रवेश्य च ॥ ९१ ॥
दत्वासनं तु संस्थाप्य उत्तराभिमुखं तु तम् ।
पूजयेच्च ततो देवं शक्त्यङ्गावयवान्वितम् ॥ ९२ ॥
आचार्यस्य ततो विप्र कुर्यान्मण्डलकं शुभम् ।

तत्रासनवरं दद्यात्पूजितं व्याप्तिभावितम् ॥ ९३ ॥
विनिवेश्याथ वै तत्र प्रेतनाम्नाऽभिमन्त्रितम् ।
पूर्वोक्तेन विधानेन न्यास आवाहनं भवेत् ॥ ९४ ॥
अर्घ्यपाद्ये ततो दद्यान्नामगोत्रेण नारद ।
पुष्पधूपार्चितं कुर्याद्यथाशक्त्यम्बरादिभिः ॥ ९५ ॥
मृतोपकरणं सर्वं तस्यैव विनिवेद्य च ।
अनुज्ञां पूर्ववल्लब्ध्वा पित्रर्थं (प्रेतार्थं?) यागमारभेत् ॥ ९६ ॥
पूर्वोक्तेन विधानेन किञ्चित्तत्रापि चोच्यते ।
नैवेद्यपिण्डं गायत्र्या निवेद्यामृतगोळवत् ॥ ९७ ॥
ध्यात्वाह्लादकराकीर्णं स्थितं धामत्रयोपरि ।
तन्मध्ये मूलमन्त्रेण स्वधाशब्दान्वितेन तु ॥ ९८ ॥
मूर्तिं प्रेतमयीं ध्यायेन्नारायणकलोद्भवाम् ।
लक्ष्म्याद्यमखिलं तत्र लयन्यासं प्रकल्पयेत् ॥ ९९ ॥
तमर्घ्याद्यैरथो भोगैर्मूलमन्त्रेण पूजयेत् ।
मुद्रां बध्वा जपित्वा च वह्निस्थे चाग्रतो हरेः ॥ १०० ॥
दक्षिणाग्रेषु दर्भेषु एकमेव समाचरेत् ।
तिलोदकान्तं सकलमाचार्यं भोजयेत्ततः ॥ १०१ ॥
भुञ्जानस्य मुने तस्य अग्रस्थो नृहरिं जपेत् ।
तद्भोजनावसाने तु मन्त्रपीठस्य चाग्रतः ॥ १०२ ॥
अर्घ्यपात्रेण विप्रेन्द्र भूयो दद्यात्तिलोदकम् ।
भुक्तशेषं तु सिद्धान्नं गृहीत्वाऽर्घ्योदकान्वितम् ॥ १०३ ॥
भूतानां तर्पणार्थाय विकिरेत्पूर्ववद्बलिम् ।
संतृप्तस्याग्रतश्चैव हृन्मन्त्रेणाप्लुतेन तु ॥ १०४ ॥
परमेश्वरयुक्तेन नमोऽन्तेनामलादिना ।
संपन्नमिति संपृष्ट्वा दद्यादाचमनं ततः ॥ १०५ ॥
उच्छिष्टमुपसंहृत्य अस्त्रेणाभ्युक्षयेत्क्षितिम् ।
भगवत्प्रीणनं कुर्याद्गृहीत्वा दक्षिणां तु वै ॥ १०६ ॥
वह्निस्थस्य तु मन्त्रस्य दद्यात्पूर्णाहुतिं द्विज ।
हृदयाम्बुजमध्ये तु तेजःपुञ्जप्रभं महत् ॥ १०७ ॥

मन्त्रेशमुपसंहृत्य पीठपिण्डाग्निमध्यगम् ।
विधिनाऽनेन वै कुर्यान्मासं मासं महामुने ॥ १०८ ॥

[ अथ प्रेतत्वनिवर्तकमाब्दिकश्राद्धम् ]

वत्सरे चैव निष्पन्ने मासे चैव त्रयोदशे ।
प्रेतत्वस्योपशान्त्यर्थं पितृश्राद्धं समाचरेत् ॥ ॥ १०९ ॥
स्नानाद्यं होमपर्यन्तं कुर्यादादौ द्विजाह्निकम् ।
संस्कृतेऽग्नौ तु सिद्धेऽग्नौ घृतक्षीरमधुप्लुते ॥ ११० ॥
आहूय भगवद्भक्तानाचार्यांश्च क्रियापरान् ।
चतुरोदङ्मुखान् न्यस्य पीठन्यासक्रमेण तु ॥ १११ ॥
द्वावन्यौ पूर्ववक्त्रौ च विनिवेश्यासनद्वये ।
चतुर्णामनिरुद्धाद्यैर्मन्त्रैर्न्यासं समाचरेत् ॥ ११२ ॥
मूलीयमङ्गषट्कं तु ह्येकैकस्याथ विन्यसेत् ।
आपादान्मूर्धपर्यन्तं द्वाभ्यामस्त्रं तु देहगम् ॥ ११३ ॥
जातियुक्तं तदेवास्त्रं स्वसंज्ञापरिभूषितम् ।
ताभ्यां षडङ्गन्यासार्थं कृत्वा देहे करे न्यसेत् ॥ ११४ ॥
यदर्थं क्रियते श्राद्धं संज्ञा तस्यानिरुद्धकी ।
पितुः संज्ञां च विन्यस्य प्रद्युम्नस्यामितात्मनः ॥ ११५ ॥
सङ्कर्षणं तु मन्त्रेशं कल्पयेच्च पितामहम् ।
प्रपितामहसंज्ञं तु वासुदेवं प्रकल्पयेत् ॥ ११६ ॥
विधिनाथाप्ययाख्येन अर्घ्यपुष्पादिभिर्यजेत् ।
प्रार्थयित्वा ततोऽनुज्ञां मन्त्रेशं प्रतिमागतम् ॥ ११७ ॥
विभवेनार्चयित्वा तु स्नानाद्येन महामते ।
चन्दनाभरणस्रग्भिर्वस्त्रैर्धूपैस्तथाऽञ्जनैः ॥ ११८ ॥
दीपेन मधुपर्केण परमान्नेन मात्रया ।
स्तोत्रमन्त्रनमस्कारैः सुमनोभिरनन्तरम् ॥ ११९ ॥
तमेवानलमध्ये तु सन्निधीकृत्य पूजयेत् ।
ततोऽस्त्रमन्त्रजप्तेषु पात्रेषूद्धृत्य भक्तितः ॥ १२० ॥
पितृसन्धानसिद्ध्यर्थं नैवेद्यान्नचतुष्टयम् ।
व्यञ्जनादिसमायुक्तं मध्वाज्यतिलभावितम् ॥ १२१ ॥

संप्रोक्ष्य चानिरुद्धाद्यैर्मूलमन्त्रेण वै विभोः ।
संहारक्रमयोगेन एकैकं विनिवेद्य च ॥ १२२ ॥
ततोऽन्नपात्रमेकैकमानयेत्संस्कृतं पुरा ।
तथारूपं तु तं ध्यायेच्चतुर्धा भेदभावितम् ॥ १२३ ॥
बहुभिन्नाऽन्नशक्तिभ्य उत्तरोत्तरतां गताः ।
अनिरुद्धादिभेदेन वासुदेवावसानतः ॥ १२४ ॥
रसशक्तिश्च या चासौ साऽनिरुद्धो महामते ।
प्रद्युम्नो वीर्यशक्तिः स्यात् धृतिशक्तिस्ततोऽच्युतः ॥ १२५ ॥
आनन्दशक्तिर्याऽन्नोत्था वासुदेवस्तु स स्मृतः ।
एवं स्मृत्वा ततो ध्यात्वा मन्त्रैः स्वैः स्वैः पृथक् पृथक् ॥ १२६॥
न्यासमन्नशरीराणां देवानां विद्धि पूर्ववत् ।
हृदाद्यस्त्रावसानं च एवं मूर्तिमयं द्विज ॥ १२७ ॥
तन्नैवेद्यचतुष्कं तु लोलीभूतं गतं त्वपि ।
मन्त्रमित्यन्नभेदेन अर्घ्यपात्रादिना यजेत् ॥ १२८ ॥
नामगोत्रादिना प्राग्वद्देवेशं प्रीणयेत्ततः ।
ततोऽग्निस्थाच्युतस्याग्रे तृप्तस्याज्यादिना पुरा ॥ १२९ ॥
एवमेव चतुर्धा वै कृत्वा चान्नमयीं क्रियाम् ।
तत्रापि प्रीणनं कृत्वा पितृनाथस्य वै प्रभोः ॥ १३० ॥
त्वदग्रे प्रीतये पीत्वा पितृयागमिदं मया ।
कृतं मन्त्रात्मने हि त्वां....स्वधा ओं नमोनमः(?) ॥ १३१ ॥
हृन्मन्त्रेण ततो दद्यादेकैकस्य तिलोदकम् ।
अग्रतोऽन्नशरीरस्य मन्त्रमूर्त्यात्मनः पितॄन् ॥ १३२ ॥
अथाप्ययेन विधिना अन्नवीर्यमयान्पितॄन् ।
देवतामन्त्रचैतन्ये शान्तभावं गतान्स्मरेत् ॥ १३३ ॥
कर्मवाङ्मनसाभ्यां च यथा तदवधारय ।
किञ्चिच्च पूर्वं नैवेद्यादादायान्नं तु पाणिना ॥ १३४ ॥
तदूर्ध्वस्थेऽन्नकवले पूर्वमुच्चार्य मेळयेत् ।
नामगोत्रावसानं च पितृमन्त्रं पुरोदितम् ॥ १३५ ॥
अधीशमन्त्रं तदनु स्वधाम्नि व्रज वै पदम् ।

नमस्कारान्वितेनैवमुक्त्वैवं भावयेत्ततः ॥ १३६ ॥
प्रद्युम्नात्मनि संलीनमन्नवीर्यं(र्ये ?) शशिप्रभम्(भे ?) ।
पितरं(?) तारकाकारमनिरुद्धं ज्वलत्प्रभम् ॥ १३७ ॥
चिद्धर्मविभवोपेतमेवं कृत्वा ततो द्विज ।
मेळयेद्विधिनाऽनेन अन्नं प्रद्युम्नभावितम् ॥ १३८ ॥
सङ्कर्षणे महाधाम्नि वासुदेवे च तं पुनः ।
वासुदेवोऽपि भगवान् परस्मिन्नव्यये पदे ॥ १३९ ॥
शान्तेऽनन्ते तु पूर्वोक्ते यत्रस्थो न भवेत्पुनः ।
कृत्वैवं पितृसन्धानं हरेरग्रेऽग्निसन्निधौ ॥ १४० ॥
भोजनं च ततो दद्यात्पूजितानां पुरा द्विज ।
यथाक्रमं ततः पृच्छेत्तृप्तिमन्नपरां तु तान् ॥ १४१ ॥
स्वाचान्तानन्ततो दद्याद्विष्णोरग्रे तु दक्षिणाम् ।
हृन्मन्त्रेण तु तैर्वाच्या प्रीतिर्नारायणी परा ॥ १४२ ॥
ततः पूर्णाहुतिं दद्यात् क्षन्तव्यो द्विज मन्त्रराट् ।

[ पैतामहान्नशेषस्य जायायै प्रदानम् ]

प्राग्वन्ममेति(?)नैवेद्यं मूलमन्त्राभिमन्त्रितम् ॥ १४३ ॥
प्रयतायां तु जायायां दद्यात् क्षीराज्यभावितम् ।
सुतत्वेन तु संसिद्धिं तत्कुक्षौ चोपयान्ति च ॥ १४४ ॥
† अथ तेनोदकेनैव लक्ष्मीसौभाग्यभाजनम् ।

[ शेषान्नसंविभजनम् ]

ज्ञानधर्मक्रियासक्तस्सत्यव्रतपरायणः ॥ १४५ ॥
नियोजनादि वै कुर्यान्नैवेद्यस्यैव पूर्ववत् ।

[ पितॄणां विसर्जनप्रकारः ]

पादा(द्या ?)र्घ्यपात्रमुत्पाद्य हृन्मन्त्रेण तु वै पुरा ॥१४६ ॥
स्वमन्त्रेण पितॄन्सर्वांस्तत्रस्थान् खगतान् स्मरेत् ।

[ नेत्रावमार्जनम् ]

अथ तेनोदकेनैव नेत्रमन्त्रेण लोचने ॥ १४७ ॥

---

† अथेत्यादे श्लोकार्धस्य नियोजनादि वै कुर्यादित्यस्यानन्तरं पाठो युक्त' प्रतिभाति ।

अवमार्ज्योदकं तद्वै स्थाने निक्षिप्य पावने ।
इति मन्त्रमयश्राद्धं कुरुते सुगतिप्रदम् ॥ १४८ ॥

[ गुर्वादिश्राद्धस्य समयज्ञादिभिः कर्तव्यता ]

समयज्ञादिकैः कार्यं गुरूणामात्मसिद्धये ।
पित्रादीनां च स्वसुतैर्गुरुभिश्चानुकम्पया ॥ १४९ ॥
समयव्रतपूर्वाणां शिष्याणां भावितात्मनाम् ।
यद्यप्यनुप्रयोज्यं स्याच्छ्राद्धं सदीक्षितस्य च ॥ १५० ॥
क्रियासंज्ञेन तत्रापि कार्यमात्महिताप्तये ।
दीक्षासममिदं श्राद्धं कुरुतेः सुगतिप्रदम् ॥ १५१ ॥
सदैव दीक्षितानां च यागे यज्ञे च वैष्णवे ।
तस्मात्सर्वप्रयत्नेन यथालब्धेन केनचित् ॥ १५२ ॥
वस्तुनाऽपि पवित्रेण इदं श्राद्धं समापयेत् ।

[ श्राद्धानुष्ठानस्य प्रशंसा ]

कदन्नेन कुदेशे च अपात्रे चापि नारद ॥ १५३ ॥
ध्यानविज्ञानमन्त्राद्यैः संपाद्यं विद्धि शाश्वतम् ।
देशकाले तथा पात्रे श्रद्धापूतं तु किं पुनः ॥ १५४ ॥
वैष्णवः परमं पात्रं देश आयतनं हरेः ।
द्वादशी सर्वकालानामुत्तमा परिकीर्तिता ॥ १५५ ॥

इतिश्रीपाञ्चरात्रे जयाख्यसंहितायां श्राद्धविधानं नाम त्रयोविंशः पटलः ।

---

अथ संस्काराख्यानं नाम चतुर्विंशः पटलः ।

नारदः—

काम्यं (कव्यं ?) प्रेतं पितृश्राद्धं त्वत्प्रसादान्मया श्रुतम् ।
इदानीं श्रोतुमिच्छामि गतासूनां च संस्कृतिम् ॥ १ ॥
त्वच्छासनप्रपन्नानां कथयस्व समासतः ।
उदीरितं त्वया पूर्वं नोदितं च परिस्फुटम् ॥ २ ॥

भगवान्—

विपन्नं दीक्षितं ज्ञात्वा प्रार्थनीयो महागुरुः ।
स्नेहेन कृपया वाऽथ सह शिष्यैः कृतात्मभिः ॥ ३ ॥

यायात्कृताह्निकः शश्वद्भुक्तान्नो विशेषतः ।

[ शवसंस्कारविधानम् ]

प्रागुक्तया पुरा दृष्ट्या अवलोक्य च तं द्विज ॥ ४ ॥

[ शवस्य स्नपनालङ्करणे ]

दत्वाऽऽज्ञां तु समुत्थाप्य स्नापयेत्तु मृतं पुरा ।
अस्त्रमन्त्राभिजप्तेन गोमयेन मृदम्भसा ॥ ५ ॥
सुगन्धामलकैः स्नाप्य सर्वौषध्युदकेन च ।
चन्दनेन समालिप्य सबाह्लीकेन नारद ॥ ६ ॥
सकषाये सिते वाऽथ वाससी ह्यधरोत्तरे ।
परिधाप्योपवीतं च सोत्तरीयं तथा नवम् ॥ ७ ॥
पवित्रकद्वयं तत्र योज्याङ्गुल्योः कुशैः कृतम् ।
पुष्पस्रग्भूषितं कृत्वा स्थाप्य यन्त्रे पटावृते ॥ ८ ॥

[ शवस्य संस्कारस्थाननयनम् ]

गृहीत्वाऽथ स्वजातीयैर्दीक्षितैर्वाऽप्यदीक्षितैः ।
तन्नयेत्संस्कृतिस्थानमस्थ्यङ्गारादिवर्जितम् ॥ ९ ॥

[ संस्कृतिस्थानसमीकरणम् ]

उपलिप्य पुरा तद्वै समीकृत्य यथाविधि ।

[ भैक्षपात्रादिद्रव्याणा तदीयाना तच्छवेन सह नयनम् ]

भैक्षपात्रं तथा दण्डं स्रुक्स्रुवौ चाक्षसूत्रकम् ॥ १० ॥
पादुके आसनं चैव योगपट्टं तथैव च ।
दारवं भद्रपीठं च सार्घ्यपात्रं कमण्डलुम् ॥ ११ ॥
मांत्रोपकरणं सर्वं तदीयं मुनिसत्तम ।

[ तत्र वर्ज्यद्रव्याणि ]

हिरण्यवस्त्रशास्त्रैश्च घण्टया च विवर्जितम् ॥ १२ ॥
तच्छ्राद्धकाले दातव्यं तत्प्रीत्यर्थं हि कस्यचित् ।

[ प्रेतसंस्कारोपकरणद्रव्याणामग्रतो नयनम् ]

नयेत्तस्याग्रतः पुष्पमर्घ्याम्बुकुसुमादिकम् ॥ १३ ॥
उपयोज्यं च यत्तत्र अर्चने होमकर्मणि ।

अश्वत्थतरुसंभूता अष्टौ तीक्ष्णा हि शङ्कवः ॥ १४ ॥
अयत्नलब्धा विप्रेन्द्र अन्यस्माद्यतिनः स्वयम् ।
छिन्द्यादश्वत्थवृक्षं तु पालाशाद्यमभावतः ॥ १५ ॥
पीतं वा सुसितं सूत्रं क्षौमं कार्पासजं तु वा ।
समस्तधान्यानि तिलाः कृष्णास्सिद्धार्थकैर्युताः ॥ १६ ॥
प्रभूतमिन्धनं शुष्कं पालाशाद्यं च पावनम् ।
तत्र चैशानदिग्भागमासाद्योपविशेद्गुरुः ॥ १७ ॥

[ गुरुणाऽऽप्ययक्रमेण स्वाङ्गन्यासस्य कर्तव्यता ]

समलङ्कृत्य चात्मानमापादाच्च शिरोन्तिमम् ।
मन्त्रेणाप्यययुक्त्या वै षडङ्गविधिना पुरा ॥ १८ ॥

[ मृतेन योऽनुष्ठितो मन्त्रस्तेन प्रथम पूजनस्य कर्तव्यता ]

तदनुष्ठानसंज्ञेन प्रारम्भे पूजयेद्द्विज ।
परिशिष्टस्य वाऽन्यस्य आचार्यस्यापि कस्यचित् ॥ १९ ॥
शासनस्थस्य भक्तस्य मन्त्रे चाविदिते सति ।

[ तदपरिज्ञाने नारसिंह्ममन्त्रेण पूजनविधिः ]

प्रणवाद्यन्तरुद्धेन सामान्येन महात्मना ॥ २० ॥
नारसिंह्मेण चोग्रेण तस्योङ्कारः पुरा भवेत् ।
नमो भगवते कृत्वा नारसिंह्माय वै ततः ॥ २१ ॥
द्वादशाक्षरमन्त्रोऽयं सर्वैः सर्वत्र शस्यते ।
तन्नामपूर्ववर्णं तु दीर्घैः षड्भिर्विभेदितम् ॥ २२ ॥
तेषामाद्यावसाने तु प्रणवश्चापि योजयेत् ।
प्रकल्प्य चाङ्गषट्कं तु सामान्यस्य च संज्ञया ॥ २३ ॥

[ कुम्भस्थापनतत्पूजनविधिः ]

अन्तःस्थं पूजयित्वाऽऽदौ बहिस्तदनु पूजयेत् ।
प्रणवेन पुरा पीठं साधारं परिकल्पयेत् ॥ २४ ॥
तत्रार्चिते न्यसेत्पृष्ठे कलशं वारिपूरितम् ।
समायं (सामयं ?) विन्यसेन्मन्त्रं विलोमोच्चारयोगतः ॥ २५ ॥
अस्त्राद्यमङ्गषट्कं तद्वैपरीत्येन विन्यसेत् ।

हृद्यस्त्रं हृदयं चास्त्रे यथा भवति नारद ।। २६ ॥
कृत्वैवं कलशे न्यासं तं यजेद्विधिना ततः ।
तत्रास्त्रकलशं कुर्यादासनं तत्र कल्पयेत् ।। २७ ॥
फट्कारेण तु चक्राख्यं केवलं रक्तरूपधृक् ।
नाभिनेमिविहीनं तु तदूर्ध्वे कलशं न्यसेत् ।। २८ ॥
पुष्पार्घ्यधूपैर्लिख्या च अस्त्रमन्त्रं तदन्तरे ।
विसर्गफट्पदाद्यं तु वैपरीत्येन चोच्चरेत् ।। २९ ॥
बलिदानावसानं तत्पूजयित्वा ततो द्विज ।

[ अथ मण्डले (स्थंडिले) पूजनविधानम् ]

तदग्रे भद्रपीठं तु योजयेत्तदभावतः ।। ३० ॥
भूमावुपरि विन्यस्य आधारं प्रणवेन तु ।
ऐश्वर्याद्यं तदूर्ध्वे तु धर्मान्तं चाथ विन्यसेत् ।। ३१ ॥
हृन्मन्त्रेण तदूर्ध्वे तु शेषं सप्रणवेन तु ।
कल्पयेन्मुनिशार्दूल रत्नपुञ्जनिभं महत् ।। ३२ ॥
हृदयाच्चैव तत्पृष्ठे मन्त्रमावाह्य विन्यसेत् ।
केवलं लयदेहं तु पूर्वोच्चारक्रमेण तु ॥ ३३ ॥

[ कुण्डे हवनविधानम् ]

पूजयित्वा यथान्यायं तदग्रेऽथ प्रकल्पयेत् ।
प्रमाणरहितं कुण्डमेकं मेखलयाऽन्वितम् ॥ ३४ ॥
तत्संस्कृत्य पुरा तत्र गगनादवतार्य च ।
सूर्यकान्तेन मणिना वैष्णवं जातवेदसम् ।। ३५ ॥
लौकिकं तदभावाच्च आनाय्य तु तथा स्मरेत् ।
तत्र दर्भास्तरं दद्यात्रिधा दिक्ष्वन्तरा ग्रहम् (?) ॥ ३६ ॥
संस्कृत्य पावकं प्राग्वन्नमोऽन्तं जुहुयात्ततः ।

[ होमः ]

मूलमन्त्रं शतं साष्टं तिलैराज्येन वै तथा ।। ३७ ॥
संहारक्रमयोगेन स्मृत्वा मन्त्रं ततोऽन्तगम् ।
दद्यात्पूर्णाहुतिं विप्र ततश्चार्घ्याम्बुना तु वै ॥ ३८ ॥

[ अथ शवस्य प्रोक्षणादि ]

तं शवं प्रोक्षणीयं च ताडयित्वाऽवलोक्य च ।
चक्षुषा ज्ञानपूर्णेन करुणानुगतेन च ॥ ३९ ॥
दत्वाऽर्घ्यपुष्पे शिरसि दूरस्थश्चास्पृशंश्च तम् ।
आनाय्य पृष्ठदेशं तु कलशाभ्यां द्विजोत्तम ॥ ४० ॥
आसने त्वपकृष्टे तु कायं सन्धाय केनचित् ।
तं वीक्षमाणः कुण्डस्थो गुरुस्तूपविशेत्ततः ॥ ४१ ॥
प्राक्कर्मपरिशुद्धं तु मृतं संस्कारवर्जितम् ।

[ आह्वानपूर्वक जीवस्य शवशरीरे योजनविधानम् ]

जीवं च केवलीभूतं सामीप्यपदवीगतम् ॥ ४२ ॥
मन्त्रेणाहूय देहस्थं कृत्वा तदनु योजयेत् ।
पूर्ववच्छवपिण्डे तु रत्नदीपोज्ज्वलप्रभम् ॥ ४३ ॥

[ जीवाह्वानमन्त्र' ]

प्रणवान्तं (न्ते ?) शिखाबीजं संज्ञां तदनु योजयेत् ।
तदन्ते तु शिखाबीजं प्रभा(ण ? )वान्तं न्यसेत्पुनः ॥ ४४ ॥
आगच्छ... नेतस्य प्रविश्या(शा ?)थ नियोजयेत् ।
एवं स्वस्थानगं कृत्वा जीवं शुक्रगतं त्विह ॥ ४५ ॥

[ स्वस्थान गमितस्य जीवस्य परतत्त्वे सयोजनाविधानम् ]

व्यापारशक्तिसंयुक्तं काष्ठस्थमिव पावकम् ।
दीक्षाख्येन क्रमेणास्य लयहोमस्तु केवलः ॥ ४६ ॥
कर्तव्यो गुरुणा सम्यक् पृथिव्यादिक्रमेण तु ।
परे तत्त्वे तु संयोज्य पूर्णाहुत्या तु पूर्ववत् ॥ ४७ ॥

[ अथ चिताकल्पनविधानम् ]

दक्षिणेनात्मनश्चाथ प्रोक्ष्य क्ष्मामस्त्रवारिणा ।
तिलैः सिद्धार्थकैर्धान्यैर्मिश्रीभूतैस्तु नारद ॥ ४८ ॥
नाभिनेमिविहीनं च कालचक्रं समापयेत् ।
वामावर्तद्विषट्कारं त्रिकोणं तद्बहिः पुरः ॥ ४९ ॥
तद्देहवर्णज्वालाढ्यं स्वस्तिकत्रितयान्वितम् ।
तद्बहिश्चतुरश्रं च पञ्चरङ्गोज्ज्वलं पुरम् ॥ ५० ॥

पञ्चरेखान्वितं कुर्याद्वज्राष्टकविभूषितम् ।
विलोमगत्या वामेन पाणिना पातयेद्रजः ॥ ५१ ॥
विमानवच्चितिं काष्ठैर्विचिन्वीयात्पुराऽऽहृतैः ।
गोमयैर्वा द्विजारण्यसंप्राप्तैः कुशमिश्रितैः ॥ ५२ ॥
अन्तकाशादितश्चाथ नैर्ऋत्यान्तं तु शङ्कवः ।
रोपणीया हि सूत्रेण त्रिरावृत्तेन वेष्टयेत् ॥ ५३ ॥

[ सर्वस्य पूजाद्रव्यस्योपसहृतस्य कुण्डाग्नौ प्रक्षेपः ]

पूजाद्रव्यं समस्तं च नैवेद्यान्तं हि नारद ।
उपसंहृत्य जुहुयादग्नौ कुण्डगते ततः ॥ ५४ ॥

[ कुम्भादिस्थानान्मन्त्रस्योत्सर्जनम् ]

विसर्ज्य मन्त्रं कुम्भस्थं भद्रपीठाग्निमध्यगम् ।
स्नात्वा तु सेचयेद्भूमिं कलशस्थेन चाम्भसा ॥ ५५ ॥

[ शवस्य चितायामारोपणम् ]

सासनं च ततः शावं दक्षिणाभिमुखं ततः ।
चितोपरि स्थितं कुर्यात्

[ योगपट्टादीनां शवस्य कण्ठादिस्थानविशेषे स्थापनम् ]

तस्य कण्ठे विनिक्षिपेत् ॥ ५६ ॥
विततं योगपट्टं च दक्षिणे चाक्षसूत्रकम् ।
वामहस्तेऽर्घ्यपात्रं तु प्रणीतां च कमण्डलुम् ॥ ५७ ॥
वामतः पादुके छत्रं उष्णीषं दक्षिणे न्यसेत् ।
अग्रतो भद्रपीठं च शङ्खमुद्रादिकं च यत् ॥ ५८ ॥
संपूज्य पुष्पधूपाद्यैश्चन्दनेन तु तां चिताम् ।

[ चिताप्रज्ज्वालन पूर्णाहुतिश्च ]

प्रज्वाल्य दर्भपुञ्जीलं कुण्डस्थेन तु वह्निना ॥ ५९ ॥
ज्वालयेद्दक्षिणाशां च वीक्षमाणस्तु तां चिताम् ।
गुरुश्चाभिमुखः स्थित्वा तस्य पूर्णाहुतिं क्षिपेत् ॥ ६० ॥
मूर्ध्नि वा वक्त्रविवरे त्यजेत्तत्रैव स्रुक्स्रुवौ ।

[ चितापरिभ्रमणपूर्वकमस्त्रकलशस्य वियति प्रक्षेपविधिः ]

ततोऽस्त्रकुम्भमादाय वरुणाशादितो द्विज ॥ ६१ ॥
विक्षिपन्नौदकीं धारां वामतश्च परिभ्रमेत् ।
दिशि क्षिपेद्दक्षिणस्यां कलशं गगनोपरि ॥ ६२ ॥

[ अथ स्नानविधानम् ]

तत्र संरक्षकान्दत्वा गुरुर्यायाज्जलाशयम् ।
सचेलं जलमाविश्य मनसा चोपसंहरेत् ॥ ६३ ॥
पूर्वोक्तं विग्रहन्यासं स्नात्वाऽथ विधिना ततः ।
स्नानमाचमनाद्यं तु कृत्वा दद्याज्जलाञ्जलिम् ॥ ६४ ॥
उत्तीर्य परिधायान्यदम्बरं शुचि निर्मलम् ।

[ गुर्वादिभिः कर्तव्यो जपविधिः ]

प्राङ्मुखस्त्वासने स्थित्वा मनसा नृहरिं मुने ॥ ६५ ॥
जपेदष्टाधिकं भक्त्या सहस्रं ध्यानसंयुतम् ।
वोढारस्तु तदर्धं च तदर्धं भाण्डवाहकाः ॥ ६६ ॥

[ नक्त भगवतो यजनस्य कर्तव्यता ]

प्राप्ते नक्तं जपान्ते वा विशेषादच्युतं यजेत् ।
जपहोमावसाने च समश्नीयात्ततो गुरुः ॥ ६७ ॥
तद्बान्धवैः स्वशिष्यैस्तु [1]संवृतः शोकशान्तये ।

[ अस्थिसञ्चयनम् ]

अस्थिसङ्घटनं कुर्यात्तृतीयेऽह्नि समागते ॥ ६८ ॥
इष्ट्वा( ष्ट्वा ? )पूर्तीश्वरीं( ? )पूर्वं पुष्पार्घ्यबलिधूपकैः ।
विमलाम्भसि निक्षिप्य अगाधे वा नदीजले ॥ ६९ ॥
भूमावथ कृते खाते ह्यधस्ताद्विनिवेशयेत् ।
न दीक्षितानां विप्रेन्द्र क्षिपेदस्थि ततस्ततः ॥ ७० ॥
इत्येष वैष्णवानां च सद्भक्तानां मयोदितः ।

[ शवसंस्कारस्य सर्वैरवश्यकर्तव्यता ]

देहपातिकसंस्कारो ह्यपवर्गफलप्रदः ॥ ७१ ॥
अनुष्ठेयस्ततस्तस्माच्छिष्याणां गुरुणा सदा ।
सच्छिष्यैर्वा गुरूणां तु स्त्रीणामथ महामते ॥ ७२ ॥
दीक्षितानां महायागे मात्रोपकरणं विना ।
संस्काराश्चाखिला मन्त्राः पित्राऽथ गुरुणाऽथवा ॥ ७३ ॥
आत्मजेनाथ पत्न्या वा कार्यश्चादीक्षितैरपि ।
कृपयाऽघविघातार्थमसन्दिग्धतया धिया ॥ ७४ ॥

[ यतिधर्माश्रयाणा दाहे विशेषः ]

यतिधर्माश्रयाणां तु कर्मसन्यासिनां च वै ।
दाहमात्रं तु विहितं मन्त्रपूजाविवर्जितम् ॥ ७५ ॥

[ परोक्षतो मृताना सस्कारविधानप्रकारः ]

परोक्षतो विपन्नानां विधानमधुनोच्यते ।
येन याति पदं विष्णोः पदं योऽन्यतरस्थितः ॥ ७६ ॥
यदैव दीक्षितस्तिष्ठेच्छासनेऽस्मिन्मयोदिते ।
तदैवाप्तं मुनिश्रेष्ठ तैः पदं विमलं मम ॥ ७७ ॥
किं तु ये दीक्षिताः पूर्वं न निर्व्यूढास्सदाऽर्चने ।
म्रियन्ते चाकृतार्थाश्च समयज्ञास्तु पुत्रकाः ॥ ७८ ॥
ते स्वकर्मवशं यान्ति किञ्चित्स्थानमशाश्वतम् ।
भूयस्तस्माच्चिरेणैव केनचिद्विग्रहात्मना ॥ ७९ ॥
काले शुभे शुभे देशे उत्पद्यन्तेऽशुभेऽथवा ।
पुण्यं कुर्वन्ति वा पापं देशे काले तयोर्वशात् ॥ ८० ॥
शुभेन कर्मणा स्वर्गमशुभेनाप्नुवन्त्यधः ।
एवमस्थितिमाप्नोति उपसंहृत्य दीक्षितः ॥ ८१ ॥
मृतश्चापि परोक्षे तु यदा वै गुरुणा तदा ।
कृपात्मना समर्थेन कार्यमुद्धरणं महत् ॥ ८२ ॥
शरीरधर्मसंस्थेन यथा तदवधारय ।
विधिवन्मरणं ज्ञात्वा पुरा भक्तस्य कस्यचित् ॥ ८३ ॥
स्वकाह्निकावसाने तु यजेदर्चादिषु प्रभुम् ।
विशेषविहितेनैव कर्मणा होमपश्चिमम् ॥ ८४ ॥
श्वेतां मृदमथालोड्य पञ्चगव्येन चाम्भसा ।
द्वादशाङ्गुलमात्रं तु मूर्तिं कृत्वा तदाकृतिम् ॥ ८५ ॥
आपादाच्चूलिकान्तं च सर्वाङ्गावयवान्विताम् ।
पलाशाश्वत्थवल्कोत्थदारुणा पल्लवेन वा ॥ ८६ ॥
तामग्नेः कुण्डदेशस्थां कृत्वा यन्त्रकृतां पुरा ।
प्रणवेन तु सास्त्रेण प्रोक्षयेत्सप्तधाऽम्बुना ॥ ८७ ॥
अर्घ्यपात्रोद्धृतेनैव त्रिधाऽथ द्वादशात्मना ।

फडन्तेन द्विधा ताड्यं त्र्यक्षरेणार्घ्यतण्डुलैः ॥ ८८ ॥
कुसुमैरथ पत्रैर्वा दर्भकाण्डयुतेन तु ।
ततोऽवलोकनं कुर्यान्मन्त्रवित् ज्ञानचक्षुषा ॥ ८९ ॥
साधिभूतमथाध्यात्मस्वरूपं तत्त्वसंग्रहम् ।
ततः सृष्टिक्रमेणैव विनिवेश्य यथा पुरा ॥ ९० ॥
स्थानलक्ष्यक्रमेणापि ध्यानमार्गेण देशिकः ।
होमं कृत्वा यथान्यायं त्रिद्व्येकाहुतिभिस्तु वा ॥ ९१ ॥
तत्त्वार्णमभिधायुक्तं मूलसंपुटयोगतः ।
आयाहिपदसंमिश्रं ज्ञात्वा देहि(ह्य?)भिसन्धये ॥ ९२ ॥
तत्त्वं तत्त्वं क्रमेणैव प्रागुक्तविधिना मुने ।
ततो हृत्पुण्डरीकस्थं मन्त्रं ध्यायेच्च सर्वगम् ॥ ९३ ॥
तज्जीवानयने सम्यक् बन्धकक्ष्यसमन्वितम् ।
करुणानन्दसंपूर्णं महामाणिक्यदीधितिम् ॥ ९४ ॥
विज्ञाप्य मनसा तूर्णं त्रिधा स्मृत्वा पुराऽमलम् ।
महाविभूते षाड्गुण्यशरीर परमेश्वर ॥ ९५ ॥
तदन्ते मूलमन्त्रस्तु संस्मरेन्मूर्तिसंयुतम् ।
यत्र कुत्रचिदादाय पदश्चावस्थितं ततः ॥ ९६ ॥
तदन्तेऽमृतबीजं तु व्योमेशे भूषितं स्मरेत् ।
आनयेति द्विधा योज्यं तत्संज्ञां तदनु द्विज ॥ ९७ ॥
नमस्कारान्वितं मन्त्रमिदं वै रोचयेद्बहिः ।
स्मरेत्संपूरितं तेन यदूर्ध्वे यच्च विद्यते ॥ ९८ ॥
तिर्यक् पृष्ठे पुरस्ताच्च आब्रह्मभवनान्तिमम् ।
स्वतेजसा समाकृष्य जीवं दूरस्थितं त्वपि ॥ ९९ ॥
क्षिप्रं द्विज स्वसामर्थ्यात्पतङ्गं पावके यथा ।
ततस्तमात्मसात्कुर्यान्मन्त्रं जीवसमन्वितम् ॥ १०० ॥
मन्त्रमात्मनि संशोध्य जीवं प्रतिकृतौ न्यसेत् ।
प्राग्वत्सन्धानयोगेन प्रतिष्ठोक्तेन नारद ॥ १०१ ॥
ततस्तस्य विधानेन तत्त्वदीक्षां समापयेत् ।
प्रागुक्तेनाथ योगेन योजयेच्छाश्वते पदे ॥ १०२ ॥

पूर्णाहुतिप्रदानेन ततः प्रतिकृतिं दहेत् ।
तस्माच्चैवाग्निकुण्डात्तु मन्त्रे चोत्थापिते सति ॥ १०३ ॥
पश्चात्स्नानादिकं सर्वं पूर्वोक्तं तु समाचरेत् ।
समस्तदोषशान्त्यर्थं प्रायश्चित्तं चरेत्ततः ॥ १०४ ॥
स्वस्थोऽन्यस्मिन्दिने विप्र समर्थो वाऽथ तद्दिने ।

इति श्रीपाञ्चरात्रे जयाख्यसंहितायां संस्काराख्यानं नाम चतुर्विंशः पटलः ।

अथ प्रायश्चित्तविधिर्नाम पञ्चविंशः पटलः ।

नारदः—

भगवन् श्रोतुमिच्छामि प्रायश्चित्तविनिर्णयम् ।
कृताकृतानां सर्वेषां शान्तये वैष्णवस्य च ॥ १ ॥

श्रीभगवान्—

मार्गस्थो मुनिशार्दूल लुप्ताचारो व्रजत्यधः ।
पालनीयस्त्वतस्तस्मादाचारः साधुसेवितः ॥ २ ॥
दैवाद्रोगात्तथा मोहवशाद्दोष उपागतः ।
जपेन क्षालनीयोऽसौ दानेन हवनेन च ॥ ३ ॥
तपसाऽपि मुनिश्रेष्ठ ज्ञात्वा कर्मबलाबलम् ।

[ सन्ध्यालोपे प्रायश्चित्तम् ]

आरम्भसन्ध्यालोपेषु मूलमङ्गसमन्वितम् ॥ ४ ॥
सत्यादिपञ्चकोपेतं सरुजश्च सकृत्सकृत् ।
अरुजः सत्यबीजं तु शतमष्टाधिकं जपेत् ॥ ५ ॥
जपावसानात्तत्कुर्यात्सन्ध्याकर्म द्विजाखिलम् ।

[ सन्ध्यात्रयलोपे प्रायश्चित्तम् ]

लुप्ते सन्ध्यात्रये चैव नीरुजस्तु जपेत्सदा ॥ ६ ॥
षट्शतानि तु मूलस्य मूर्तिमन्त्रान्वितस्य[1] च ।
सरुजश्चाङ्गषट्काढ्यं मूलमूर्तियुतं त्रिधा ॥ ७ ॥
जपेद्वा नित्यशान्त्यर्थमन्येषां दोषमाप्नुयात् ।

[ अनेकदिनेषु सन्ध्यालोपे प्रायश्चित्तम् ]

अनेकदिनशो भ्रंशः सरुजस्य यदा भवेत् ॥ ८ ॥

1 न्त्रोज्झित S.

स्नात्वा निवृत्तरोगोऽसौ पूजयित्वा जगत्प्रभुम् ।
जपित्वैकसहस्रं च भूयः पूजाग्नितर्पणम् ॥ ९ ॥
कुर्याच्चैव जपार्धेन नीरुजस्याथ कीर्त्यते ।
द्विस्त्रिस्तथैकरात्रं वा यथाशक्त्याऽथ मन्त्रराट् ॥ १० ॥
जप्योऽयुतद्वयं पश्चात्पूजा कार्या विशेषतः ।
तिलानामाज्यसिक्तानां सहस्रैकं तु होमयेत् ॥ ११ ॥
वैष्णवान्भोजयेत्पश्चाच्छक्त्या त्र्येकसङ्ख्यया ।

[ प्रमादादशुचिसंस्पृष्टान्नभक्षणे अन्यस्त्रीसेवने च प्रायश्चित्तम् ]

प्रमादाद्यदि विप्रेन्द्र अज्ञात्वा भक्षितं पुरा ॥ १२ ॥
स्पृष्टमन्नादिकं चैव मदिरासेवकादिभिः ।
रेतोमूत्रपुरीषैर्वा शुककाकावलीढितम् ॥ १३ ॥
विड्वराहैरथो गृध्रगोमायुकपिकुक्कुटैः ।
संस्पृष्टमन्त्यजेनापि शूद्राद्युच्छिष्टदूषितम् ॥ १४ ॥
अभोज्यान्नं तु वा भुक्त्वा सेवित्वाऽन्यस्त्रियं तु वा ।
स्नात्वा भुक्त्वा त्वहोरात्रं पञ्चगव्यं समाचरेत् ॥ १५ ॥
सहस्रं प्रतिसन्ध्यं च सिंहमन्त्रं जपेद्बुधः ।
दिनत्रयं नक्तभोजी त्रिस्नायी ध्यानतत्परः ॥ १६ ॥
इष्ट्वा देवं चतुर्थेऽह्नि सहस्रं होमयेत्ततः ।
पूर्ववद्भोजनं दत्वा नक्ताशी शुध्यते द्विजः ॥ १७ ॥

[ तत्र क्षत्रियवैश्यशूद्राणां विशेषाः ]

नारायणैकचित्तस्य नृपस्यैवं विनिर्दिशेत् ।
द्विधा स्नानं तु वैश्यस्य सकृच्छूद्रस्य कीर्तितम् ॥ १८ ॥
क्रमतो द्विगुणो जापः सर्वेषां परिकीर्तितः ।

[ उक्तप्रायश्चित्ताङ्गभूतपञ्चगव्यविधानम् ]

क्षीरं दधि घृतं चैव गोमूत्रं गोशकृत्कुशान् ॥ १९ ॥
तोयं ताम्रमये पात्रे कृत्वाऽथ परिजप्य च ।
एकैकं शतजापेन मूलाद्यस्त्रावसानिकैः ॥ २० ॥
स्नात्वा पीत्वा त्रिरात्रं तु कृत्वा योन्तो (न्योऽ ?) पि तं पिबेत् ।
ध्यायेज्जपेत् नृसिंहं तु पूजयेच्चापि नारद ॥ २१ ॥

तस्यापि नाशमायाति महापातकसञ्चयः ।
स्तेयं गुरुस्त्रीसंभोगः सुरापानादिकं च यत् ॥ २२ ॥

[ कामतो ब्राह्मणवधे प्रायश्चित्तम् ]

कामतो ब्राह्मणं हत्वा गवां मध्यस्थितो जपेत् ।
अतन्द्रितः सिंहमन्त्रमनिशं वत्सरद्वयम् ॥ २३ ॥
अयाचितान्नलब्धाशी त्रिस्नायी न्यासकृत्सदा ।
वत्सरद्वितयस्यान्ते तीर्थं वाऽऽयतनं व्रजेत् ॥ २४ ॥
ततः कुर्याद्व्रतं शक्त्या कृच्छ्रचान्द्रायणादिकम् ।
व्रतान्ते नवनाभेन दीक्षयेत्पुनरेव हि ॥ २५ ॥
सर्वस्वं च गुरोर्दद्याद्भक्तानां च तदाज्ञया ।

[ सुरापानप्रायश्चित्तम् ]

सुरां पीत्वा तु तामन्ते जपेत्सत्यमहर्निशम् ॥ २६ ॥
त्र्यहं त्वनश्नन्नन्ते तु कं पिबेत् सिह्मतापितम् ।
स्थित्वा चायतने विष्णोः सहस्रैकं जपेद्बुधः ॥ २७ ॥

[ स्वर्णस्तेयादौ प्रायश्चित्तम् ]

स्तेयं च कामतः कृत्वा हेमभूम्यादिकं तु वै ।
ज्ञात्वाऽनुतापसन्तप्तो मन्त्रेशं कापिलं जपेत् ॥ २८ ॥
पञ्चायुतप्रमाणेन विजनस्थः समाहितः ।
पयोमूलफलाहारः शुध्यत्यन्तेऽर्चने हुतौ ॥ २९ ॥
कामतः सन्त्यजेद्भूयो द्रव्यमेतत्समाहृतम् ।
द्विगुणं तदभावाच्च जपं पूर्वोदिताच्चरेत् ॥ ३० ॥

[ गुरुपत्नीगमने प्रायश्चित्तम् ]

सिह्मं गुरुस्त्रीगमने ह्यकामाज्जनवर्जिते ।
भैक्षाहारो जपेन्मौनी शुद्धये त्वयुतत्र(द्व?)यम् ॥ ३१ ॥
प्रख्यातौ कामतो लक्षस्सकामश्च रहस्यपि ।
अयुतद्वितयं सार्धं जप्त्वा शुध्यति नान्यथा ॥ ३२ ॥
एकान्ते कामतो गत्वा सार्धं चैवायुतद्वयम् ।
अकामतः प्रकाशे तु जप्त्वाऽयुतचतुष्टयम् ॥ ३३ ॥
अप्रकाशे प्रकाशे वा कामतोऽकामतोऽपि वा ।
जपान्ते यागहोमौ च कृत्वा शुध्यति नान्यथा ॥ ३४ ॥

दीक्षोपकरणादीनामभावाद्विजसत्तम ।
गुर्वङ्गनामसक्तश्च लक्षजापाच्च शुध्यति ॥ ३५ ॥

[ रजस्वलास्पृष्टान्नभक्षणे प्रायश्चित्तम् ]

अन्नं रजस्वलास्पृष्टं भुक्तं चेद्यदि कामतः ।
जप्त्वाऽस्त्रमन्त्रं साष्टं च शतं चैवाभिशुध्यति ॥ ३६ ॥
कामतस्त्रिगुणं चैव जपं कुर्यादतन्द्रितः ।

[ लिङ्गमूर्तये विनियुक्तान्नस्य भक्षणे प्रायश्चित्तम् ]

यल्लिङ्गमूर्तौ रुद्रस्य दत्तमश्नाति वैष्णवः ॥ ३७ ॥
तत्स्पृष्टं वा प्रमादेन सिंह्मपञ्चशतं जपेत् ।
कामतो द्विगुणश्चैव स्नातो होमाच्च शुध्यति ॥ ३८ ॥

[ विष्णुनिवेदितस्यान्नस्यायोग्ये देशे पात्रे वा प्रक्षेपे प्रायश्चित्तम् ]

विष्णोर्निवेदितं प्राश्यं निक्षिपेद्यत्र कुत्रचित् ।
अयोग्यस्याथ वा दद्यात्सिंहस्याष्टशतं जपेत् ॥ ३९ ॥

[ आशौचान्नभक्षणे प्रायश्चित्तम् ]

मृतके मुनिशार्दूल भुक्त्वा चैवाथ सूतके ।
कामतः सिंहमन्त्रं तु सहस्रं परिवर्तयेत् ॥ ४० ॥
अकामतस्तदर्धं वै जपेत्तन्नियतः शुचिः ।

[ पतिताद्यन्नभक्षणे प्रायश्चित्तम् ]

भक्तं च पतितानां तु गणिकानां च वै द्विज ॥ ४१ ॥
गणान्नमथवा भुक्तं पञ्च षट् सप्त वै शतम् ।
नृसिंह्मकपिलक्रोडमन्त्राणां क्रमशो जपः ॥ ४२ ॥

[ सीमन्तादिसंस्कारान्नभक्षणे प्रायश्चित्तम् ]

यः सीमन्ते प्रभुङ्क्ते तु स च नक्तागमे जपेत् ।
द्वे शते अनिरुद्धाख्यबीजस्य ध्यानतत्परः ॥ ४३ ॥
नामधेयाख्यसंस्कारे प्रद्युम्नं द्विशतं जपेत् ।
अन्नप्राशनसंस्कारे जपेत्संकर्षणं शतम् ॥ ४४ ॥
शेषेषु वासुदेवाख्यं बीजमावर्तयेच्छतम् ।

[ सद्यःश्राद्धाद्यन्नभोजने प्रायश्चित्तम् ]

यः पञ्चत्वं प्रयातस्य भुङ्क्ते संवत्सरावधि ॥ ४५ ॥
सद्यःश्राद्धात्समारभ्य स सिंहस्यायुतं जपेत् ।

[ सच्छूद्रान्नभक्षणे प्रायश्चित्तम् ]

कामतोऽकामतो वाऽपि सच्छूद्रान्नस्य भक्षणात् ॥ ४६ ॥
सहस्रमर्धं क्रमशो ह्यस्त्रमन्त्रं जपेद्बुधः ।
एतच्चतुर्गुणं विद्यादसच्छूद्रान्नभक्षणात् ॥ ४७ ॥
वान्ते मन्त्रं तु वाराहं त्रिशतं परिवर्तयेत् ।
स्नात्वा तन्मान्त्रितं पीत्वा पञ्चगव्यं तु वा द्विज ॥ ४८ ॥
अवैष्णवप्रतिष्ठायां यज्ञे वाऽवैष्णवे त्वपि ।
भुङ्क्ते हृदयमन्त्रस्य जपेत्पञ्चशतं तु वै ॥ ४९ ॥

[ आरामादौ भोजनप्रायश्चित्तम् ]

आरामवृक्षकूपेषु बाह्ये वा सुगतालये ।
प्रपातटाकयोर्मोक्षे गोदाने वृषमोक्षणे ॥ ५० ॥
विवाहे वरणे वाऽथ भुङ्क्ते गत्वा परे गृहे ।
जपेत्साष्टशतं मन्त्री सिंहमन्त्रमतन्द्रितः ॥ ५१ ॥
अवैष्णवाग्रतो भुक्त्वा पथि साष्टशतं जपेत् ।

[ नैष्ठिकाद्यन्नभक्षणे प्रायश्चित्तम् ]

कामतो नैष्ठिकान्नं तु वणिगन्नं तु वा द्विज ॥ ५२ ॥
भुक्त्वा जपेन्मूर्तिमन्त्रं सहस्रपरिसङ्ख्यया ।
अकामतस्तदर्धं तु लिङ्गिनामेवमेव हि ॥ ५३ ॥

[ मधुमासयोर्दर्शने प्रायश्चित्तम् ]

निषेधान्मधुमांसाभ्यां प्रमादाद्दर्शनं कृतम् ।
सिंहस्याष्टशतं जापात्स दोषः शतधा व्रजेत् ॥ ५४ ॥

[ नियमात्प्रच्यवे प्रायश्चित्तम् ]

मैथुनाहारपानादिनियमस्याप्यरक्षणात् ।
अस्त्रमन्त्रशतं सार्धं जपन्यासे कृते सति ॥ ५५ ॥
भैक्षान्नभक्षलोभाच्च एवमेव प्रकीर्तितम् ।
अधश्शयनसङ्कल्पलोपादस्त्रं जपेच्छतम् ॥ ५६ ॥
गृहभूतपिशाचादिविच्छेदे तु कृते सति ।
मूलमन्त्रं शतं साष्टं जपेद्हृत्संपुटीकृतम् ॥ ५७ ॥

[ ज्ञानप्राप्त्यादेरन्यत्र नृत्तगीतादिकरणे प्रायश्चित्तम् ]

ज्ञानप्राप्तौ प्रतिष्ठायां प्रक्रान्ते विष्णुजागरे ।

प्राप्ते चायतने तीर्थे शास्त्रे सन्मार्गदर्शने ॥ ५८ ॥
गुरोर्विपत्तिश्रवणात्संप्राप्ते दशमे पुनः ।
एभिर्विना नृत्तगीते कृत्वा सप्तशत जपेत् ॥ ५९ ॥
उपरोधादथ स्नेहात्कृत्वा शान्तिकपौष्टिके ।
शतत्रयं च वाराहं जप्त्वा मन्त्रेशमर्चयेत् ॥ ६० ॥

[ सूतकादौ शान्तिकादिकर्मसु पूजास्वीकारे प्रायश्चित्तम् ]

सूतके मृतके चैव वर्तमाने तु नारद ।
कामतः पूजितो मन्त्री शान्तिकादौ तु कुत्रचित् ॥ ६१ ॥
जपेत्पञ्चशतं[1] [चात्र] सिह्ममन्त्रस्य भक्तितः ।
शतत्रयमकामश्च प्रायश्चित्तविधौ जपेत् ॥ ६२ ॥

[ उच्चाटनादिकरणे प्रायश्चित्तम् ]

उच्चाटनादीन्कृत्वा वै इच्छयाऽस्त्रं द्विजोत्तम ।
अयुतार्धं पुरावर्त्यं तदर्धं चाप्यकामतः ॥ ६३ ॥
न मारणं तु मन्त्रेण कुर्यान्मन्त्री कदाचन ।

[ चैत्यादिषु देवप्रतिष्ठाकरणे प्रायश्चित्तम् ]

देवप्रतिष्ठां दीक्षां च कृत्वा चैत्यादिषु त्रिषु ॥ ६४ ॥
सङ्कर्षणादिकांस्त्रीन्वै क्रमशः परिवर्तयेत् ।
एकद्वित्रिशतैः सार्धैः कुर्याद्धवनपूजने ॥ ६५ ॥

[ पट्टादिप्रतिग्रहे प्रायश्चित्तम् ]

पट्टः कार्पासकौर्णश्च क्षौममार्जं तु वेष्टनम् ।
चर्म प्रतिग्रहेणैव गृहीत्वा यत्र कुत्रचित् ॥ ६६ ॥
हृदाद्यस्त्रावसानं षट् जपेद्वै षट्शतादितः ।
क्रमशस्त्वेकहान्या तु एकैकस्मिंस्तु नारद ॥ ६७ ॥
कामतोऽकामतश्चैव अर्धमर्धं पुरोदितात् ।

[ क्षीरादिप्रतिग्रहे प्रायश्चित्तम् ]

क्षीरं दधि घृतं चैव तदुत्थमपि यद्द्विज ॥ ६८ ॥
लवणं मधु तैलं च सर्वमिक्षुसमुद्भवम् ।
गृहीत्वाऽस्त्रसमायुक्तं वराहं त्रिशतं जपेत् ॥ ६९ ॥

1 त्पञ्चशतीर्वात्रिः A त्पञ्चदशीर्वात्रि. CL.

[ रत्नादिपरिग्रहे प्रायश्चित्तम् ]

रत्नानि रजतं हेम विद्रुमं मौक्तिकं तथा ।
गृहीत्वा कापिलं मन्त्रं जपेत्कामाच्छतत्रयम् ॥ ७० ॥
अकामाच्च तमेकं तु जपेद्ध्यानपरायणः ।
ताम्रादिलोहमादाय नृपशैलादिधातुकान् ॥ ७१ ॥
कामतोऽकामतो जप्यो नृसिंह्यो द्वे शते शतम् ।

[ गवादिप्रतिग्रहे प्रायश्चित्तम् ]

[1]गामश्वं वृषभं हस्तिं स्त्रियोऽवाश्वतरं तु वा ॥ ७२ ॥
गृहीत्वा नृहरिर्जप्यः कामतोऽष्टशतं मुने ।
शतत्रयमकामेन सोपवासस्त्वसौ जपेत् ॥ ७३ ॥

[ शाल्यादिप्रतिग्रहे प्रायश्चित्तम् ]

सस्यानि शालयः सर्वे गृहीताश्च प्रतिग्रहाः ।
शतत्रयं द्वयं चैव कामाकामे ह्युदङ्मुखः ॥ ७४ ॥

[ भूदानप्रतिग्रहे प्रायश्चित्तम् ]

केवलाल्पावनिं चैव गृहीत्वा नृहरिं जपेत् ।
सहस्रसंख्यया चैव संपन्नां फलशालिभिः ॥ ७५ ॥
कुर्याद्द्विगुणमेतं वै कामतोऽकामतो जपम् ।
मठप्रतिग्रहेऽप्येवमर्धं वेश्मप्रतिग्रहे ॥ ७६ ॥

[ पापसङ्करे प्रायश्चित्तम् ]

पापानामप्यनेकानां सङ्करे सति नारद ।
मूलमन्त्रं जपेत्साङ्गं शतमष्टाधिकं तु वै ॥ ७७ ॥
ततः सत्यादिकाः पञ्च परावृत्त्या शतं शतम् ।
जपेत्सप्ताक्षरं मन्त्रं शतमष्टाधिकं द्विज ॥ ७८ ॥
अन्नसङ्करदोषाच्च शुद्धिमायाति तत्क्षणात् ।
एवमेव जपं कुर्यादुत्पन्ने भाण्डसंकरे ॥ ७९ ॥
योनिसङ्करशुध्यर्थं जपेत्सत्यं शतत्रयम् ।

[ काष्ठादिहरणे प्रायश्चित्तम् ]

काष्ठोपलतृणादीनां हरणे सति नारद ॥ ८० ॥
कामतोऽकामतश्चैव शिखामन्त्रं जपेच्छतम् ।

---

1 गवाश्वं Y. CL.

[ शास्त्रादिहरणे प्रायश्चित्तम् ]

परतश्छद्मना ज्ञानं हृतं शास्त्रं तु वा मुने ॥ ८१ ॥
मूर्तिमन्त्रायुतं मूलं जपेदयुतसंख्यया ।

[ गुरुदारादिनिन्दने प्रायश्चित्तम् ]

गुरोः स्त्रियं सुतां वाऽपि निन्दन्वै यस्तु मोहितः ॥ ८२ ॥
शतं शतं च देवानां जप्यमस्त्रं यथाक्रमम् ।

[ प्राणिघाते प्रायश्चित्तम् ]

सतेजःप्राणिघाते तु निरस्थिनि हते सति ॥ ८३ ॥
कामतोऽकामतो द्विर्वा सत्यमन्त्रं सकृत्स्मरेत् ।
आखुघाते च दशधा मार्जारे शतधा तु वै ॥ ८४ ॥
श्वश्टगालवधे चैव द्विगुणं कपिकुक्कुटे ।
सर्पाद्यण्डजघाते तु हंसादिशकुनिष्वपि ॥ ८५ ॥
सिंहादिमृगघाते च अजादिपशुघातने ।
शताच्चतुश्शतान्तं तु नृसिंहं वै जपेत्क्रमात् ॥ ८६ ॥

[ श्वशृगालादिदंशे प्रायश्चित्तम् ]

श्वश्टगालादिसर्वेषां यदि दंशः प्रमादतः ।
स्नात्वा शीताप्सुमध्यस्थो गारुडं द्विशतं जपेत् ॥ ८७ ॥

[ असत्प्रतिग्रहे प्रायश्चित्तम् ]

कामतोऽकामतो वापि असक्त(त?)श्च प्रतिग्रहम् ।
गृहीतं मुनिशार्दूल सिंहजापी विशुध्यति ॥ ८८ ॥
शतत्रयाच्चाचिरेण स्नानध्यानेन नारद ।

[ श्वपाकादिस्पर्शे प्रायश्चित्तम् ]

श्वपाकम्लेच्छचण्डालकरङ्कनृकपालिभिः ॥ ८९ ॥
स्पर्शने सोमकृद्यूपश्मशानद्रुमपुल्कसैः ।
कृत्वा स्नानं सचेलं तु सिंहमन्त्रं शतं जपेत् ॥ ९० ॥

[ वैष्णवादिनिन्दादौ प्रायश्चित्तम् ]

निन्दनाद्वैष्णवानां च दीक्षितानां विशेषतः ।
गुर्वाज्ञालङ्घनाच्चैव गुरुद्रव्य उपेक्षणात् ॥ ९१ ॥
सत्यं बीजं जपेत्साष्टशतं वै मुनिसत्तम ।

[ अपशकुने प्रायश्चित्तम् ]

वामाङ्गस्पन्दने चैव तथा दुःस्वप्नदर्शने ॥ ९२ ॥
वासुदेवं जपेन्मन्त्रं पञ्चविंशतिसंख्यया ।

[ अरिष्टचिन्तनादौ प्रायश्चित्तम् ]

अरिष्टचिन्तनाच्चैव भाषणादनृतस्य च ॥ ९३ ॥
कर्मणा वाङ्मनोभ्यां तु सत्यं चाष्टशतं जपेत् ।

[ रेतःस्पन्दने प्रायश्चित्तम् ]

अकामतः प्रसुप्तस्य शुक्रादेः स्पन्दने सति ॥ ९४ ॥
स्नात्वा पुरा सचेलं तु अस्त्रमन्त्रशतं जपेत् ।

[ गर्भपाते प्रायश्चित्तम् ]

कामतो गर्भपाताच्च नृसिंहस्यायुतं जपेत् ॥ ९५ ॥

[ धेनुवधे प्रायश्चित्तम् ]

धेनुं प्रमादतो हत्वा अयुतं त्रियुतं जपेत् ।
त्रिः स्नायाद्द्विगुणं कामात्तज्जपे मुनिसत्तम ॥ ९६ ॥
यागं कृत्वा तथा होमं दद्याद्धेनुद्वयं गुरोः ।

[ वृक्षच्छेदे प्रायश्चित्तम् ]

निश्शेषपादपच्छेदे पञ्च सत्यादयः क्रमात् ॥ ९७ ॥
जप्याः शतं शतं चैव त्वल्पतश्छेदने द्विज ।
द्वे शते चास्त्रमन्त्रस्य परावर्तेत्प्रयत्नतः ॥ ९८ ॥
वामे वा दक्षिणे वाऽपि विच्छिन्ने सति मण्डले ।
भुक्त्वा [1]पदेस्तु शूद्रस्य कामतोऽकामतो द्विज (?) ॥ ९९ ॥
शतत्रयं सिंहमन्त्रं परावर्त्य द्वयं तथा ।

[ गुरोः खेदावहवादाद्याचरणे प्रायश्चित्तम् ]

कर्मणा मनसा वाचा यो गुरुं परिखेदयेत् ॥ १०० ॥
समाचरेच्च वादं वा निर्वेदजनकं तथा ।
कृत्वा पुरा त्रिरात्रं तु वासुदेवं जपेद्धृदि ॥ १०१ ॥
प्रत्यहं मुनिशार्दूल त्रैकाल्यात्तु शतत्रयम् ।

[ देवालयादौ मूत्रोत्सर्गादिकरणे प्रायश्चित्तम् ]

देवालये तु यः कुर्यात्पुरीषं मूत्रमेव वा ॥ १०२ ॥

---

1 पदै CL.

देवतायतनारामे वैष्णवे तु विशेषतः ।

[ वैष्णवारामतः क्रीडार्थं फलपुष्पादिहरणे प्रायश्चित्तम् ]

क्रीडार्थं तु तदारामात्पत्रपुष्पफलाहृतिम् ॥ १०३ ॥
यः कुर्यात्स द्विजश्रेष्ठ सिंहस्याष्टशतं जपेत् ।

[ नग्नीभूय स्नानाचरणे प्रायश्चित्तम् ]

वीक्षमाणो [1]दिवि दिशोऽक्रमे स्नायादिगम्बरः ॥ १०४ ॥
हृन्मन्त्रं तु शतं साष्टं जपेत्स मुनिसत्तम ।

[ वृद्ध-गुर्वपचारे प्रायश्चित्तम् ]

वृद्धानां च गुरूणां च सन्निधौ वा तदाऽऽसने ॥ १०५ ॥
उपविष्टः शतं साष्टं प्रद्युम्नं च जपेद्धृदि ।
गुरूणामपहासे तु कृते वाऽश्लीलभाषणे ॥ १०६ ॥

[ दुष्टेन मनसा गुरुभार्या-सुतयोर्दर्शने प्रायश्चित्तम् ]

दुष्टेन मनसा दृष्ट्वा गुरोर्भार्यां सुतामथ ।
सिंहमन्त्रं जपेन्मन्त्री स्नातः पञ्च शतानि वै ॥ १०७ ॥

[ स्त्रीशूद्रादिवधे प्रायश्चित्तम् ]

स्त्रीशूद्रबालकान्हत्वा कामतोऽकामतोऽपि वा ।
द्वेऽयुते ह्ययुतं साष्टं जप्त्वा यागेन शुध्यति ॥ १०८ ॥
सच्छूद्रघातनाच्चैव पूर्वोक्ताद्द्विगुणं क्रमात् ।

[ आलये चण्डालप्रवेशे प्रायश्चित्तम् ]

चण्डालपूर्वकः कश्चित्प्रविष्टो यदि मन्दिरम् ॥ १०९ ॥
सन्त्यजेन्मृण्मयान्सर्वान् भाण्डानप्यस्त्रवारिणा ।
प्रोक्षणीयकृतस्नानस्तत्रस्थः कपिलं जपेत् ॥ ११० ॥
शतानि द्वादश मुने तत्र सर्वं च शुध्यति ।

[ रजकादीनां गृहे प्रवेशे प्रायश्चित्तम् ]

रजकश्चर्मकारश्च कामतोऽकामतो गृहे ॥ १११ ॥
संविशेदस्त्रतोयेन प्रोक्षयेच्च शतं जपेत् ।

[ नियतानुष्ठानस्य विष्णुमयस्य सिद्धस्य सद्यःशुद्ध्यादिविशेषकथनम् ]

सूतके मृतके चैव नित्यं विष्णुमयस्य च ॥ ११२ ॥

---

1 वा विदिशो मूत्रे A. CL.

सानुष्ठानस्य विप्रेन्द्र सद्यः शुद्धिः प्रजायते ।
तत्रापि वासुदेवाख्यमन्त्रं पञ्चशतं जपेत् ॥ ११३ ॥
स्पर्शनं भोजनं दानं दशाहं तस्य वर्जयेत् ।
तत्संपर्काद्भवेद्दोषः सिद्धस्यापि महामुने ॥ ११४ ॥

[ ब्राह्मणादीनां सूतकमृतकयोर्जपाद्यनुष्ठानानर्हता ]

नाधिकारो(री?) ह्यनुष्ठाने सदशाहं भवेद्द्विज(ः?) ।
द्वादशाहं नृपश्चैव वैश्यः पञ्चदशान्तिकम् ॥ ११५ ॥
निवर्तन्ते जपध्यानात् शूद्रो मासं प्रयत्नतः ।

[ उच्छिष्टसङ्करे प्रायश्चित्तम् ]

स्वजातिदीक्षितस्यापि[1] उच्छिष्टोच्छिष्टसङ्करात् ॥ ११६ ॥
स्नात्वा जपेन्मूलमन्त्रं शतमष्टाधिकं द्विज ।
[2]विजातेश्चोपवासस्तु विहितस्त्वीदृशो जपः ॥ ११७ ॥

[ अदीक्षितावलोकने प्रायश्चित्तम् ]

यदि चादीक्षितः पश्येत्पूज्यमानं प्रभुं द्विज ।
अक्षसूत्रं तु वा मुद्रां जपेदथ (अस्त्र?) शतं जपेत् ॥ ११८ ॥

[ गुरु-देवनाम्ना शपथाचरणे प्रायश्चित्तम् ]

आपत्तावथ जातायां शपथं गुरुसंज्ञितम् ।
न कुर्याद्भगवत्संज्ञं प्रमादाच्च कृतं यदि ॥ ११९ ॥
तदर्थं निर्वहेद्यत्नादन्ते पूजाजपाहुतीः ।
अनिर्वाहाच्च कार्यस्य यदर्थं शपथं कृतम् ॥ १२० ॥
प्रायश्चित्तं जपेद्विप्र सहस्रं त्र्यक्षरस्य तु ।
होमं कुर्यात्तदर्धेन सोपवासश्च पूजनम् ॥ १२१ ॥
यो मोहाच्चापि वा पृष्टो गुरुणा शपथं भजेत् ।
ददाति चान्यो दुष्टात्मा व्रजेतां नरकं तु तौ ॥ १२२ ॥

[ सङ्करप्रायश्चित्तम् ]

सङ्करेषु च सर्वेषु चेतसश्शुद्धिकारणम् ।
सिंहमन्त्रं जपेन्मन्त्री यावच्चित्तं प्रसीदति ॥ १२३ ॥

[ स्तेयादौ प्रायश्चित्तम् ]

स्तेयेष्वेवं मूलमन्त्रमुपघातेषु नारद ।

1 क्षत्रियस्यापि A CL  2 द्विजाते A

सिंहमन्त्रमशेषासु शुद्धिष्वस्त्रं तथैव च ॥ १२४ ॥
शपथेषु च हृद्बीजं भोज्याभोज्येषु चास्त्रकम् ।
सर्वद्रोहेषु वाराहं सर्वशान्तिषु नारद ॥ १२५ ॥
देवीमन्त्रचतुष्कं तु चित्तशुध्यर्थकारणम् ।
येन येन कृते चेह विपरीतेन कर्मणा ॥ १२६ ॥
मालिन्यमात्मनो विप्र जायते तत्प्रशान्तये ।
जपेद्ध्यायेच्च जुहुयान्मूलं भावः प्रसीदति ॥ १२७ ॥
यावल्लोकापवादस्तु तच्छुद्धौ विनिवर्तते ।
किल्बिषेणापवादेन मोहतामेति नारद ॥ १२८ ॥
सामर्थ्यान्मन्त्रजापस्य शतधा किल्बिषं व्रजेत् ।
विनिवृत्तोऽशुभाज्जन्तुर्ध्यानेन तपसा तु वा ॥ १२९ ॥
तीर्थेन मन्त्रजापाच्च पूजया हवनेन च ।
मेघरिक्तो यथा भानुस्तद्वल्लोके प्रकाशते ॥ १३० ॥
तस्मादघनिवृत्त्यर्थं प्रायश्चित्तं समाचरेत् ।
सर्वथाऽकीर्तिशान्त्यर्थं लोके धर्मव्यवस्थितेः ॥ १३१ ॥

नारदः—

[ मन्त्रोपघाते प्रायश्चित्तप्रश्नः ]

मन्त्रोपघाते चोत्पन्ने ह्यर्चादौ गृहमेधिनाम् ।
नृपारितोयलोकानां सकाशात्तस्करस्य च ॥ १३२ ॥
किं कार्यं वद देवेश भक्तैर्भवभयाकुलैः ।
यस्मात्त्वयोक्तमन्यत्र मन्त्रः शास्त्राक्षसूचितः ॥ १३३ ॥
प्रतिमाकिंकणीसंस्थो यागोपकरणे परे(?) ।
अपूजितश्च विधिना कल्पोक्तेन दिने दिने ॥ १३४ ॥
संक्रुद्धः शापयन्त्या तु (त्याशु?)शश्वत्सिद्धिं न गच्छति ।
रोगशोकावघातांश्चोद्वेगां[श्च]जनयेद्बहून् ॥ १३५ ॥

श्रीभगवान्—

अर्चाद्याधारका मन्त्रा न्यस्तास्ते सन्निधिं सदा ।
सानुष्ठानस्य कुर्वन्ति विशेषाद्भावितात्मनः ॥ १३६ ॥
आधारस्थास्तु ये मन्त्राः पुराऽऽचार्यैर्निबोधिताः ।

उपप्लवे समुत्पन्ने विसर्जनविधिं सदा (विना ?) ॥ १३७ ॥
सामर्थ्यात्स्वप्रभावाच्च आश्रयन्ति स्वकारणम् ।
तदाधारोपघाताच्च भ्रंशत्यायुर्जनस्य हि ॥ १३८ ॥
[ मन्त्राधारभूताचार्योपघातजनितदोषशान्त्यर्थप्रायश्चित्तविधानम् ]
सुमहद्दोषशान्त्यर्थमाचर्तव्यमिदं मुने ।
यदि सन्निहितस्यैतदक्लिष्टस्य भवेत्तदा ॥ १३९ ॥
प्रयत्नेन दिनात्तस्माद्यमाचरणमारभेत् ।
ज्ञातं वाऽथ दिने यस्मिंस्तदादौ संप्रवर्तते ॥ १४० ॥
अथ सामर्थ्यविरहात् स्वतन्त्रत्वं च वा विना ।
प्रत्यहं तु यथाशक्ति स्वमन्त्रं भक्तितो जपेत् ॥ १४१ ॥
प्राप्तः प्रतिपदं यावत्तद्दिनादौ समाचरेत् ।
दशैकाहमभुञ्जानो ह्यश्नन्वा क्षीरसर्पिषी ॥ १४२ ॥
ईषद्वा फलमूलानि भूशायी न्यस्तविग्रहः ।
ध्यानं तु मण्डलं पूजां जपहोममतन्द्रितः ॥ १४३ ॥
एकादशाहेऽतिक्रान्ते दश द्वौ भगवन्मयान् ।
आचार्यान्पूजयेद्भक्त्या दानं द्वादशकं ततः ॥ १४४ ॥
प्रदद्याच्छक्तिपूर्वं च सर्वमूलं पृथक् पृथक् ।
गवान्नहेमरत्नानि ग्रामाणि रजतं तिलान् ॥ १४५ ॥
धान्यं गजाश्ववासांसि मधुरादीन्रसानपि ।
अभावाच्च गजाश्वाभ्यां कार्यौ सौवर्णराजतौ ॥ १४६ ॥
समर्थानां सवित्तानां भक्तानां कथितं त्विदम् ।
अल्पार्थानामशक्तानामव्रतं नक्तभोजनम् ॥ १४७ ॥
दधिक्षीरघृताक्तं च युक्तं गोवैष्णवादिकम् (?) ।
हिरण्यतिलदानं च तेष्वपि द्वादशे दिने ॥ १४८ ॥
दत्वा तत्सन्निधौ भूयो मात्राग्रहणमाचरेत् ।
पूर्वोक्तेन विधानेन लब्धानुज्ञस्ततस्तदा ॥ १४९ ॥
ब्रह्मचारीवनस्थानां यतीनां केवलात्तु वै ।
स्नानाद्ध्यानात्तथा शौचाज्जपस्याप्ययुतत्रयात् ॥ १५० ॥
शुद्धिः स्यादन्यथा याति पातित्यं पातकात्स तु ।

न पातकं विना यस्मान्मात्राहानिः प्रजायते ॥ १५१ ॥
पूर्वजन्मार्जितस्यैव पापस्योत्पद्यते क्षयः ।
यत्प्रभावान्मनस्तापो भक्तानां जायते महान् ॥ १५२ ॥
समकालमृतस्यान्ते[1] विधिका क्षेत्रजन्मनः (?) ।
पूजनीयास्तथाऽचार्या वैश्येन त्रयि(त्र्यधि?)कौ[2] तु सः ॥१५३॥
चतुर्हरान्तिकान्तेन द्विगुणं द्विगुणं जपेत् ।
यस्य वै प्रकटा लोके ख्यातिर्यात्वार्यसंसदि ॥ १५४ ॥
तस्यैतत्कथितं चैव अकीर्त्यशुभशान्तये ।
यस्माल्लोकापवादो वै संयतानां विगर्हितः ॥ १५५ ॥
सम्यक्सिद्धस्य किं लोकैः कारणं मुनिसत्तम ।
न लोके प्रथितो यस्य मात्राभ्रंशो मनागपि ॥ १५६ ॥
जप्तव्यं तेन रहसि स्वमन्त्रस्यायुतत्रयम् ।
ब्रह्मचार्युदितेनैव विधिना पुनरेव तु ॥ १५७ ॥
मात्रासङ्घट्टनं कुर्याद्येन शान्तिमवाप्नुयात् ।
प्रणष्टायां तु मात्रायां यदि लाभो भवेत्पुनः ॥ १५८ ॥
प्रायश्चित्तादियत्नार्थं...वासमाचरेत् ।
सर्वनाशात्तु यद्येको मन्त्रांशः प्राप्यते पुनः ॥ १५९ ॥
संस्कृत्य प्राप्य भुक्त्वा च जप्त्वा मन्त्रं तदाहरेत् ।

इति श्रीपाञ्चरात्रे जयाख्यसहितायां प्रायश्चित्तविधिर्नाम पञ्चविंशः पटलः ।

---

अथ साधकस्य मूलमन्त्रसाधनं नाम षड्विंशः पटलः ।

नारदः—

[3]मुक्तिमार्गस्त्वया प्रोक्तो दीक्षा मम यथाक्रमम् ।
अधुना [4]मुक्तिमार्गं तु यथावत्कथयस्व मे ॥ १ ॥

श्रीभगवान्—

शृणु कर्माणि दिव्यानि मन्त्रराजस्य सुव्रत ।
संक्षेपात्कथयिष्यामि पातालोत्थानसाधने ॥ २ ॥
खड्गफट्काञ्जनकाशंगु[5] गुलिकादिप्रसाधने ।

---

1 स्यात्रे विधिः कक्षत्र C L. स्यान्ते विधिः का क्षत्र A. 2 को नु सः A.
3 मुनि A Y. 4 मुनि Y. 5 ग्रु. A.

[ मन्त्रसाधने देशवैलक्षण्यादिनियमः ]

साधकः संयतो भूत्वा मन्त्रव्रतपरायणः ॥ ३ ॥
महोत्साहः शुभाचारो धीरस्सर्वगुणान्वितः ।
पुण्यक्षेत्रेषु तीर्थेषु नदीनां सङ्गमेषु च ॥ ४ ॥
देवतार्षिजुष्टेषु कुर्यात्स्थानपरिग्रहम् ।
पवित्राहारसंपन्नः सङ्करैः परिवर्जितः ॥ ५ ॥
जपेल्लक्षत्रयं धीरो मन्त्रार्पितमनाः सुधीः ।
पूर्वोक्तेन विधानेन अखिलेन द्विजोत्तमः[1] ॥ ६ ॥
संत्यज्यानेककर्माणि सुसिद्धस्तु ददाति च ।
नियोजितः करोत्याशु वश्याकर्षणमारणान् ॥ ७ ॥
ग्रहज्वरविषादीनां भूतानां च प्रमर्दनम् ।
डाकिनीनां च सर्वासां ह्रासने **मन्त्रनायकम्** ॥ ८ ॥
यथा नियोजयेत्सम्यक् तथा श्रृणु समाहितः ।

[ मूलमन्त्रस्य भूतोपशमनादौ विनियोगप्रकारः ]

कृत्वा तु मण्डलं दिव्यं तत्र कुंभं निवेशयेत् ॥ ९ ॥
पूर्वोक्तेन विधानेन इष्ट्वा देवं जनार्दनम् ।
स्थापयेत्पुरतस्तस्य शुचिमातुर[2]मासने ॥ १० ॥
परिजप्य तु पुष्पाणि सिद्धार्थसहितानि तु ।
शताष्टपरिजप्तानि हस्ताभ्यामातुरस्य च ॥ ११ ॥
स्वहस्ते मण्डलं ध्यायेत्रिकोणे वह्निलांछितम् ।
तन्मध्ये देवदेवेशं तेजोरूपं विचिन्तयेत् ॥ १२ ॥
दीप्तचक्रगदापाणिं सर्वदुष्टांश्च तर्जयेत् ।
तद्धस्तं दर्शयेत्साध्ये क्षिप्रमावेशकारकम् ॥ १३ ॥
तं दृष्ट्वा सर्वभूतानि आविशन्ति भयार्दिताः ।
प्रविष्टमात्रं दृष्ट्वा तं शङ्खबन्धं तु कारयेत् ॥ १४ ॥
**मूलमन्त्रेण** मन्त्रज्ञः सार्णं संपुटितेन तु ।
भस्मना चास्त्रजप्तेन दिग्बन्धं चात्र कारयेत् ॥ १५ ॥
अस्त्रजप्तेन मन्त्रेण भस्मना ताडयेद्बुधः ।
ताडयेत्सप्तजप्तैस्तु कुशैः सिद्धार्थकैः पुनः ॥ १६ ॥

---

1 म A 2 मानसे A

त्रिजप्तं गुग्गुलं धूपं प्रदद्यादात्मनः स तु ।
शीताद्भिः शरदण्डैर्वा सप्तजप्तैस्तु ताडयेत् ॥ १७ ॥
जयां मुद्रां ततो बध्वा मन्त्रमस्त्रयुतं जपेत् ।
यथेष्टं निग्रहं चास्य मन्त्रेणानेन कारयेत् ॥ १८ ॥
गदया ताडयेन्मूर्ध्नि कर्णं करविलिप्तये ? ।
अथ वा प्रतिमां कुर्याद्रोमयेन गृहस्य तु ॥ १९ ॥
चक्रेणाङ्गानि कृन्तेत्तु यदि क्षिप्रं न मुञ्चति ।
मुञ्चामीति यदा ब्रूयात् शपथं कारयेत्सदा ॥ २० ॥
विसर्जयेद्बलिं दत्वा शिखादिग्बन्धमोक्षणात् ।
कर्मणा मनसा चैव तथा वाचापि मोक्षयेत् ॥ २१ ॥

[ विषप्रशामनप्रकारः ]

ठकारोदरगं मन्त्रं कलाषोडशसंयुतम् ।
स्रवन्तममृतं ध्यायेच्चन्द्रमण्डलसन्निभम् ॥ २२ ॥
वामहस्ते विचिन्त्यैवं साध्यमूर्ध्नि निवेशयेत् ।
तेनामृतेन संपूर्य विग्रहं त्वातुरस्य च ॥ २३ ॥
हरेद्विषाण्यशेषाणि विधिनाऽनेन योजितः ।

[ वशीकरणप्रकारः ]

सप्त जप्तानि पुष्पाणि सुगन्धाक्तानि दापयेत् ॥ २४ ॥
वामहस्तेन नारीणां पाणौ तासां च दक्षिणे ।
वामपाणौ तु विप्रेन्द्र नृणां दक्षिणपाणिना ॥ २५ ॥
सद्यस्तद्वशतां यान्ति मन्त्रस्यास्य प्रभावतः ।
चन्द्रमण्डलमध्यस्थं मन्त्रं ध्यात्वा करोदरे ॥ २६ ॥
यस्य तद्दर्शयेद्धस्तं क्षिप्रं तं वशमानयेत् ।
न्यासं कृत्वा तु पूर्वोक्तं कान्तं रूपं विचिन्तयेत् ॥ २७ ॥
क्रुद्धस्याप्यग्रतः स्थित्वा क्षिप्रं तं वशमानयेत् ।
पत्रं पुष्पं फलं वाऽपि त्रिजप्तं यस्य दीयते ॥ २८ ॥
वशमायाति स क्षिप्रं मन्त्रस्यास्य प्रभावतः ।
रोचनाकुङ्कुमाभ्यां वा भस्मना चन्दनेन वा ॥ २९ ॥
प्रजप्य तिलकं कृत्वा विशेद्राजकुलं[1] यदि ।

1 गृहं A

मा यान्महतीं पूजां दर्शनान्नात्र संशयः ॥ ३० ॥

[ उच्चाटनप्रकारः ]

वायव्यभुवनान्तस्थं मन्त्रं नीलांबुदप्रभम् ।
निराधारं तदन्तस्थं ध्यायेत्साध्यं कृशं महत् ॥ ३१ ॥
नीलाम्बरधरं कृष्णं शुक्लवर्णसमं लघु ।
देवं (व ?) नासानिलेनैव पूर्यमाणं नभस्थले ॥ ३२ ॥
भ्राम्यमाणं निराधारे उच्चाटयचिराच्च सः ।

[ विद्वेषणविधानम् ]

आग्नेयभुवनान्तस्थं चाषपक्षसमद्युतिम् ॥ ३३ ॥
ध्यात्वा मन्त्रेश्वरं क्षिप्रं तत्पाद[1] गो(द्वयगौ?)स्मरेत् ।
द्वौ साध्यौ हुतभुग्रूपौ वीक्षमाणौ परस्परम् ॥ ३४ ॥
पादं पदा ताडयन्तावभीक्ष्णं चातिवेगतः ।
करोति विप्र विद्वेषं ध्यानमात्रान्न संशयः ॥ ३५ ॥

[ आकर्षणम् ]

सूर्यमण्डलमध्यस्थं ध्यायेन्मन्त्रेश्वरं द्विज ।
भग्नराजोपलाभं तु घ्राणाग्रस्थेन वायुना ॥ ३६ ॥
कर्षयन्तं सुदूराच्च साध्यं भास्वरविग्रहम् ।
विधिनाऽनेन भगवान् ध्यान(त?)स्त्वाकर्षणे सदा ॥ ३७ ॥
आकृष्य भवनं सर्वं साधकस्य ददाति च ।

[ ]

सितपद्मोत्तरस्थं तु मन्त्रं ध्यात्वा खगासनम् ॥ ३८ ॥
वर्णतः सितरक्ताभं तत्पाणिद्वयगौ तु वै ।
द्वौ तु साध्यौ तदाकारौ पतन्तौ तौ तु संस्मरेत् ॥ ३९ ॥
हृष्टतुष्टप्रसन्नात्मा प्रीत्यर्थं मुनिसत्तम ।
नयेत् . पथश्चैव विधिनाऽनेन मन्त्रराट् ॥ ४० ॥
हुताशसलिले द्वे तु किं पुनर्मा[2]नवान्प्रति ।

[ मारणम् ]

वायुवह्निपुराभ्यां तु मध्ये चक्रोदितं प्रभुम् ॥ ४१ ॥
संस्मरेत्कृष्णरक्तं तु साध्यं तत्पादतो हतम् ।
निष्पीड्यमानं वेगेन चक्रक्षेपैर्गतासुवत् ॥ ४२ ॥

---

1 द्वंभोगसस्म Y 2 न्भुवि A

ध्यायेद्विलुप्तशक्तिं च निमीलितविलोचनम् ।
मारयत्यचिरेणैव विपक्षो यस्य साधकः ॥ ४३ ॥

[ स्तम्भनम् ]

माहेन्द्रमण्डलान्तस्थं कुङ्कुमोदकसन्निभम् ।
प्रपीडयन्तं पादाभ्यामाधारं यन्त्रसंस्थितम् ॥ ४४ ॥
स्तम्भयत्यचिरेणैव यं यमिच्छति साधकः ।

[ पुष्टिविधानम् ]

चन्द्रमण्डलमध्यस्थं पीतं पीताम्बरं प्रभुम् ॥ ४५ ॥
वमन्तममृतं वक्त्रात्तत्पीयूषं द्विजाधिप ।
विशन्तं ब्रह्मरन्ध्रेण स्मरेत्साध्यस्य हृद्गतम् ॥ ४६ ॥
सर्वाङ्गानि च तत्स्थेन आक्रान्तानि च भावयेत् ।
पुष्टाङ्गो जायते शश्वद्विधिनानेन मानवः ॥ ४७ ॥

[ शान्तिकविधानम् ]

सितपद्मयुगान्तस्थं संपूर्णं च शशिप्रभम् ।
विचिन्त्यैकमजस्योर्ध्वे द्वितीयमधरस्थितम् ॥ ४८ ॥
निशाम्बुकणसङ्काशं स्वच्छन्दं मध्यतः स्थितम् ।
मुञ्चन्तं सलिलं देहाच्छीतलं क्षीरवत्स्थितम् ॥ ४९ ॥
सिच्यमानं स्मरेत्साध्यं तेन तं तदधःस्थितम् ।
जायते शान्तिकं सम्यग्यस्य यस्य द्विजेच्छसि ॥ ५० ॥

[ पु(तु?)ष्टिविधानम् ]

कुङ्कुमोदकसङ्काशं पूर्णचन्द्रान्तरास्थितम् ।
ध्यात्वा मन्त्रं पुरा विप्र वमन्तममृतं मुखात् ॥ ५१ ॥
वर्णतः सितपीताभं तदग्रस्थं च भावयेत् ।
पिबन्तं पाणियुग्मेन आत्मानमथवातुरम् ॥ ५२ ॥
पु(तु?)ष्टिरुत्पद्यते शश्वन्मन्त्रराजप्रभावतः ।
एतत्पूर्वोक्तजापस्य फलमुक्तं समासतः ॥ ५३ ॥
अनुक्तान्यपि कर्माणि कुरुते चात्र योजितः ।
योज्यं कर्मपदं चैव परिकर्मणि यत्नतः ॥ ५४ ॥
कुरु वीप्सासमेतं च ध्यानेन परिभावितम् ।
पूर्वोक्ताद्विगुणाज्जापाच्चैव सिद्धिमवाप्नुयात् ॥ ५५ ॥

[ वैखरीसिद्धिः ]

विवरद्वारमासाद्य स्थण्डिलं चोपलेपयेत् ।
इष्ट्वा तु विधिना मन्त्रं कुर्याद्धोमं समाहितः ॥ ५६ ॥
तिलेन तु घृताक्तेन महिषाक्षेण वै पुनः ।
क्षीरवृक्षसमिद्भिर्वा दूर्वाकाण्डैरभावतः ॥ ५७ ॥
लक्षमात्रे हुते ह्याशु वैखरीं सिद्धिमाप्नुयात् ।
भित्त्वा तु सत्वयन्त्राणि प्रविशेद्विवरोत्तमम् ॥ ५८ ॥
पीत्वा रसायनं दिव्यं नारायणबलो भवेत् ।
क्रीडने कन्यकायुक्ते यावदाभूतसम्प्लवम् ॥ ५९ ॥

[ खड्गसाधनम् ]

भूमिभागे समे लिप्ते रोचनां [1]कुङ्कुमैर्युताम् ।
लिखेत् त्रिंशाङ्गुलं खड्गं स्पष्टं साङ्गं मनोरमम् ॥ ६० ॥
पूर्वोक्तेन विधानेन इष्ट्वा तत्र जनार्दनम् ।
मुष्टिस्थाने करं स्थाप्य जपेल्लक्षं समाहितः ॥ ६१ ॥
युक्ताहारविहारो हि युक्तस्वप्नो ह्यखेदवान् ।
यावदुत्तिष्ठते खड्गो मुष्टिना ग्राहयेत्ततः ॥ ६२ ॥
तं गृहीत्वा तु सर्वेषां विद्यानामधिपो भवेत् ।
विद्याधराणां सर्वेषां चक्रवर्तित्वमाप्नुयात् ॥ ६३ ॥

[ अञ्जनादिसाधनम् ]

पूर्वोक्तेन विधानेन पूजयेन्मन्त्रनायकम् ।
रोचनां शङ्खशुक्तौ तु गृहीत्वा शङ्खमुद्रया ॥ ६४ ॥
तावत्परिजपेन्मन्त्रं यावज्ज्वालां प्रमुञ्चति ।
तन्मध्ये दृश्यते कान्ता कन्यका कामरूपिणी ॥ ६५ ॥
सिद्धास्मीति वदेत्सा तु कुरु कार्यं यथेप्सितम् ।
अनेनैव विधानेन अञ्जनादीनि साधयेत् ॥ ६६ ॥

[ गुलिकासाधनम् ]

रोचनां कुङ्कुमं चैव हरितालं मनश्शिलाम् ।
चक्रांकां चौषधीं तत्र पञ्चमां विनियोजयेत् ॥ ६७ ॥

---

1 पुष्पं A

सूक्ष्मपिष्टां तु तां कृत्वा आलोड्य मधुरैस्त्रिभिः ।
एकादश्यां समभ्यर्च्य मण्डले मन्त्रनायकम् ॥ ६८ ॥
तत्राधिवासयेत्तां तु गुलिकां यन्त्रसंपुटे ।
सितार्कस्य विधानेन द्वादश्यां तु जपेत्ततः ॥ ६९ ॥
दशायुतं तु तन्मन्त्री ततः सिद्धा तु सा भवेत् ।
तया करस्थया मन्त्री विधिवद्गगनान्तरे ॥ ७० ॥
पाताले वा महीपृष्ठे लोकपालपुरेषु च ।
चक्रपाणिर्यथा विष्णुरधृष्यः सर्वदैवतैः ॥ ७१ ॥
जायते साधकेन्द्रस्तु मन्त्रस्यास्य प्रभावतः ।

[ रसायनादिसाधनम् ]

ब्राह्मणं क्षत्रियं वाऽपि निर्व्रणं लक्षणैर्युतम् ॥ ७२ ॥
युवानमेकं दिवसं संस्थितं तु समानयेत् ।
शून्ये गृहे समावेश्य स्नापयेदर्चयेत्ततः ॥ ७३ ॥
यथा विधानतो मन्त्री मन्त्रं संपूज्य मण्डले ।
उपविष्टं [1]शवं कृत्वा मन्त्रं तस्याग्रतो जपेत् ॥ ७४ ॥
ताडयेत्सर्षपाणां तु शतेनाष्टोत्तरेण तु ।
ततो वेगात्समुत्थाय ब्रवीति प्रणतो वचः ॥ ७५ ॥
किं करोमि तवाद्याहं ममाज्ञा संप्रदीयताम् ।
पादमूले रसं सिद्धं रसायनमपि द्विज ॥ ७६ ॥
यच्चान्यन्मनसोऽभीष्टं तद्ददात्यविकल्पतः ।

[ यक्षिणीसाधनम् ]

कौशेयवस्त्रमानीय लिखेत्तत्र च यक्षिणीम् ॥ ७७ ॥
सर्वाभरणसंयुक्तां सुरूपां मनसेप्सिताम् ।
यथोक्तेन विधानेन मन्त्रं संपूज्य पूर्ववत् ॥ ७८ ॥
उपोषितश्चार्धरात्रे दद्याद्धूपं सगुग्गुलम् ।
सप्ताहमेवं कुर्वीत जपेच्चाप्ययुतं सदा ॥ ७९ ॥
सप्तमे ह्यर्धरात्रे तु सशब्दः कम्पते पटः ।
प्रत्यक्षमास्ते विप्रेन्द्र रूपैश्वर्येण संयुता ॥ ८० ॥

---

1 वश A

यदा तु न क्षुभेन्मन्त्री तदा सिद्धाऽस्य सा भवेत् ।
माता वा भगिनी भार्या का भवामीति भाषते ॥ ८१ ॥
तस्या यथेष्टं वक्तव्यं निर्विकल्पेन चेतसा ।
सा सिद्धा सर्वकार्याणि साधयत्याशु मन्त्रिणः ॥ ८२ ॥
कामं ददाति विविधं नानारूपैर्यथेप्सितम् ।
जायात्वेन द्विजश्रेष्ठ यदा चाङ्गीकृता पुरा ॥ ८३ ॥
निधीनथाक्षयान् शश्वद्भगिनीत्वे प्रयच्छति ।
लोकालोकान्तरालोकं दर्शयत्यविचारतः ॥ ८४ ॥
औषधीश्च तदा दिव्या रसांश्च विविधानपि ।
शास्त्राणि विविधान्याशु साधयेच्छान्तिसिद्धये ॥ ८५ ॥
ददाति सम्यक् सिद्धा सा सुसिद्धीर्जननी यथा ।

[ परसैनिकप्रणाशनम् ]

संग्रामकाले संप्राप्ते आयुधान्यभिमन्त्रयेत् ॥ ८६ ॥
परसैनिक(?)पूर्वोक्तमभिमन्त्र्य च सर्षपान् ।
अस्त्रसंपुटितेनैव तेनैव त्र्यक्षरेण तु ॥ ८७ ॥
मन्त्रेणाग्निप्रभावेन ज्वालामालाकुलेन तु ।
गत्वा परबलास्त्रं तु क्रोधसंरक्तलोचनः ॥ ८८ ॥
प्रक्षिपेत्सैन्यमध्ये च नाशयेत्परसैनिकम् ।

[ दिव्याना स्तम्भनम् ]

रोचनाकुङ्कुमैर्युक्तो नाममन्त्रविदर्भितम् (?) ॥ ८९ ॥
लिखेत्कौस्तुभमध्ये तु कलाषोडशसंयुते ।
एकैका तु कला विप्र पुरा युक्ताऽमृतेन तु ॥ ९० ॥
साऽमृतानां कलानां च योजयेच्च तथोपरि ।
विश्वाप्यायस्थितं वापि चन्द्ररश्मिसमप्रभम् ॥ ९१ ॥
तद्बाह्येऽष्टदलं पद्मं विलिखेच्च सकर्णिकम् ।
देव्योऽङ्गानि यथार्चायां दलेष्वभ्यन्तरे लिखेत् ॥ ९२ ॥
स्तम्भयेत्सर्वदिव्यानि [1]खात्केशां(खेचरां?)श्च निवारयेत् ।
पूजनाद्ध्वनाद्ध्यानाच्चन्दनोदकसेचनात् ॥ ९३ ॥

---

1 खट्केशा Y

[ उत्पातप्रशमनम् ]

लिखितं भूर्जपत्रे तु क्षीराम्भोविनिवेशितम् ।
उत्पातानि महोग्राणि साभिचाराणि नाशयेत् ॥ ९४ ॥

[ विषशस्त्रादिभयप्रशमनम् ]

त्रिलोहवेष्टितं कृत्वा पुष्यर्क्षे लिखितं तु वै ।
द्वादश्यां शुक्लपक्षे वा मध्यंदिनगते रवौ ॥ ९५ ॥
बाह्वोः कण्ठे तथा मूर्ध्नि यस्तु धारयते सदा ।
विषशस्त्राग्निभूतेभ्यो भयं तस्य न जायते ॥ ९६ ॥

[ चक्रयन्त्रसाधनम् ]

रोचनाचन्दनेनैव भूर्जे वा सितकर्पटे ।
चक्रं कुर्याद्द्विषट्कारं नाभिनेमिसमन्वितम् ॥ ९७ ॥
तन्मध्ये कमलं कुर्यात् षोडशच्छदभूषितम् ।
त्र्यर्णेन मूलमन्त्रेण नामसंपुटयोगतः ॥ ९८ ॥
विलिख्य तद्बहिर्दद्यान्मन्त्रं यो द्वादशाक्षरम् ।
परिवेषप्रयोगेण पत्रे पत्रे लिखेत्ततः ॥ ९९ ॥
देवीनां हार्दकं बीजं चतुर्धा केसरावधौ ।
अष्टाष्टकं तु बीजानां यावदेकत्र सङ्ख्यया ॥ १०० ॥
ततः सर्वदलाग्रस्थः प्रणवो लिख्यते द्विज ।
पुष्पपत्रात्समारभ्य हकाराद्यं च विन्यसेत् ॥ १०१ ॥
क्रमान्मकारपर्यन्तं ततः पद्मस्य बाह्यतः ।
शिरः शिखां च कवचं नाभित्रितयगं लिखेत् ॥ १०२ ॥
परिवेषप्रयोगेण चक्रारेषु लिखेत्ततः ।
अस्त्रा द्वादशधा विप्र एकैकस्यान्तरे ततः ॥ १०३ ॥
नेत्रमन्त्रं त्रिधा दद्यान्नाभिवन्नेमिमण्डले ।
यन्त्रोऽयं मुनिशार्दूल सर्वोपद्रवनाशनः ॥ १०४ ॥
धारणात्स्मरणाद्ध्यानान्नास्ति तद्यन्न साधयेत् ।

[ शङ्खयन्त्रम् ]

शङ्खोदरगतं पद्मं लिखित्वा [1]द्वादशच्छदम् ॥ १०५ ॥
समदेन तुषारेण कुङ्कुमेन तथैव च ।
विलिख्य कर्णिकामध्ये त्र्यक्षरं मूर्तिसंयुतम् ॥ १०६ ॥

1 द्विदश C L

वलयाकृतियोगेन नाम तन्मध्यतो लिखेत् ।
नारसिह्मादयो मन्त्रास्त्रयो लेख्या दलत्रये ॥ १०७ ॥
भूयो भूयश्चतुर्वारं बाह्यपद्मं च वेष्टयेत् ।
क्रमात्पद्मादिकैर्मन्त्रैस्सर्पकुण्डलयोगतः ॥ १०८ ॥
वक्त्रदेशेऽथ शङ्खस्य क्रमाल्लोकेश्वरा दश ।
अस्त्रमन्त्रास्तथा सख्यः शङ्खस्याथो निवेशयेत् ॥ १०९ ॥
इदं यन्त्रं मुनिश्रेष्ठ सर्वमन्त्रैरधिष्ठितम् ।
सर्वकर्मकरं प्रोक्तं सर्वोपप्लवनाशकम् ॥ ११० ॥
सर्वरोगविघातं च सर्वामयविनाशनम् ।

[ तिथिनक्षत्रविशेषात्फलभेदः ]

सर्वमङ्गलकृत्सम्यक् पुष्यर्क्षलिखितं भवेत् ॥ १११ ॥
द्वादश्यामथ शुक्लायां पूजयित्वा यथाविधि ।
अभिषेकविधानेन शान्तिके पौष्टिके लिखेत् ॥ ११२ ॥
रक्षार्थं सर्वभूतेभ्यो योज्यं सर्वत्र सर्वदा ।

[ आहुतिद्रव्यभेदात् आहुतिसङ्ख्याभेदाच्च फलभेदः ]

लक्षाहुतिप्रदानेन तिलानां कृष्णवर्चसाम् ॥ ११३ ॥
पूजयेद्वत्सरं यत्तु होमान्तेऽथ घृताहुतीः ।
आपाद्य द्वादशशतं स्रुचा सम्यङ्महामुने ॥ ११४ ॥
ददाति तस्य भगवान् यत्किञ्चिन्मनसेप्सितम् ।
एकादश सहस्राणि कमलानां तु नारद ॥ ११५ ॥
जुहुयाच्च घृताक्तानामेकान्ते विजने तु यः ।
समुद्धृत्योदकात्सद्यस्तस्य लक्ष्मीं प्रयच्छति ॥ ११६ ॥
योऽयुतं चाथ बिल्वानां घृताक्तानां तु होमयेत् ।
तस्य क्षिप्रं ददात्येष मन्त्रेशो विपुलं धनम् ॥ ११७ ॥
ग्रामानश्वान्सुवर्णं च दर्शयेत्तु कृताकृतम् ।
आयुः पुत्रानथारोग्यं सौभाग्यं सर्वतोमुखम् ॥ ११८ ॥
यस्या अग्रे देवताया इमं मन्त्रेश्वरं जपेत् ।
सा तस्मै सकलान्कामान्प्रसन्ना संप्रयच्छति ॥ ११९ ॥
साधितो मन्त्रसिद्धिर्हि(द्ध्या हि?) मन्त्रराजः करोति च ।
प्रसादितश्च पूजाद्यैः कर्मणा चाग्निकेन तु ॥ १२० ॥

सामान्यमपि यत्किंचिद्भूतले कर्म विद्यते ।
स्मरणात्सर्वमेवाशु साधकानां प्रयच्छति ॥ १२१ ॥

[ मन्त्रराजस्य महिमाविशेषः ]

इदमन्यत्प्रवक्ष्यामि मुनिश्रेष्ठ निबोध मे ।
मन्त्रराजस्य यद्वीर्यं माहात्म्यं प्रभविष्णुता ॥ १२२ ॥
येनायं पूजितः सम्यक् ज्ञातो ध्यातः सकृत्स्मृतः[1] ।
तस्य सिद्धिः परा दिव्या मानुषी संप्रवर्तते ॥ १२३ ॥
न चास्य सदृशो मन्त्रो मन्त्रराजस्य विद्यते ।
सुखसौभाग्यसंपत्तेरपवर्गप्रसिद्धये ॥ १२४ ॥
इमं मन्त्रेश्वरं जप्त्वा भक्तिश्रद्धापरस्तु यः ।
तच्चित्तो विजने स्थाने सर्वान्कामानवाप्नुयात् ॥ १२५ ॥
किमन्यैस्तस्य विप्रेन्द्र मन्त्रकोटिशतैरपि ।
स तु चिन्तामणिप्रख्यो यस्यायं हृदि वर्तते ॥ १२६ ॥
सर्वकामप्रदः सद्यो देहान्तेऽपि च मोक्षदः ।
इमं मन्त्रेश्वरं जप्त्वा सर्वान्कामानवाप्नुयात् ॥ १२७ ॥
नचास्य सदृशो मन्त्रो मन्त्रैः कोटिशतैरपि ।
एवं मन्त्रवरं लब्ध्वा धुनेत्सर्वं फलाफलम् ॥ १२८ ॥
चिन्तामणिर्यथा लोके सर्वा[2]भीष्टं प्रयच्छति ।
एवं म[3]न्त्रेश्वरो ह्येष साधकाय प्रयच्छति ॥ १२९ ॥
ऐहिकामुष्मिकं सर्वं सम्यगाराधितः सदा ।
लक्षायुतायुते जप्ते पूजाहोमादिकैर्विना ॥ १३० ॥
प्रयच्छत्यणिमादीनि जपान्ते मन्त्रराड् द्विज ।
प्राणायामादिसंयुक्तो धारणाध्यानतत्परः ॥ १३१ ॥
विना हवनपूजाभ्यां लक्षं लक्षं स्थितो जपेत् ।
साक्षात्पश्यति देवेशं विष्णुं परमरूपिणम् ॥ १३२ ॥
एतदुद्देशतो विप्र कर्म मन्त्रेश्वरस्य तु ।
भक्त्यर्थं साधकेन्द्राणां कथितं नातिविस्तृतम् ॥ १३३ ॥
तन्नास्ति यन्न मन्त्रेशः साधयेत्परितोषितः ।

इति श्रीपाञ्चरात्रे जयाख्यसंहितायां साधकस्य मूलमन्त्रसाधनं नाम षड्विंशः पटलः ।

---

1 त्सकृत A. 2 मनो A. 3 न्त्रवरो A.

अथ शक्तिमन्त्रसाधन नाम सप्तविंशः पटलः

श्रीभगवान्—

अनुक्रमेणाथ मुने लक्ष्म्यादीनां च साधनम् ।
विविधानि च कर्माणि मन्त्रेभ्यो ह्यवधारय ॥ १ ॥

[ लक्ष्म्यादिषु अनन्ताद्यासनस्य साधारण्यम् ]

अनन्तं च तदूर्ध्वे तु धर्माद्यं यच्चतुष्टयम् ।
पद्मं धामत्रयोपेतं सर्वमन्त्रगणस्य च ॥ २ ॥
सामान्यमासनं विद्धि पूजाकाले तु सर्वदा ।

[ तत्र द्वारयागादेः साधारण्यम् ]

द्वारयागो गणेशादिपूजनं मुनिसत्तम ॥ ३ ॥
लोकेश्वरास्त्रयागश्च सर्वत्र विहिताः सदा ।
देवीचतुष्कयागे तु षट्के तु हृदयादिके ॥ ४ ॥
नृसिंहकपिलक्रोडयागेषु च यजेद्द्विज ।

[ लक्ष्म्यादियागादन्यत्र विष्वक्सेनपूजनप्रतिषेधः ]

विष्वक्सेनस्तु नान्यत्र पूजनीयः कदाचन ॥ ५ ॥

[ तत्तन्मन्त्राणां तत्तद्धृदयेनैवोपचारः ]

यं यं प्रपूजयेन्मन्त्री मन्त्रं सिद्धिपरायणः ।
तन्मन्त्रं हृदयेनैव तं तमेवोपचार्य च ॥ ६ ॥
नोपचारिकमन्त्रान्वै पूर्वोक्तान्विनिवेशयेत् ।

[ जपसूत्रे विशेषः ]

न मूलमन्त्रसंरुद्धं[1] सूत्रं तु जपकर्मणि ॥ ७ ॥
तन्मन्त्रेण तु संस्कृत्य[2] पुरा सन्धाय चापरम् ।

[ धूपघण्टादीना साधारण्यम् ]

सामान्यं सर्वमन्त्राणां धूपघण्टा पुरोदिता ॥ ८ ॥
यागागारं तथा कुण्डं स्रुक्स्रुवौ मुनिसत्तम ।
अथाङ्गषट्कं व्याख्यास्ये लक्ष्म्याद्यादौ तु लक्षणम् ॥ ९ ॥
चतुर्णां तु सखीनां च बीजमन्त्रचतुष्टयम् ।
चतुर्णामनुगानां तु क्रमेण च यथास्थितम् ॥ १० ॥

---

1 कुद्धं A 2 स्तु Y.

[ लक्ष्म्या अङ्गमन्त्रः ]

आदाय पुण्डरीकं तु धरेशं तदधो न्यसेत् ।
अनलं तदधःस्थं च कृत्वा षोढा नियोज्य च ॥ ११ ॥
क्रमेण योजयेदेषामानन्दं प्रथमस्य च ।
विष्णुमूर्जमथैश्वर्यं भूधरं परमेश्वरम् ॥ १२ ॥
चान्द्रीं व्योमेशसंयुक्तां सर्वेषामुपरि न्यसेत् ।
विद्धि षड्हृदयादीनि

[ लक्ष्म्याः सखीमन्त्रः ]

सखीनामधुना शृणु ॥ १३ ॥
आदाय केवलं सत्यं तत्स्थितं वरुणं ततः ।
मायायुक्तं ततः सोमं वरुणं रामभूषितम् ॥ १४ ॥
चान्द्री व्यापी क्रमाद्योज्यौ सर्वेषां मूर्ध्नि वै ततः ।
ऋद्धिः वृद्धिः समृद्धिश्च विभूतिरपि सा सखी ॥ १५ ॥

[ लक्ष्म्या अनुचरमन्त्रः ]

लकारस्त्वादिदेवस्थस्सोमोऽथ भुवनस्थितः[1] ।
द्विधाऽमृतं समादाय भूधरेण समन्वितम् ॥ १६ ॥
पूर्ववच्चिरसंयुक्तमेतत्कुर्याच्चतुष्टयम् ।
लावण्यः सुभगो नाम्ना सौभाग्यश्च तृतीयकः ॥ १७ ॥
चतुर्थस्सौमनस्यश्च चत्वारोऽनुचराः स्मृताः ।
सर्वेषां प्रणवं पूर्वं नामस्वाहानमोनुगम् ॥ १८ ॥

[ मण्डलम् ]

चतुरस्रं चतुर्द्वारं कृत्वा पूर्वोदितं पुरम् ।
तन्मध्येऽष्टदलं पद्मं लिखेच्छुक्लारुणप्रभम् ॥ १९ ॥
सितानि चतुरालिख्य कोणेषु स्वस्तिकानि च ।

[ न्यासः ]

व्यापकत्वेन तु पुरा मणिबन्धमुखादिगम् ॥ २० ॥
विन्यस्य मूलमन्त्रं तु हस्ते देहे च केवलम् ।
पश्चादादौ तु हस्ताभ्यां लक्ष्मीमन्त्रं तथा न्यसेत् ॥ २१ ॥

---

1 वारव्यः A

तदङ्गानि हृदादीनि हस्ते देहे च विन्यसेत् ।
तस्यानुगचतुष्कं यद्देवीनां तदनु न्यसेत् ॥ २२ ॥
प्रदेशिन्यादितो हस्ते देहे तदनु विन्यसेत् ।
उत्तमाङ्गेऽथ हृन्मध्ये ऊर्वोर्जानुद्वये तथा ॥ २३ ॥
लावण्याद्याश्च चत्वारो ह्यनामादौ करद्वये ।
अङ्गुष्ठान्तं करे न्यस्य देहे तदनु नारद ॥ २४ ॥
दक्षिणे च तथा वामे स्कन्धे पक्षद्वये तथा ।

[ लक्ष्म्या मानसयागः ]

न्यासं कृत्वा यथान्यायं श्रीकामोऽथ यजेद्धृदि ॥ २५ ॥
लययागप्रयोगेण लक्ष्मीमन्त्रं तु केवलम् ।
कृत्वाऽवलोकनाद्यं तु ततो बाह्ये तु विन्यसेत् ॥ २६ ॥

[ बाह्ययागार्थो मण्डले विन्यासः ]

मूर्तिमन्त्रयुतं मूलं कर्णिकोपरि नारद ।
सकलाकलदेहं च सर्वमन्त्रात्मकं प्रभुम् ॥ २७ ॥
तदुत्सङ्गगतां लक्ष्मीं स्वमन्त्रेणावतार्य च ।
पूर्वोक्तध्यानसंयुक्तां भोगमोक्षप्रसिद्धये ॥ २८ ॥
तदाग्नेये तदीशाने वायवीये च नैऋते ।
चत्वारि हृदयादीनि नेत्रं केसरसन्ततौ ॥ २९ ॥
तदग्रे दक्षिणे पृष्ठे वामपत्रे क्रमान्न्यसेत् ।
चतुष्टयं तु शुद्धा(ऋद्ध्या?)द्यं द्विभुजं तु तदाकृति ॥ ३० ॥
पद्मगौरप्रतीकाशं श्रीवृक्षचमराङ्कितम्[1] (?) ।
पद्मासने चोपविष्टं प्रेक्षमाणं तदाननम् ॥ ३१ ॥
स्वस्तिकानां तदीशादिकोणस्थाने निवेश्यते ।
लावण्याद्यचतुष्कं तु पीतवर्णं चतुर्भुजम् ॥ ३२ ॥
नीलकौशेयवसनं पद्मकुम्भकरान्वितम् ।
नलिनीध्वजहस्तं च सफलामलवृक्षधृत् ॥ ३३ ॥
द्वारेष्वस्त्रं चतुर्दिक्षु न्यस्य पूज्य यथा पुरा ।

[ जपहोमादिविधिः ]

मूलमन्त्रयुतां देवीं लक्ष्मीं लक्ष्मीप्रदां द्विज ॥ ३४ ॥

---

1 चरमाङ्कि V.

जप्त्वा कृत्वा ततो होमं सघृतैस्तु तिलाक्षतैः ।
सामलैः श्रीफलैश्चैव सक्तुलाजैस्तु[1] पङ्कजैः ॥ ३५ ॥
यथाशक्ति ह्यसङ्ख्यैस्तु होमान्ते च ततो द्विज ।
लक्ष्मीरूपधरो भूत्वा साधकः कृतनिश्चयः ॥ ३६ ॥
जपेल्लक्षाणि वै पञ्च शुद्धाहारो जितेन्द्रियः ।
होमं कुर्याज्जपान्ते तु क्रमाद्बिल्वफलाम्बुजैः ॥ ३७ ॥
पयोमधुघृताक्तैस्तु अयुतायुतसंख्यया ।

[ लक्ष्मीमन्त्रसिद्धिज सामर्थ्यम् ]

ददाति दर्शनं विप्र होमान्ते परमेश्वरी ॥ ३८ ॥
पुत्र सिद्धाऽस्मि ते ब्रूहि यत्ते मनसि चेप्सितम् ।
कुरु कर्माण्यभीष्टानि मन्मन्त्रेणाखिलानि च ॥ ३९ ॥
अद्य प्रभृति निश्शङ्को द्वन्द्वोपद्रववर्जितः ।
एवमुक्त्वा तु सा देवी याति यत्रागता तु वै ॥ ४० ॥
ततः कर्माणि वै कुर्याल्लक्ष्म्योक्तानि तु साधकः ।
तुष्टाऽभीष्टां श्रियं दद्यादर्थिनामर्थकामिनाम् ॥ ४१ ॥
संक्रुद्धो निर्धनं कुर्याद्वाङ्मात्रेण धरेश्वरम् ।
शुद्धं कुर्यात्सकृद्ध्यानान्मन्त्रजापाच्च हाटकम् ॥ ४२ ॥
पूरयित्वाऽम्भसा कुंभं क्षीरेण मधुनाऽथवा ।
निधाय दक्षिणे हस्ते वामं तदुपरि न्यसेत् ॥ ४३ ॥
शतमष्टाधिकं मन्त्रं जपेद्ध्यानसमन्वितम् ।
रसेच्छासुनिवेशस्थो ह्येकाचित्तः समाहितः ॥ ४४ ॥
रसेन्द्रत्वं समायाति यत्कुम्भे त्वाहृतं जलम् ।
सरसो लक्षवेधी स्याच्छस्त्रादीनां भवेद्द्विज ॥ ४५ ॥
करोति कायमजरं जरारोगविवर्जितम् ।
अङ्गुष्ठोदरमात्रं तु पुरा पाषाणमाहरेत् ॥ ४६ ॥
दक्षिणेन च हस्तेन वामे च बदरीसमम् ।
अभिमन्त्र्य तु द्वौ मुष्टी द्वे शते षोडशाधिके ॥ ४७ ॥
दक्षिणस्थं तु पाषाणं रत्नत्वमुपयाति च ।
वामे मुक्ताफलत्वं च महामूल्ये तु ते उभे ॥ ४८ ॥

1 तिलामेतु A तिला जतु C. L.

यद्यदिच्छति जात्या वै तत्तद्रत्नं भवेत्तदा ।
तथा मुक्ताफलं यद्यत्प्रतिभाति करोति तत् ॥ ४९ ॥
गोगजाश्वसमुद्भूतमस्थि चादाय पाणिना ।
शतार्धमान्त्रितं कृत्वा प्रवालत्वं प्रयाति तत् ॥ ५० ॥
शताभिमान्त्रितं कृत्वा त्रपुसीसे तथाऽयसम् ।
जायते कलधौतं तु रजतं वाऽथ निर्मलम् ॥ ५१ ॥
यद्यद्गृहीत्वा विप्रेन्द्र यं यं वा तु समीहते ।
क्रुद्धो वा परितुष्टश्च तत्तत्कुर्यात्तु नान्यथा ॥ ५२ ॥
एवमश्ममयानां तु अन्यत्वमुपपद्यते ।
या या मनासि वै यस्य विभूतिं प्रददाति च ॥ ५३ ॥
तां तां ददाति तस्याशु धनधान्यगवादिकम् ।
लिखित्वा भूर्जपत्रे तु यागन्यासक्रमेण तु ॥ ५४ ॥
रोचनाकुङ्कुमाभ्यां तु सन्धारयति यः सदा ।
सुवर्णवेष्टितं चाङ्गे लक्ष्मीमन्त्रं तु नारद ॥ ५५ ॥
तस्यायुषश्श्रियो वृद्धिस्सर्वसत्त्वाश्रयो[1] महान् ।
प्राप्नुयान्महतीं पूजां यत्र यत्र च संविशेत् ॥ ५६ ॥
इदमाराधनं प्रोक्तं श्रीकामानां समासतः ।

[ कीर्तिमन्त्रसाधनप्रकारः ]

कीर्तिमन्त्रविधानं तु सांप्रतं मेऽवधारय ॥ ५७ ॥
विलिख्य कमलं षोढा अनलासनसंस्थितम् ।
अङ्कयेच्छिरसा विप्र लाक्ष्म्यमङ्गगणं यथा ॥ ५८ ॥
सर्वत्र चास्त्रमन्त्रस्य तच्चिह्नं परिवर्जयेत् ।

[ कीर्तेः सखीमन्त्राः ]

शान्तिदं च ततस्सोमं मर्दनं[2] शङ्करं ततः ॥ ५९ ॥
क्रमेणालिख्य चतुरः कालपावकसंस्थितान् ।
व्यापी चान्द्री ततो माया एकैकस्मिंस्तु मूर्धनि ॥ ६० ॥
द्युतिः सरस्वती मेधा धृतिः कीर्तिः सखीगणः ।

---

1 त्रोपचयो A 2 मन्दर A

[ कीर्तेरनुचरमन्त्राः ]

आनन्दयुक्तं वरुणमप्रमेयं च केवलम् ॥ ६१ ॥
पवित्रमनलारूढं स्रग्धरं च तथाविधम् ।
आनन्देनापि चाक्रान्तं चतुर्णां मूर्ध्नि योजनम् ॥ ६२ ॥
विश्वाप्यायकरो व्यापी क्रमादनुचरास्त्वमी ।
वागीशो ह्यभयश्चैव प्रसादस्त्राणसंज्ञितः ॥ ६३ ॥

[ पूर्ववन्मण्डलादिविधानम् ]

न्यासो हृत्पद्मयागश्च सर्वं विद्धि पुरोदितम् ।
पूर्वोक्तं मण्डलं कृत्वा सितपीतं तदन्तरे ॥ ६४ ॥
किं तु वै पङ्कजं कुर्याद्विन्यसेत्तदनन्तरम् ।
विभोरुत्सङ्गगां कीर्तिं हृदादीनि यथा पुरा ॥ ६५ ॥

[ सखीनामनुचराणां च ध्यानप्रकारः ]

क्रमाद्ध्यानं सखीनां च शृणुष्वानुचरेष्वपि ।
द्विभुजा हेमवर्णाश्च कीर्तिरूपाः स्मिताननाः ॥ ६६ ॥
सुपुस्तकं करे वामे दक्षिणे चामरं करे ।
ध्यायेत्किंशुकवर्णास्ताः कान्तरूपा मनोहराः ॥ ६७ ॥
तदाऽनुगचतुष्कं तु चतुर्हस्तं सिताम्बरम् ।
वामदक्षिणहस्ताभ्यां मुख्याभ्यां तेषु चिन्तयेत् ॥ ६८ ॥
शङ्खमिन्दुशताभं च कदम्बाख्यं महाद्रुमम् ।
सुपुष्पं षट्पदोपेतं पराभ्यां च निबोध मे ॥ ६९ ॥
पूर्णचन्द्रोपमं वामे दर्पणं दक्षिणे द्विज ।
मयूरव्यजनं शुभ्रं ध्यात्वैवं पूजयेत्ततः ॥ ७० ॥

[ होमजपयोर्विधिः ]

अर्घ्यपुष्पादिकाः सम्यक् दत्वा शक्त्याऽथ होमयेत् ।
तिलानि चाज्यसिक्तानि गन्धधूपान्वितानि च ॥ ७१ ॥
देवीरूपं तु होमान्ते कृत्वा पुष्पाञ्जनाम्बरैः ।
एकान्ते विजने स्थित्वा मौनी मूलफलाशनः ॥ ७२ ॥
जपेल्लक्षत्रयं मन्त्री जपान्ते होममाचरेत् ।
लक्षैकसंख्यं विप्रेन्द्र तण्डुलैस्तिलमिश्रितैः ॥ ७३ ॥

कापिलेन घृतेनैव क्षीरमिश्रेण नारद ।
एकैकं च घृतादीनां सहस्रं चाथ होमयेत् ॥ ७४ ॥
दद्यात्पूर्णाहुतिं पश्चात् क्षीरेणाज्यान्वितेन च ।
पतितायां तु पूर्णायामायाति परमेश्वरी ॥ ७५ ॥
साधु साध्विति वै ब्रूते स्थित्वाऽग्रे साधकस्य च ।
एह्येहि परमं धाम त्यजेदं भौतिकं पुरम् ॥ ७६ ॥
उपभुङ्क्ष्व परान्भोगानक्षमध्यगतो महान् ।
मदीयेनाखिलं कर्म मन्त्रेण कुरु साधक ॥ ७७ ॥
एवमुक्त्वा तु सा देवी गगनं च व्रजेत्ततः ।
साधकः कीर्तिमन्त्रेण कुर्यात्कर्म यथेप्सितम् ॥ ७८ ॥

[ कीर्तिमन्त्रसिद्धिजन्य सामर्थ्यम् ]

ददाति यस्य यत्किञ्चित्तस्य तच्चाक्षयं भवेत् ।
तेनासौ लभते कीर्तिं यावच्चन्द्रार्कतारकम् ॥ ७९ ॥
प्रचण्डानां मनुष्याणां मध्यस्थो यदि बुध्यते ।
वक्ति संसदि वा किंचित् प्राप्नुयाद्विपुलं यशः ॥ ८० ॥
अभिभूय जनान्सर्वानुत्कृष्टत्वं प्रयाति च ।
जप्त्वा सिद्धान्नभाण्डं तु स्वल्पं कालेऽन्नसङ्कटे ॥ ८१ ॥
यथेच्छानां जनानां तु यथेच्छमशनं द्विज ।
ददाति चाक्षयं तस्मात्सप्ताहमनिशं यदि ॥ ८२ ॥
प्राप्नुयान्महतीं कीर्तिं यावदाभूतसंप्लवम् ।
सुभिक्षे लवमात्रं तु प्रदाय कनकस्य च ॥ ८३ ॥
परिजप्य सहस्रं तु विधिना परिसंस्थितम् ।
प्रयाति तत्प्रभूतत्वं दीयतेऽर्थिजनाय च ॥ ८४ ॥
अविच्छिन्नं द्विसप्ताहं संक्षयं नाधिगच्छति ।
तेनासौ महतीं कीर्तिं प्राप्नुयाच्छाश्वतीं द्विज ॥ ८५ ॥
आदाय तोयकलशं नागेन्द्रभवनाद्विज ।
प्रयायान्मरुभूमिं वै तत्र निम्ने तु भूतले ॥ ८६ ॥
निक्षिप्य पर्वताग्रे वा सहस्रपरिमन्त्रितम् ।
स पन्नगेश्वरस्तत्र परिचारान्वितो द्विज ॥ ८७ ॥
रक्षन्नुदकमातिष्ठेद्यावत्तिष्ठति मेदिनी ।

तेनासौ महतीं लोके कीर्तिं प्राप्नोति नारद ॥ ८८ ॥
काले तु बीजरोहीये यदि देवो न वर्षति ।
आदाय मृत्कणं हस्ते तटाकाज्जलमर्दितम् ॥ ८९ ॥
तं मध्यस्थभयक्लिन्नं[1] (?) परिजप्य शतत्रयम् ।
[2]कख (मुख ?) श्वासैस्तु सन्तप्तं कृत्वा मन्त्रमनुस्मरेत् ॥ ९० ॥
प्रक्षिपेद्गगने तद्वन्मेघत्वमुपयाति च ।
पूरयेन्मेदिनीं सर्वां जलेन जलदस्तु सः ॥ ९१ ॥
तदाज्ञया वसेत्तावत् तस्मिन्देशे स मेघराट् ।
वर्षं तदुपयोग्यं च यावत्संपद्यतेऽखिलम् ॥ ९२ ॥
तेनासौ महतीं कीर्तिं प्राप्नुयाच्च त्रिलौकिकीम् ।
संपादयाति विप्रेन्द्र यस्य यन्मनसेप्सितम् ॥ ९३ ॥
प्रभावान्मन्त्रराजस्य प्रसादादच्युतस्य च ।
लिखितं पूर्ववद्बध्वा वस्त्रे वा दक्षिणे भुजे ॥ ९४ ॥
प्राप्नुयान्महतीं वृद्धिं पूर्णां कीर्तिं सरस्वतीम् ।
एतत्संक्षेपतः प्रोक्तं कीर्तिमन्त्रस्य नारद ॥ ९५ ॥

[ जयामन्त्रसाधनप्रकारः ]

संविधानमपूर्वं च सन्ततेरपि भूतिदम् ।
जयाख्यमधुना विद्धि विधानं विष्णुभाविनाम् ॥ ९६ ॥

[ जयाया अङ्गमन्त्रः ]

आदाय शाश्वतं षोढा कृत्वा चानलगं क्रमात् ।
आक्रान्तं पूर्ववत्कुर्यादङ्गषट्कस्य सिद्धये ॥ ९७ ॥

[ जयायाः सखीमन्त्रः ]

अजितं विष्णुना युक्तं वाराहं रामवेष्टितम् ।
व्यापकं केवलं चाऽथ सोमं रामसमन्वितम् ॥ ९८ ॥
शिरसा चिह्नयेत्प्राग्वच्चतुरः क्रमशो मुने ।
सख्यो जयन्ती विजया तृतीया त्वपराजिता ॥ ९९ ॥
सिद्धिश्चतुर्थी विज्ञेया शृणुष्वानुचराननु ।

1 भयाक्लिष्ट A 2 खग A

[ जयाया अनुचरमन्त्रः ]

आरूढः पद्मनाभस्तु शाश्वतः केवलो द्विज ॥ १०० ॥
प्रधानं च तथोद्दामं क्रमेणैतानि योजयेत् ।
येषामुपरि वैनेयश्चान्द्री व्योमसमन्वितः ॥ १०१ ॥
प्रतापी जयभद्रश्च तृतीयस्तु महाबलः ।
उत्साहाख्यश्चतुर्थस्तु कृत्वा न्यासं तु पूर्ववत् ॥ १०२ ॥
[1]इष्ट्वा भुवननाथं तु पूजयेच्च ततो बहिः ।

[ मण्डलादिविधानम् ]

मण्डलं पूर्ववत्कृत्वा तन्मध्ये पङ्कजं लिखेत् ॥ १०३ ॥
नीलोत्पलाभातुल्येन रजसा [2]च स ( चाष्ट? ) पत्रकम् ।
तत्रोत्सङ्गगतां विष्णोर्हृदयाद्योजयेज्जयाम् ॥ १०४ ॥
शेषमन्त्रगणन्यासान्पूर्वपूर्वक्रमेण तु ।
कर्तुः ( कुर्यात् ? ) ध्यानं च सर्वेषां समासादवधारय ॥ १०५ ॥

[ जयायाः सखीनामनुचराणां च ध्यानप्रकारः ]

हृदादीनां पुरा प्रोक्तं मूलमन्त्रप्रसङ्गतः ।
नीलनीरजवर्णाश्च प्रसन्नवदनेक्षणाः ॥ १०६ ॥
पीताम्बरधराः सर्वाः सख्यः कनककुण्डलाः ।
सितचामरहस्ताश्च चित्रपत्रफलोद्यताः ॥ १०७ ॥
निरीक्षमाणा वदनं जयाया अजितस्य च ।
कुन्दकुड्मलवर्णाभाः प्रसन्नमुखपङ्कजाः ॥ १०८ ॥
रक्ताम्बरधराश्चैव चतुर्हस्ता महाबलाः ।
धनुर्बाणकराश्चैव गदाचक्रधरा द्विज ॥ १०९ ॥
चत्वारोऽनुचरा ध्येयाः पुष्पाभरणभूषिताः ।
पूजयेच्च ततो भक्त्या होमं कुर्यादनन्तरम् ॥ ११० ॥

[ होमादिविधिः ]

तिलैः सिद्धार्थकोपेतैः हविषा गुग्गुलेन च ।
होमावसाने विप्रेन्द्र कृत्वा रूपं जयात्मकम् ॥ १११ ॥
जयाऽहमिति वै बुद्ध्वा चेतसोपस्थितं महत् ।

---

1 वननाभस्तुमध्ये तु C L, Y. ' इष्ट्वा हृदन्तरे पूर्वम् ' इति पाठश्चेत्प्रकरणसमुचितः ।
2 चाष्टपल्लवम् A

वीरस्थानं समासाद्य निश्शङ्को जनवर्जितम् ॥ ११२ ॥
वर्मणाऽस्त्रेण दिग्बन्धं कृत्वा दुष्टनिबर्हणम् ।
प्रारभेत जपं पश्चात् पयोऽन्नफलभुक्सदा ॥ ११३ ॥
युक्तोऽन्तरसहायेन मौनी ध्यानपरायणः ।
प्रणिपत्य हरिं मूर्ध्ना प्राक् स्वमन्त्रेण नारद ॥ ११४ ॥
जपेल्लक्षचतुष्कं तु जपान्ते होममाचरेत् ।
समित्प्रादेशमात्रा तु रक्तचन्दनसंभवा ॥ ११५ ॥
तासामयुतहोमस्तु घृताक्तानां तु होमयेत् ।
सिद्धार्थकायुते द्वे च मधुमिश्रा महामुने ॥ ११६ ॥
अयुतत्रितयं चाथ जुहुयादसितैस्तिलैः ।
मधुत्रितयसंपृक्तैरन्ते पूर्णाहुतित्रयम् ॥ ११७ ॥
मधुक्षीरघृतैर्विप्र क्रमेण परिहोमयेत् ।
ततो भगवती विप्र समायाति जया स्वयम् ॥ ११८ ॥

[ जयायाः प्रसादः ]

सुसिद्धाऽस्मि च ते पुत्र मन्मन्त्रेण समाचर ।
यदभीष्टं तु वै कार्यं निश्शङ्को विगतज्वरः ॥ ११९ ॥
उक्त्वेत्यदर्शनं याति देवी नारायणात्मिका ।

[ जयामन्त्रसिद्धिजन्यं सामर्थ्यम् ]

ततः कर्माणि कुर्वीत विविधानि त्वनेकशः ॥ १२० ॥
लोकेऽस्मिन्यान्यभीष्टानि आत्मनश्च परस्य वा ।
तत्राप्युद्देशतो वक्ष्ये शृणु तत्त्वेन नारद ॥ १२१ ॥
ज्वालाभद्रा[1]सनां ध्यायेद्देवीमन्त्रेण साधकः ।
उद्ग्राहयति वै यस्य यस्मिन्यस्मिंस्तु वस्तुनि ॥ १२२ ॥
निर्जित्य न्यायतस्तं वै जयमाप्नोत्ययत्नतः ।
गजाश्वशस्त्रभृत्पूर्णं परसैन्यं [2]बलान्वितम् ॥ १२३ ॥
दृष्ट्वाऽन्यस्य समायातं हन्तुमभ्युद्यतं रणे ।
परिजप्य धनुः खड्गं खेटकं बाणपञ्चकम् ॥ १२४ ॥
प्रेरयेद्यस्य वै दत्वा स गत्वा च चमूमुखम् ।
विदारयति चैकाकी जयमाप्नोति शाश्वतम् ॥ १२५ ॥

1 वद्र Y C L. 2 महाबलम् A

ध्यात्वा दक्षिणपाणिस्थं त्रिकोणं वह्निमण्डलम् ।
तन्मध्ये चिन्तयेद्देवीं परिवारसमन्विताम् ॥ १२६ ॥
मत्तेभसिंहसर्पाणामशनीनां च दर्शयेत् ।
क्षिप्रं पराङ्मुखा यान्ति दृष्ट्वा हस्ततलं तु तत् ॥ १२७ ॥
खादिरं मुसलं स्पृ(स्तृ?)ष्ट्वा आदाय शतमन्त्रितम् ।
कृत्वा गत्वा बिलद्वारं [1]चातुर्वर्ण्यजनान्वितम् ॥ १२८ ॥
मुसलाहननान्यष्टौ दद्यात्तत्र शनैः शनैः ।
देवीमन्त्रे च (ण?) विप्रेन्द्र अस्त्रसंपुटितेन तु ॥ १२९ ॥
फट्कारान्तेन तु ततो बिलयन्त्रं व्रजेदधः ।
समस्तजनसंयुक्तो विशेषात्साधकोत्तमः ॥ १३० ॥
भित्वा यन्त्राण्यनेकानि जित्वा दानवपुङ्गवान् ।
जनानां योजनं तत्र कृत्वा कान्तागणैः सह ॥ १३१ ॥
दत्वा रसात्मकं पानं स्वहस्तेन महाबलः ।
स निर्याति स्वमार्गेण तेनैव स्वनिवेशनम् ॥ १३२ ॥
करोति यदि विप्रेन्द्र मतिं मन्त्री जगत्त्रये ।
जयं प्रत्यविचारेण गदाचक्रधरोद्यतः ॥ १३३ ॥
पाशाङ्कुशधरो वाऽथ जयं प्राप्नोति नान्यथा ।
लिख्य योजनया भूर्जे कुङ्कुमेन घनेन च ॥ १३४ ॥
संपुटीकृत्य वै नाम निधाय जनमध्यगम् ।
सदाऽसौ जयमाप्नोति दिव्यैः सर्वैस्तु लीलया ॥ १३५ ॥
विलिख्य चन्दनेनैव पयसा कुङ्कुमेन च ।
धारयेद्यो गले वस्त्रे भुजे वामेऽथ दक्षिणे ॥ १३६ ॥
स सर्वत्र जयं विप्र संप्राप्नोत्यविचारतः ।
जयार्थं मुनिशार्दूल मन्त्रं वै यत्र कुत्रचित् ॥ १३७ ॥
मन्त्री प्रयोजयेच्छश्वत्तत्र तत्राप्नुयाज्जयम् ।
जयाविधानमित्येतत्समासात्परिकीर्तितम् ॥ १३८ ॥

[ मायामन्त्रसाधनप्रकारः ]

मायाख्यमधुना वच्मि संविधानं यथास्थितम् ।

---

1 चतुर्वर्ण्य A

[ मायाया अङ्गमन्त्रः ]

षोढा प्रधानमादाय कालपावकसंस्थितम् ॥ १३९ ॥
ततस्तच्चाङ्कयेत्प्राग्वत्स्वरैः प्राक् शिरसा तदा ।
षडेतान् हृदयादीन्वै विद्धि शेषं महामुने ॥ १४० ॥

[ सखीमन्त्राः ]

प्रधानोऽथ ध्रुवो रस्थो मद(दम[1] ?)नो पोऽनलोर्ध्वगः ।
आदेयास्त्वथ सर्वेषामोदनानन्दकौ क्रमात् ॥ १४१ ॥
भुवनो योगधाता च व्यापी चान्द्री चतुर्ष्वपि ।
मोहिनी भ्रामणी दुर्गा प्रेरणी च महामुने ॥ १४२ ॥
मायासख्यः स्मृता ह्येताश्चत्वारो रक्तभासुराः ।

[ सखीना ध्यानप्रकारः ]

लावण्येन तु वीर्येण सौन्दर्येण च तेजसा ॥ १४३ ॥
मायाख्येन तु संयुक्ताः सितवस्त्रानुलेपनाः ।
चामराङ्कुशहस्ताश्च बद्धपद्मासनस्थिताः ॥ १४४ ॥

[ मायाया अनुचरमन्त्राः ]

प्रधानं गोपनोपेतं तं तु वै केवलं त्वतः ।
शङ्करं कमलं चैव क्रमाद्द्याच्च केवलौ ॥ १४५ ॥
सर्वेषामुपरि ब्रह्मन् व्यापीं चान्द्रीं च विन्यसेत् ।
प्रागेकैकस्य चोङ्कारमन्ते संज्ञानमोयुतम् ॥ १४६ ॥
मायामयो महामोहः शम्बरश्च कलीश्वरः ।
चत्वारोऽनुचरा ह्येते ध्येयास्त्वलिकुलप्रभाः ॥ १४७ ॥

[ मायानुचराणां ध्यानप्रकारः ]

चतुर्भुजा महाकायाः सौम्यवक्त्राः स्मिताननाः ।
केयूराभरणोपेताः पीताम्बरधरास्तु वै ॥ १४८ ॥
हारनूपुरसंयुक्ता नानाकुसुमभूषिताः ।
तुषारधूलिधवलाः खड्गपाशसमुद्यताः ॥ १४९ ॥
बाणं कार्मुकमन्यस्मिन्नातपत्रं करद्वये ।
एवमुद्धृत्य विधिवन्मायीयां मन्त्रसन्ततिम् ॥ १५० ॥

[ न्यासविधिः ]

स्वहस्ते पूर्ववन्न्यस्य विग्रहे तदनन्तरम् ।

---

1 दमनो वै नलो A

हृदयान्तर्गतं चेष्ट्वा बाह्यतश्चावतार्य च ॥ १५१ ॥

[ बाह्ययागविधिः ]

मन्त्रोत्सङ्गगता न्यस्याः प्राग्वच्चाङ्गादयोऽखिलाः ।

[ मुद्राविधानम् ]

प्रपूज्य विधिवद्देवीं स्वां मुद्रां दर्शयेत्ततः ॥ १५२ ॥
प्रागुक्तानां चतुर्णां तु भिन्नानामपि [1]सा स्मृता ।
सर्वासां देवतानां च [2]मुद्रासंघर्षसङ्गिकम् ॥ १५३ ॥
मूलमन्त्रोदितं विद्धि देवताङ्गैः समन्वितम् ।
साधारणं सखीनां च षोडशानां तु नारद ॥ १५४ ॥
स्वमन्त्रयोजितामेकां मुद्रामप्यवधारय ।

[ महायोनिमुद्रा ]

संमुखौ तु करौ कृत्वा तथा वै संप्रसारितौ ॥ १५५ ॥
कनिष्ठानामिकाभ्यां वै युगलं युगलं द्विज ।
मेलयेन्नखदेशाच्च यथा स्यादेकपिण्डवत् ॥ १५६ ॥
अङ्गुलीभिश्च तिसृभिः पाणिमध्ये निराश्रयम् ।
अङ्गुष्ठौ दण्डवत्कृत्वा प्रान्तलग्नौ प्रसारितौ ॥ १५७ ॥
अङ्गुलीनां चतसृणां विश्रान्तौ चोदरावधि ।
सर्पकुण्डलवत्कृत्वा प्रयत्नात्तर्जनीद्वयम् ॥ १५८ ॥
प्रसार्य चाग्रतो लग्ने मध्यमे द्वे महामुने ।
नीता सा जन्मभूमेस्तु समारभ्य करद्वयम् ॥ १५९ ॥
कुर्याच्चैवातिसंलग्नं मणिबन्धावसानतः ।
ईषदस्पृष्टमूलेन मणिबन्धं करद्वयात् ॥ १६० ॥
कुर्याद्विकासितं चैव मुद्रैषा मुनिसत्तम ।
महायोन्यभिधाना च त्रिलोकजननी पुरा ॥ १६१ ॥
वशीकुर्याज्जगत्सर्वं कामतो यदि योजयेत् ।
अत्रानुष्ठानसक्ता स्त्री बध्वा दूरात्प्रदर्शयेत् ॥ १६२ ॥
मुनीनां गतसङ्गानां क्षोभमायान्ति ते क्षणात् ।
पुरुषोऽत्राभियुक्तो वा दर्शयेद्वनितासु च ॥ १६३ ॥
निवृत्तकामधर्मासु अबलास्वथवा मुने ।

1 ताः A 2 सङ्कार्पसङ्गतिम् A

क्षुभ्यन्ति मदनार्ताश्च सकामासु च का कथा ॥ १६४ ॥

[ अनुचरमुद्रा ]

वक्ष्येऽथानुचराणां तु षोडशानां समासतः ।
द्विजैरमुद्रां(?)सामान्यां सन्निधीकरणे शुभाम् ॥ १६५ ॥
पृष्ठलग्नौ करौ कृत्वा मोक्षयेत्तदनन्तरम् ।
प्रादेशिनीयुगं चैव कन्यासायुगलं तथा ॥ १६६ ॥
अधोमुखं तु सुस्पष्टं ताभ्यां मध्यान्महामुने ।
कनिष्ठिकाद्वयं लग्नं विरलं तर्जनीद्वयम् ॥ १६७ ॥
मध्यमानामिकानां तु युग्मं युग्मं तु धारयेत् ।
एकलग्नं नखोद्देशाद्यावत्पर्व तु मध्यमम् ॥ १६८ ॥
ऊर्ध्ववक्त्रं मुनिश्रेष्ठ समेन धरणेन तु ।
सुस्पष्टौ लम्बमानौ च अङ्गुष्ठौ चाप्यधोमुखौ ॥ १६९ ॥
परस्परं तु दूरस्थौ मुद्रैषा सर्वकामदा ।
स्वमन्त्रसंयुतां चैव पूजाकाले प्रदर्शयेत् ॥ १७० ॥
चतुर्भुजानुकारा[1] च (?) सर्वेषां सिद्धिकामदा ।
एवं मुद्रागणं दत्वा जप्त्वा च तदनन्तरम् ॥ १७१ ॥

[ होमादिविधानम् ]

होमं तदनु वै कुर्यात्तिलैः सिद्धार्थकान्वितैः ।
सकुङ्कुमघृतक्षीरसंप्लुतैस्तण्डुलादिभिः ॥ १७२ ॥
ततो नियममाश्रित्य कृत्वा तदनु नारद ।
देवीरूपं स्वमात्मानं भावनाप्सु ( ह्यु ? ) पचारतः ॥ १७३ ॥
प्रयायाद्विजनस्थानं [2]मौढयुक् स्वासनान्वितः ।
जपेल्लक्षाणि वै सप्त पूर्वोक्तविधिना व्रती ॥ १७४ ॥
क्षीरमूलफलाहारो देशकालवशात्तथा ।
अयाचितैकभिक्षाशी तदभावाच्च नारद ॥ १७५ ॥
स्वशिष्यसाधितं चान्नं मन्त्रपूतमसैन्धवम् ।
तैलमांसविनिर्मुक्तं सन्ध्याकालेऽप्युपस्थिते ॥ १७६ ॥
अतृप्तमपि भुञ्जीत भावितं मधुसर्पिषा ।
जपान्ते विधिवन्मन्त्री होमं कुर्यात्प्रयत्नतः ॥ १७७ ॥

---

1 रां च A  2 प्रोढ A

बलां मोदां तथा मांसीं चक्राङ्गीं नागकेसरम् ।
कुंकुमं चन्दनं क्षोदं रजनीचूर्णमेव तु ॥ १७८ ॥
मेलयेत्सुस्थि(सि?)तानां च तिलानां मधुना तथा ।
भावयेत्सघृतेनैवं त्रिलक्षं जुहुयात्ततः ॥ १७९ ॥
मध्यमानामिकाभ्यां च अंगुष्ठाग्रेण नारद ।
अन्तेऽयुतत्रयं चैव समिधां परिहोमयेत् ॥ १८० ॥
प्राग्राजार्कतरूत्थानां खादिराणां ततोऽपरम् ।
सुरदारुमयीनां च तृतीयमयुतं ततः ॥ १८१ ॥
दद्यात्पूर्णाहुतिं चैव विशुद्धेनान्तरात्मना ।
पतितायां तु पूर्णायामायाति परमेश्वरी ॥ १८२ ॥
परिवारान्विता देवी भाषते साधु साध्विति ।
कुरु कार्यमभीष्टं च मन्त्रेण त्वधुना व्रज ॥ १८३ ॥
इदमुक्त्वा व्रजेत्तूर्णं देवी विष्णुनिकेतनम् ।

[ सिद्धिज सामर्थ्यम् ]

ततः स साधकवरः कर्माणि विविधानि च ॥ १८४ ॥
प्रारभेन्मनसा विप्र यान्यभीष्टानि सर्वदा ।
आत्मार्थे वा परार्थे वा लेशतः शृणु नारद ॥ १८५ ॥
प्रजप्यामलकं बिल्वं सकृन्नृपगृहं विशेत् ।
कोशस्याग्रे विनिक्षिप्य यत्र कुत्र स्थितस्य च ॥ १८६ ॥
गगनात्पातिते (तति?) तूर्णं यद्यदुक्तं समीहते ।
यद्यच्चाभरणं विप्र यद्यद्वा वसनं शुभम् ॥ १८७ ॥
[1]एवं वै व्रीहिगुलिकं तथैव तिलतण्डुलम् ।
क्षिपेद्धान्यखले पूर्णे कोष्ठागारेऽथ खातके ॥ १८८ ॥
राजकीये तथा स्वर्णे (?) यत्र यत्र स्थितस्ततः ।
यद्यत्समीहते धान्यं सस्यं वा तण्डुलान्वितम् ॥ १८९ ॥
तत्तदग्रेऽथ गगनात्पततयथ यथेप्सितम् ।
एवमेव तु सिद्धान्नं गुलिकां परिजप्य च ॥ १९० ॥
क्षिप्त्वा महानसोद्देशे सिद्धान्नं वर्षयेत्क्षणात् ।
गुलिकां गोमयेनैव कृत्वा बदरसंमिताम् ॥ १९१ ॥

1 एतं A

निक्षिप्य गोव्रजस्यान्तस्सप्तवाराभिमन्त्रिताम् ।
ध्यानमात्रात्क्षणस्यान्ते दधिक्षीराज्यपूरिताः ॥ १९२ ॥
भाण्डाश्च पृष्ठतः पश्येद्यत्र तत्र स्थितो व्रती ।
प्रजप्य बदरं विप्र फलमन्यत्तु वा क्वचित् ॥ १९३ ॥
क्षिपेन्मधुवने राज्ञः फलाकृष्टिं करोति च ।
प्रपुष्पवाटिकायां तु पुष्पमेकं विनिक्षिपेत् ॥ १९४ ॥
जप्त्वा वारत्रयं मन्त्री पुष्पाण्याकर्षयेत्क्षणात् ।
यत्र यत्र तदङ्गोत्थं सप्तजप्तं विनिक्षिपेत् ॥ १९५ ॥
तत्र तत्र च तत्तिष्ठेत्संकल्पे तु कृते सति ।
यथेच्छं तु समाकृष्टं तत्र तत्र च तद्व्रजेत् ॥ १९६ ॥
न चापि साधकवरस्संविण्णो (ग्नो?) जायते क्वचित् ।
कृत्वाऽङ्गारकणं चैव शतजप्तं तु नारद ॥ १९७ ॥
क्षिपेत्सलिलमध्ये तु ज्वलन्तं (प्रज्वलत्?) तत्प्रदृश्यते ।
कुशाग्रस्थं जलकणं शतवाराभिमन्त्रितम् ॥ १९८ ॥
कृत्वा हुताशराशौ तु ज्वलमाने विनिक्षिपेत् ।
भवेत्पानीयमिव च स वह्निर्दृश्यते क्षणात् ॥ १९९ ॥
वालुकापरिपूर्णं तु अरण्यं च तृणोज्झितम् ।
दृष्ट्वा तत्र विनिक्षिप्य तृण च शतमन्त्रितम् ॥ २०० ॥
पुष्पपत्रसमाकीर्णं पत्रपल्लवसंकुलम् ।
कुर्यान्नन्दनतुल्यं तं तोयशालिसमावृतम् ॥ २०१ ॥
नानाविहगसंपूर्णं पत्तनोपवनान्वितम् ।
पुरप्राकारसंपूर्णं देवतायतनान्वितम् ॥ २०२ ॥
गेयदेवध्वनियुतं ललनाभिश्च शोभितम् ।
नृपाणामेतदाश्चर्यं दर्शनीयं सदैव हि ॥ २०३ ॥
अनोकहेष्वरण्येषु नीरसेषु सदैव हि ।
इच्छयाऽऽपस्तथाऽन्नानि भोगांश्च विविधानि च ॥ २०४ ॥
करोति मन्त्रितैर्लोष्ठैर्गोमयेनाष्टसङ्ख्यया ।
अरिवर्गे मुनिश्रेष्ठ संमुखे संस्थिते सति ॥ २०५ ॥
क्रोधाच्चैव वधोद्युक्ते एकाकी यदि तिष्ठति ।
जपमानस्तु वै सम्यक् संकल्प्य मनसा महत् ॥ २०६ ॥

आत्मीयं च वलं विप्र सैनिकायुधसङ्कुलम् ।
तस्य संपद्यते क्षिप्रं चमूः घोरपराक्रमा ॥ २०७ ॥
स[1] तन्त्रं तु गजाश्वं च नानाशस्त्रविभासितम् ।
दृष्ट्वा पराङ्मुखं याति हतौजस्कं रिपोर्वलम् ॥ २०८ ॥
करोति विप्र यत्किञ्चिन्मनसा मन्त्रमुच्चरन् ।
व्यलीकं सत्यभूतं च तत्तथा परिदृश्यते ॥ २०९ ॥
सुशुष्कं पादपं दृष्ट्वा ताडयेच्चरणेन तु ।
जपमानो महामन्त्रं तस्य पुष्पफलान्वितम् ॥ २१० ॥
रसपुष्पफलोपेतं पाणिभ्यां मन्त्रमुच्चरन् ।
पीडयेत्पादपं मन्त्री [2]शोषितं सोऽधिगच्छति ॥ २११ ॥
पर्वताग्रस्थितो मन्त्रं नाशार्थं संजपेद्यदि ।
व्रजेदधस्तात्तद्विप्र यावदिच्छति साधकः ॥ २१२ ॥
तुष्टः प्रोत्थापयेत्पश्चात्पातालात्पर्वतं पुनः ।
चन्दनेन रसेनैव मन्त्रं पद्मोदरे लिखेत् ॥ २१३ ॥
पत्रेष्वङ्गानि चालिख्य सुशोभनदिने ततः ।
पूजयित्वाऽर्घ्यपुष्पाद्यैर्वेष्टयेदथ पूर्ववत् ॥ २१४ ॥
धारयेद्यो महामन्त्रं तस्य सर्वा विभूतयः ।
सम्यगाविर्भवन्त्यत्र लोके निष्कण्टकः स च ॥ २१५ ॥
सुशोभनश्च दीर्घायुः परत्र शुभमाप्नुयात् ।
देवीचतुष्टयस्यैष सिद्धिसङ्घस्समासतः ॥ २१६ ॥
किञ्चिदुद्देशतः प्रोक्तः साधकानां हिताय च ।
नानाविधानि दिव्यानि प्रयच्छन्ति शुभानि च ॥ २१७ ॥
कर्माण्यतुलवीर्याणि अन्ते तु परमं पदम् ।
प्रकाशयति भक्तानां वैष्णवानां विशेषतः ॥ २१८ ॥

इति जयाख्यसहितायां शक्तिमन्त्रसाधनं नाम सप्तविंशः पटलः ।

---

1 स तत्र तु A    2 शोभित A

अथाङ्गमन्त्रसाधनं नामाष्टाविंशः पटलः ।

श्रीभगवान्—

अङ्गानां शृणु विप्रेन्द्र साधनं सिद्धिदं महत् ।
येन विज्ञातमात्रेण साधकः सुखमृच्छति[1] ॥ १ ॥

[ हृन्मन्त्रसाधनप्रकारः ]

[2]व्यापकत्वेन हृन्मन्त्रं विन्यसेत्तु करद्वये ।
[3]न्यस्य देहे च तदनु इष्ट्वा हृत्पद्ममध्यगम् ॥ २ ॥
विलिख्य च ततो बाह्ये चतुरस्रस्य मध्यतः ।
चतुर्द्वारस्य सुसितमष्टपत्रं कुशेशयम् ॥ ३ ॥
न्यस्य तत्कर्णिकायां तु ध्यात्वा मन्त्रेण पूर्ववत् ।
पूजयित्वा विधानेन जुहुयात्सुसितैस्तिलैः ॥ ४ ॥
तदन्ते हार्दकं रूपं कृत्वा तु विजनं व्रजेत् ।
जपेल्लक्षत्रयं तत्र लक्षषट्कं तु होमयेत् ॥ ५ ॥
सितचन्दनलिप्तानामाज्याक्तानां तथैव च ।
सुगन्धिजातिपुष्पाणां दद्यात्पूर्णाहुतिं ततः ॥ ६ ॥
पश्येत् स्वहृद्गतं मन्त्रं प्रबुद्धोत्फुल्ललोचनम् ।
इति मत्वा ममेदं वै सिद्धं तु हृदयेश्वरम् ॥ ७ ॥
ततः कर्माणि वै कुर्यात्तेन मन्त्रेण नारद ।

[ हृदयमन्त्रसिद्धिजं सामर्थ्यम् ]

शान्तिकं पौष्टिकं चैव स्वप्नस्थोऽथ शुभाशुभम् ॥ ८ ॥
आदिशत्यभियुक्तस्य तत्स्वार्थघटनोद्यतः ।
स्वप्नस्थानां नृपादीनां वनितानां विशेषतः ॥ ९ ॥
कृत्वा तु हृदये पादं राका ( ब्रूया ?)च्चोत्तिष्ठ दुर्मते ।
प्रसादयामुकं गत्वा साधकं च धनादिकैः ॥ १० ॥
स तथेति च वै मत्वा प्रबुद्धो निश्चितेन तु ।
यायादभ्यर्थयेत्तस्य साधकस्यामलात्मनः ॥ ११ ॥
स्नात्वा घनरसाभ्यां तु नाम हृत्संपुटीकृतम् ।
अम्भोजकर्णिकामध्ये सप्तम्यां सितपक्षतः ॥ १२ ॥
अर्धरात्रे समुत्थाय नैशेन सलिलेन तु ।

1 मश्नुते A 2 केवलं व्यापकत्वेन हृन्मन्त्र तु करद्वये A 3 न्यस्येत्

हार्दकं मूर्तिमन्त्रं तु सह नाम्ना [1]दले दले ॥ १३ ॥
लिखेद्दूर्वाङ्कुरेणैव पुष्यर्क्षेणानशनो व्रती ।
समस्तदोषशान्त्यर्थं समस्तसुखवृद्धये ॥ १४ ॥
समस्तापद्विमोक्षाय समस्तवनिताप्तये ।
एतद्धृदयमन्त्रस्य साधनं कथितं मया ॥ १५ ॥

[ शिरोमन्त्रसाधनप्रकारः ]

अधुना साधनं वक्ष्ये शिरोमन्त्रस्य नारद ।
न्यस्य हस्ते तथा देहे पूजयित्वा हृदन्तरे ॥ १६ ॥
लाक्षारसाक्तवर्णेन साब्जमालिख्य मण्डलम् ।
तन्मध्ये तु शिरोमन्त्रं प्राग्वद्ध्यात्वा यजेत्ततः ॥ १७ ॥
ताम्रं स्वर्णं तु जुहुयात् सघृतान्वै तिलानथ ।
भूत्वा रक्ताम्बरधरस्तन्मन्त्राकृतिविग्रहः ॥ १८ ॥
आक्रम्य गिरिमध्यं तु जपेल्लक्षाणि पञ्च वै ।
तदन्ते जुहुयान्मन्त्री लक्षत्रयमनन्यधीः ॥ १९ ॥
रक्तपाटलपुष्पाणां सुगन्धानां तु नारद ।
कुङ्कुमागरुलिप्तानां घृताक्तानां विशेषतः ॥ २० ॥
दद्यात्पूर्णाहुतिं पश्चात्कुङ्कुमेन घृतेन च ।
साकारं तु भ्रुवोर्मध्ये पश्येन्मन्त्रं जगत्प्रभुम् ॥ २१ ॥
ततः कर्माणि वै कुर्याल्लब्धसंवित् सुसाधकः ।
वशीकुर्याज्जगत्सर्वमात्मना च धनेन च ॥ २२ ॥

[ सिद्धिज सामर्थ्यम् ]

प्रजप्य शतवारं तु बाह्लीकं हेमभूषितम् ।
अङ्गुष्ठानामिकाग्रेण मर्दयित्वा निशाम्बुना ॥ २३ ॥
ललाटे तिलकं कुर्याद्द्विजानामिकया परम् ।
तदधोऽङ्गुष्ठसंस्थेन रजसा बन्धयेद्धृदि ॥ २४ ॥
दिनत्रयं [2]यथासङ्ख्यं जपन्सन्ध्यात्रयं चरेत् ।
चतुर्थेऽहनि संप्राप्ते मण्डलीको नराधिपः ॥ २५ ॥

1 दलोदरे A 2 शत साष्ट A

समेत्य प्रार्थयेत्तस्य प्रसादं कुरु मे प्रभो ।
गृहाण मे धनं राष्ट्रं दासीदासगजादिकम् ॥ २६ ॥
तस्मिन्नेव क्षणस्यान्ते समायाति रसातलात् ।
शतशो नागकन्याश्च रसायनकरोद्यताः ॥ २७ ॥
पिबेदं सुशुभं पानमस्माकं रमयस्व च ।
याताच्चतुर्थदिवसादारभ्येदं क्षणं प्रभो ॥ २८ ॥
न प्राप्नुमो धृतिं तत्र पाताले भवतो विना ।
किंनर्यश्चाथ यक्षिण्यस्तथा विद्याधरस्त्रियः ॥ २९ ॥
[1]साभिलाषाः समायान्ति साधकं प्रार्थयन्ति च ।
क्रीडते चेच्छया तासां स्ववशः स च नारद ॥ ३० ॥
यावदात्मसमीहा च पीत्वा पानवरं च तत् ।
शताभिमन्त्रितं कृत्वा निर्मलं भाजने जलम् ॥ ३१ ॥
अत्रानुसन्धयेन्मन्त्रमिमं संपूज्य यत्नतः ।
भविष्यद्भूतभव्येषु संशयो यस्य कस्यचित् ॥ ३२ ॥
तत्तद्दर्शयते मन्त्रः स्वदेशोत्थैः स्फुटाक्षरैः ।
नाम्न अन्तर्गतं मन्त्रं वशीकारे तु नारद ॥ ३३ ॥
जपेदाकर्षसिद्धौ वा साष्टं सूर्योदये शतम् ।
यःकश्चित्पुरुषो विप्र नारी वा मनसेप्सिता ॥ ३४ ॥
जपान्ते द्रुतमायाति मन्त्रस्यास्य प्रभावतः ।
लिखेन्मृगमदेनैव पयसा कुङ्कुमेन तु ॥ ३५ ॥
सितकर्पटखण्डे वै दूर्वाकाण्डैर्दिनोदये ।
त्रिकोणपुरमध्यस्थं त्रिपत्रकमलं मुने ॥ ३६ ॥
हृदयाद्यं तु संयुक्तमभिधानं तदन्तिके ।
तन्मूर्तिमन्त्रसंयुक्तं दद्यात्पत्रत्रये तथा ॥ ३७ ॥
यो धारयति विप्रेन्द्र रक्तसूत्रेण वेष्टितम् ।
वस्त्रैर्वा वा(बाहौ ?) गले वाऽथ लम्बमानं तु वा हृदि ॥ ३८ ॥
यत्र तत्र जयस्तस्य पूजा भवति पुष्कला ।
व्यालैर्व्याधैर्गजैश्चैव तस्करैर्घोरविक्रमैः ॥ ३९ ॥

---

1 देवयोषाः A

न शक्यतेऽभिभवितुं मन्त्रस्यास्य प्रभावतः ।
एतन्मूर्धाख्यमन्त्रस्य विधानं कथितं मया ॥ ४० ॥

[ शिखामन्त्रसाधनप्रकारः ]

वक्ष्येऽधुना शिखाकल्पं संक्षेपाच्छृणु नारद ।
कृत्वा न्यासं तु हृद्यागं बहिरालिख्य मण्डलम् ॥ ४१ ॥
चतुरस्रं चतुर्द्वारं रेखापञ्चकभूषितम् ।
द्वाराणि सितवर्णानि रक्तवर्णानि चाश्रयः ॥ ४२ ॥
तन्मध्ये पङ्कजं कुर्याद्भिन्नाञ्जनसमप्रभम् ।
तत्रावतार्य हृदयाद्विन्यस्य च यजेत्ततः ॥ ४३ ॥
होमावसानं कृत्वा तु कृष्णाम्बरधरो व्रजेत् ।
शिखरप्रान्तभूभागं जपेल्लक्षत्रयं ततः ॥ ४४ ॥
जपान्ते जुहुयात्तत्र रक्तपुष्पायुतत्रयम् ।
रक्तचन्दनसंयुक्तं तदन्ते चायुतत्रयम् ॥ ४५ ॥
जुहुयाच्चन्दनेद्धानां मध्वाक्तानां तु नारद ।
दद्यात्पूर्णाहुतिं चान्ते चन्दनेन घृतेन च ॥ ४६ ॥
तदन्ते मन्त्रराट् सम्यक् ब्रह्मरन्ध्रोर्ध्वगो वदेत् ।
गच्छ त्वं कुरु कर्माणि विविधानि महामते ॥ ४७ ॥
परितुष्टाऽस्मि ते सम्यक् होमेन च जपेन च ।

[ मन्त्रसिद्धिजं सामर्थ्यम् ]

ततस्साधकमुख्योऽसौ कुर्यात्कर्म यदीप्सितम् ॥ ४८ ॥
मन्त्रेणाद्यन्तरुद्धेन जपेन्नागवराभिधाम् ।
समायाति फणीन्द्रोऽपि हस्ते कृत्वा रसायनम् ॥ ४९ ॥
दर्शयेत्स्थाननिचयं निधीनां क्ष्मातले स्थितम् ।
तदाज्ञया वसेच्चैव दुर्गे तु गिरिमस्तके ॥ ५० ॥
प्रदद्ज्जलमक्षय्यं स्वादुयुक्तं सुशीतलम् ।
क्षीरवृक्षलतायुग्मं स्फुटमादाय चोन्नतम् ॥ ५१ ॥
मन्त्रोदकेन संस्नाप्य बध्नीयात्तद्धटद्वये ।
स्तंभद्वयेऽथवा विप्र मुञ्जाद्यैर्मन्त्रितैस्तृणैः ॥ ५२ ॥
प्रजप्य गुग्गुलुं धूपं शिखामन्त्रेण सप्तधा ।

लताभ्यां मध्यतो दद्यात्प्रकंपेत शनैः शनैः ॥ ५३ ॥
तन्मध्ये जपमानं तु (नस्तु ?) पुष्पं संधार्य पाणिना ।
गृहीत्वा मनसा चिन्तां या यस्य परिरोचते ॥ ५४ ॥
ऋतं तद्यदि विप्रेन्द्र कुसुमं करमध्यगम् ।
समाहरेत्तत्तु बलादनृतं यदि तद्भवेत् ॥ ५५ ॥
प्रयाते (ति ?) दूरतो वेगाच्चालयित्वा घटद्वयम् ।
प्रणष्टद्रव्यसंदेहे चोरेणापहृते तु वै ॥ ५६ ॥
कुर्यादेतल्लताकर्म परमर्मावघट्टने ।
अथवा मुनिशार्दूल दृष्ट्वा निकटवर्तिनम् ॥ ५७ ॥
समं घटद्वयं भूमावेकजातिं सुलक्षणम् ।
स्थितं लताद्वयं ताभ्यां मनसा परिकल्प्य च ॥ ५८ ॥
चिन्तां कृत्वा जपेन्मन्त्री वीक्षमाणो लताद्वयम् ।
प्रणष्टद्रव्यसंज्ञेन ......... तत्र वै ॥ ५९ ॥
सत्यविज्ञापनार्थं तु समागम्य परस्परम् ।
वेष्टयित्वात्मनात्मानमनृतज्ञापनाय च ॥ ६० ॥
नत्वाऽवनिं शनैर्विप्र संस्पृशेत्तां पुनःपुनः ।
मुसलद्वितयं वाऽथ भूमौ संरोप्य नारद ॥ ६१ ॥
हस्तद्वयान्तरेणैव साध्यं संपूज्य धूपयेत् ।
पुरोदितं परिज्ञेयमथ विप्र शरद्वयम् ॥ ६२ ॥
निधाय भूमौ तन्मध्ये करमात्रं परित्यजेत् ।
ताभ्यां कृत्वा तु संस्कारं प्रागुक्तपरिशुद्धये ॥ ६३ ॥
विलिख्य लोहकीलेन पूरयेच्च महामते ।
सुस्पष्टं कुङ्कुमेनैव नाममन्त्रपुटीकृतम् ॥ ६४ ॥
पक्वमृत्कर्पराणां तु शंकार्थं यत्रकुत्रचित् ।
जलमध्ये तु निक्षिप्य....संज्ञाप्य कर्परम् ॥ ६५ ॥
प्लुतमास्ते जलोर्ध्वे तु निश्शङ्कं तदधो वसेत् ।
यत्स्व(द्रा ?)व्रीह्यादयश्चैव कार्यास्सप्ताभिमन्त्रिताः ॥ ६६ ॥
तस्कराणां तु शङ्कार्थं प्रदेया वामपाणिना ।
दक्षिणे तु करे तेषां मुष्टिं संवेशयेत्ततः ॥ ६७ ॥

शतैकसंख्यया तिष्ठेज्जपन्मन्त्रं तु नारद ।
प्रदह्यन्ते च चोराणां बीजानि करकानि च ॥ ६८ ॥
धारयेत्पूर्वविधिना भूर्जे वा सितकर्पटे ।
ददात्यभीष्टं भक्तानां निर्विघ्नेन तु नारद ॥ ६९ ॥
एताच्छिखाख्यमन्त्रस्य संविधानं मयोदितम् ।

[ कवचमन्त्रसाधनप्रकारः ]

कवचस्याधुना विप्र किंचिदुद्देशतः शृणु ॥ ७० ॥
न्यस्य चेष्ट्वा च हृदये मण्डलं च तनो लिखेत् ।
तन्मध्ये पंकजं कुर्यात्पीतकृष्णोज्ज्वलेन तु ॥ ७१ ॥
तन्मिश्रितेन रजसा तन्मध्ये चावतार्य वै ।
प्रपूज्य पूर्वविधिना कुण्डस्थमथ तर्पयेत् ॥ ७२ ॥
सितकृष्णैस्तथा ताम्रैस्तिलैर्मध्वाज्यभावितैः ।
दत्वा पूर्णाहुतिं कृत्वा रूपं कवचसंज्ञितम् ॥ ७३ ॥
प्रयायाद्रूगृहं विप्र गुहां वाऽप्यथ पार्वतीम् ।
तत्र लक्षद्वयं जप्त्वा होमं तदनु चाचरेत् ॥ ७४ ॥
द्रव्यैः पूर्वोदितैः सर्वैः कृष्णागरुविभावितैः ।
जपार्धसंख्यामानेन ततः पूर्णाहुतिं चरेत् ॥ ७५ ॥
आज्येन मधुमिश्रेण तदन्ते मन्त्रनायकम् ।
दशदिक्षु स्थितं पश्येत्साधकस्येदमाह च ॥ ७६ ॥
गच्छ सिद्धोऽसि ते कर्माण्यभीष्टानि प्रसादय ।
तदाज्ञां शिरसा कृत्वा साधयेन्मनसेप्सितान् ॥ ७७ ॥

[ मन्त्रसिद्धिज सामर्थ्यम् ]

गत्वा वन(नं?) पुरान्तं तु वामपाणिस्थितं जपेत् ।
सितं सिद्धार्थकं चैव प्रहरार्धमुदङ्मुखः ॥ ७८ ॥
निक्षिपेद्वनभूमौ तु तदधोर्ध्वं विदिक्ष्वपि ।
ततो हि ताः (ऽभितः?) समायान्ति तदग्रे वनदेवताः ॥ ७९ ॥
ममाज्ञां देहि मन्त्रज्ञ किमर्थं तापिताऽस्मि वै ।
अभीष्टान्याहरस्वेमान्यौषधानि सहस्रशः ॥ ८० ॥
समस्तकर्मसिद्ध्यर्थं क्षुज्जराविनिवृत्तये ।

अथौषधानि दिव्यानि सर्वकर्मकराणि च ॥ ८१ ॥
गृहीत्वा च वनोद्देशात्प्रयायात्साधकेश्वरः ।
आदाय कदलीपत्रं तमालच्छदमेव वा ॥ ८२ ॥
विततं भूर्जपत्रं वा मन्त्रेशं तत्र संलिखेत् ।
तत्तनुत्रत्वमायाति वेष्टितं च यदा यदा ॥ ८३ ॥
शत्रुशस्त्रविनाशार्थमग्निज्वालापनुत्तये ।
घर्मांशुतापशान्त्यर्थं शीतानां नाशनाय च ॥ ८४ ॥
लोष्ठकण्टकशीकर्यः स्थूलत्वमुपयान्ति च ।
यदि दत्वा च तं भूमौ स्वपेदुपविशेच्च वा ॥ ८५ ॥
दृष्ट्वाऽग्रस्थं चोरसैन्यं समुद्यतवरायुधम् ।
भीमं मृगारिं सिंहं वा हालाहलगणं महत् ॥ ८६ ॥
मदोद्धतं करीन्द्रं वा आरण्यमहिषादिकम् ।
नदीनदान्तरस्थं वा प्राणिग्राहादिकं महत् ॥ ८७ ॥
हन्तुकामं च साधूनां सदामिषजिघृक्षया ।
दण्डाग्रस्थं तु तत्पत्रं कृत्वा दक्षिणपाणिना ॥ ८८ ॥
सार्धाग्रस्थं (स्थे?) भ्रामयेत्तु तत्समुत्थेन वायुना ।
कल्पान्तसदृशेनाशु यान्ति सर्वे इतस्ततः ॥ ८९ ॥
अथवा साधकेन्द्रेऽसौ चेतसा चानु सन्धयेत् ।
गुप्तिं प्राकारतुल्येन कवचेनानलात्मना ॥ ९० ॥
चक्षुर्बन्धश्च दुष्टानां तत्क्षणा [ दुपजायते ] ।
तन्मन्त्रेण तु नग्नस्य जप्त्वा दद्याद्वटच्छदम् ॥ ९१ ॥
शीतकाले निदाघे वा अम्बरत्वं प्रयाति सः ।
समुत्थिते महामेघे ग्रामे वा विषयेऽखिले ॥ ९२ ॥
स्मरेत् शस्त्र ......... तत्पत्रं दण्डपृष्ठगम् ।
शतधा साशानिर्याति तानुत्रेण तु तेजसा ॥ ९३ ॥
बध्वा तनुत्रमन्त्रं च लिखितं पीतकर्पटे ।
क्षीरेण कुङ्कुमेनैव ...... मिश्रितेन तु ॥ ९४ ॥
कर्णिकामध्यगं मन्त्रं द्विधा संज्ञा तदन्तगा(?) ।
युक्तं कर्मपदेनैव पत्रे पत्रे तु मन्त्रपम् ॥ ९५ ॥

लिखित्वा [ तच्च ] सूत्रेणावेष्टय ताम्रपुटान्तरे ।
कृत्वा बध्वा भुजे वामे मन्त्री यद्यत्समीहते ॥ ९६ ॥
तत्तदेव परा(समा?)प्नोति दत्वा वाऽन्यस्य कस्यचित् ।
ग्रहभूतादयः सर्वे न बाधन्ते च तं नरम् ॥ ९७ ॥
प्रयच्छति सदाऽऽरोग्यं मन्त्रस्यास्य प्रभावतः ।

[ नेत्रमन्त्रसाधनप्रकार: ]

अधुना नेत्रमन्त्रस्य विधानं वच्मि सिद्धिदम् ॥ ९८ ॥
पूर्वोक्तेन विधानेन हृद्यागे तु कृते सति ।
मण्डलान्तर्गतं कृत्वा पीतरक्तं तु पङ्कजम् ॥ ९९ ॥
आहूय तत्र मध्ये तु नेत्रं हार्दाम्बुजस्थितम् ।
होमावसानं संपूज्य होममाज्येन शस्यते ॥ १०० ॥
पीतैसिद्धार्थकैश्चैव ताम्रवर्णं तिलान्वितैः ।
पूर्णां हुत्वा ततः कृत्वा तद्रूपं विजनं व्रजेत् ॥ १०१ ॥
दिक्चक्रं भ्रममाणस्य वीक्षमाणो दिवाऽनिशम् ।
सूर्यस्य मुनिशार्दूल जपेल्लक्षत्रयं व्रती ॥ १०२ ॥
होमं कुर्याज्जपान्ते तु केवलेन घृतेन तु ।
अयुतद्वितयं मन्त्री सुरदारुरसेन च ॥ १०३ ॥
मधुमिश्रेण चान्ये द्वे एकं सिद्धार्थकैस्तिलैः ।
ततः पूर्णां समापाद्य समांशोत्थैर्घृतादिकैः ॥ १०४ ॥
अवसाने तु पूर्णायाः पश्येन्मन्त्रेश्वरं तु तम् ।
दीप्तलोचनमार्गस्था(मग्रस्थ?)माज्ञां दत्वाऽथ स व्रजेत् ॥ १०५ ॥
ततोऽखिलानि वै कुर्यान्मन्त्री कर्माणि भूतले ।

[ नेत्रमन्त्रसिद्धिज सामर्थ्यम् ]

स्रोतोऽञ्जनं समादाय कृत्वा द्विशतमन्त्रितम् ॥ १०६ ॥
सप्तवारं च सौवर्णीं शलाकामभिमन्त्र्य च ।
स्वनेत्रयुगलं तेन रञ्जयेदञ्जनेन तु ॥ १०७ ॥
पश्येद्भूमिगतं सर्वं यत्किञ्चिन्निधिपूर्वकम् ।
समुद्रतोयमध्यस्थं नागलोकं च पश्यति ॥ १०८ ॥
निश्शेषं रत्ननिचयं समादातुं च तं यदि ।
व्रजेद्वा नागलोकं च ददाति विवरं जलम् ॥ १०९ ॥

पाषाणपादपानां तु मध्यस्थं यक्षिणीगणम् ।
संपश्यत्यचिरेणैतत्तदीयेन यथा मुने ॥ ११० ॥
प्रविश्य क्रीडते सम्यक् तासां द्विज यथेच्छया ।
अदृश्यभूतो यक्षाणां स तेषामवलोकयेत् ॥ १११ ॥
सर्वदा चेष्टमानानां यक्षयोगानशेषतः ।
औषधो(ध्यो?)र्थास्तु विप्रेन्द्र तत्तन्मन्त्राश्च सर्वशः ॥ ११२ ॥
स्वयं वा यक्षकान्तानां सकाशादाहृतानि च ।
निर्याति(?) च प्रपन्नानां भक्तानां भावितात्मनाम् ॥ ११३ ॥
साधने ह्यसमर्थानां संप्रयच्छति साधकः ।
ते यक्षयन्त्रयोगानां सामर्थ्यान्मनसीप्सितम् ॥ ११४ ॥
संप्राप्नुवन्ति चाकृष्टाः प्रभावात्साधकस्य च ।
पुनरभ्यञ्जयन्नेत्रे पूर्वोक्तविधिना यदि ॥ ११५ ॥
ईक्षते गगनान्तस्थान् सिद्धसंघाननेकशः ।
पूजयन्ति च ते तस्य साधकस्य महात्मनः ॥ ११६ ॥
अभीप्सितं प्रयच्छन्ति स्वपथं वा नयन्ति च ।
उपसन्नस्य भक्तस्य वैष्णवस्य विशेषतः ॥ ११७ ॥
शताभिमन्त्रितं कृत्वा ह्यञ्जनं तु शलाकया ।
दद्यान्नेत्रद्वये यस्य स पश्यत्यखिलं मुने ॥ ११८ ॥
एकदेशस्थितश्चैव निखिलं विषयं तु तत् ।
नगाद्यैरपि विच्छिन्नं योगयोगेश्वरान्वितम् ॥ ११९ ॥
डाकिनीभूतवेतालगणं चादर्शनस्थितम् ।
प्रहृष्टा दृष्टमात्रास्ते प्रभावात्साधकस्य च ॥ १२० ॥
धनाधिकं प्रयच्छन्ति उदासीनस्थितस्य च ।
सप्ताभिमन्त्रितं कृत्वा नेत्रमन्त्रेण चाञ्जनम् ॥ १२१ ॥
प्रदद्यान्नेत्रयुग्मे स्वे अरिमध्यगतो नरः ।
स यायाद्दर्शनं शश्वद्यत्र यत्र विशेच्च वा ॥ १२२ ॥
शताभिमन्त्रितं कृत्वा अदृष्टेच्छापथस्थितः ।
अन्यस्य यदि युञ्जीयात्सोऽपि यायाददर्शनम् ॥ १२३ ॥
अदर्शनगतो मन्त्री किं न कुर्याच्च भूतले ।
घृष्ट्वा निशाम्बुतोयेन अञ्जनं रोचनान्वितम् ॥ १२४ ॥

विलिख्य बर्हिपत्रेण नामयुक्तं च पूर्ववत् ।
कर्णिकामध्यगं मन्त्रं दलस्थं विधिपूर्वकम् ॥ १२५ ॥
दशाङ्गुले नेत्रखण्डे चतुरश्रेऽथ वर्तुले ।
बध्वा सन्धारयेन्मन्त्री सर्वस्मिन्जायते प्रियः ॥ १२६ ॥
सर्वसंपत्करो मन्त्रो ध्याय्यन्यस्य वारणात्(?) ।
नेत्रस्यैतत्समाख्यातं विधानमतिशोभनम् ॥ १२७ ॥

[ अस्त्रमन्त्रसाधनप्रकारः ]

अथेदानीं समासेन अस्त्रराजस्य मे श्रुणु ।
कृत्वा न्यासं पुरा सम्यक् हृद्यागं तदनन्तरम् ॥ १२८ ॥
चतुरश्रं चतुर्द्वारं कृत्वा यागं महामुने ।
तन्मध्ये राजपाषाणतुल्येन रजसाम्बुजम् ॥ १२९ ॥
केसराणि सुरक्तेन तस्य पीतेन कर्णिकाम् ।
तत्रावतार्थ संपूज्य ततो होमं समाचरेत् ॥ १३० ॥
हविषा गुग्गुलेनैव तिलैः सह सितासितैः ।
दत्वा पूर्णाहुतिं पश्चात् कृत्वाऽस्त्रसदृशीं तनुम् ॥ १३१
प्रयायान्निर्जनं स्थानं जपेल्लक्षत्रयं सुधीः ।
जपान्ते होमयेन्मन्त्री गुग्गुलैरयुतद्वयम् ॥ १३२ ॥
बदराण्डप्रमाणेन एकं सिद्धार्थकस्य च ।
रक्तचन्दनवृक्षोत्थमिध्मानमयुतद्वयम् ॥ १३३ ॥
घृतस्यायुतमेकं तु दद्यात्पूर्णाहुतिं तु वै ।
ततः सहस्रसूर्याभं द्वादशान्तेऽस्त्रनायकम् ॥ १३४ ॥
पश्यत्यमलवद्दृष्ट्या इदमाह च सोऽस्त्रराट् ।
गच्छ त्वं साधकश्रेष्ठ विचरेह यथासुखम् ॥ १३५ ॥
कुर्वन् कर्माण्यशेषाणि दिव्यमर्त्यान्यनेकशः ।
तदाज्ञया स विप्रेन्द्र सिद्धिं चाप्यनुसाधयेत् ॥ १३६ ॥
प्रजप्योपलखण्डं तु कालं तु घटिकाभिधम् ।
क्ष्मातलं वीक्षमाणस्तु तेन संताडयेत्क्षितिम् ॥ १३७ ॥
सा पीताङ्गी स्वरूपेण स्थित्वाऽग्रे साधकस्य तु ।
प्रयच्छत्यचिरात्सर्वं यदभीप्सितमस्य तु ॥ १३८ ॥

[ अस्त्रमन्त्रसिद्धिजं सामर्थ्यम् ]

अकालशाल्यस्सर्वे तथाऽकालफलानि च ।
सर्वाण्यकालपुष्पाणि गन्धाश्च विविधा अपि ॥ १३९ ॥
बिलद्वाराण्यसंख्यानि विविधानि सहस्रशः ।
रसायनानि दिव्यानि स्वयंग्राह्याणि सर्वशः ॥ १४० ॥
सप्तपातालसंस्थानि भावा नानाविधास्तथा ।
ये स्वर्गे ये च भूलोके दुर्लभास्तु सहस्रशः ॥ १४१ ॥
सर्वाणि तानि विप्रेन्द्र प्रकटीकुरुते तथा ।
आदाय खादिरं हस्ते लगुडं शतमन्त्रितम् ॥ १४२ ॥
चतुष्पथस्थितं वृक्षं तेन सन्ताडयेद्बलात् ।
निर्यान्ति विह्वलीभूताः शाकिन्यो भूतमातरः ॥ १४३ ॥
किं किं साधकराजेन्द्र आज्ञां देहि यथेप्सिताम् ।
अशक्येषु च कार्येषु भूतानां प्रेरयेत्तदा ॥ १४४ ॥
विदेशवृत्तकं सर्वं गूढं सुप्रकटं तथा ।
गत्वा ज्ञात्वा यथाभूतमागत्य ह्यचिरेण तु ॥ १४५ ॥
निवेदयन्ति तत्सर्वं डाकिन्यो मन्त्रपीडिताः ।
प्रयान्ति मातरोभताः क्षणेन गगनान्तरम् ॥ १४६ ॥
चेष्टितं च कृतं वृत्तं यत्तद्गगनचारिणाम् ।
ज्ञात्वा निवेदयन्त्याशु साधकस्य यथास्थितम् ॥ १४७ ॥
भूतैर्गृहीतमनुजं ताडयेच्च लतादिना ।
समानयेन्नयेच्चाथ तदग्रस्थस्य तां लताम् ॥ १४८ ॥
यायादभीप्सितं वेगाद् द्रुतमायाति तत्क्षणात् ।
कृत्वा तु मातरं तस्माद्दूरदेशं व्रजन्ति च ॥ १४९ ॥
यत्र यत्र क्षिपेन्मन्त्री जप्त्वा सिद्धार्थकानि तु ।
सन्निधिं तत्र कुर्वन्ति देवयोन्युषि(दि ?)ता ग्रहाः ॥ १५० ॥
अभीप्सितं चानयन्ति पानान्नवसनादिकम् ।
अस्त्रेण मन्त्रितं कृत्वा शस्त्रं परबलं व्रजेत् ॥ १५१ ॥
ध्वस्तायुधं करोत्याशु तन्मध्ये तत्क्षिपेद्यदि ।
अभेद्यमपि चेद्वज्रमस्त्रजप्तबलेन तु ॥ १५२ ॥

बहुधा भेदमायाति एवमन्ये नगादयः ।
क्ष्मामण्डलस्थितं ध्यायेदस्त्रज्वालावलीवृतम् ॥ १५३ ॥
यत्र यत्र नियुक्तं तु स्तंभं तत्र करोति च ।
अस्त्राभिमन्त्रितं कृत्वा लोहकाण्डं तु नारद ॥ १५४ ॥
भ्रामयन्गगनस्थं च स्तंभयेदभिवर्षणम् ।
यत्र यत्र नियुंजीयात्क्रोधसंरक्तलोचनः ॥ १५५ ॥
अस्त्रजप्तं तृणाग्रं तु बकवत्तत्र तत्पतेत् ।
मनःशिलायुतेनैव कुङ्कुमेन विलिख्य च ॥ १५६ ॥
कर्णिकादौ स्थितं प्राग्वदिक्षु वज्राष्टकान्वितम् ।
धारयेद्यस्तु युक्तात्मा सर्वत्राप्यपराजितः ॥ १५७ ॥
पूजामाप्नोति विपुलां सौभाग्यं चाखिलं तथा ।

इति श्रीपाञ्चरात्रे जयाख्यसंहितायां अगमन्त्रसाधनं नामाष्टाविंशः पटलः

---

अथ वक्रमन्त्रसाधन नामैकोनत्रिंशः पटलः ।

श्रीभगवान्—

एतद्विधानमङ्गानां कीर्तितं तु यथेप्सितम् ।
शृणु वक्त्रत्रयस्याथ कल्पं वक्ष्यामि यादृशम् ॥ १ ॥

[ नृसिंहवक्रमन्त्रसाधनम् ]

यत्तन्नृसिंहवदनं कल्पान्तार्कायुतप्रभम् ।
तस्याङ्गषट्कसंयुक्तं शृणु मूर्तिचतुष्टयम् ॥ २ ॥
युक्तं शक्तिचतुष्केण कल्पान्ताग्निसमद्युति ।

[ नृसिंहस्याङ्गमन्त्राः ]

आदाय शाश्वतं षोढा सामपाठकसंस्थितम् ॥ ३ ॥
चतुर्गतिधरेशाभ्यामन्तस्स्थेनाथ योजयेत् ।
उत्तराधरतः पश्चादाङ्गिकैश्चाङ्कयेत्स्वरैः ॥ ४ ॥
कौस्तुभोत्तममध्येन व्योमेशेनाथ भूषयेत् ।
अङ्गान्येतानि विप्रेन्द्र नृसिंहस्य महात्मनः ॥ ५ ॥

[ नृसिंहस्य मूर्तिमन्त्राः ]

कूटान्तश्चैव धा मात्मा(?)शाश्वतावस्थितस्ततः ।
वेदात्मा परमात्मा च चतुर्णामथ योजयेत् ॥ ६ ॥

अथ लोकेश्वरार्णं तु सूक्ष्मान्तस्थं यदक्षरम् ।
लोकेश्वरोज्झितं तं वै व्योमेशाख्याद(र्ण?)संयुतम् ॥ ७ ॥
चतुर्णामपि मूर्धस्थं चतस्रो मूर्तयो विभोः ।
सूर्यलोकप्रदश्चाद्यो द्वितीयोऽग्निप्रभाकरः ॥ ८ ॥
अत्युग्रदर्पशमनश्चतुर्थो विश्वसूकरः ।

[ नृसिंहानुचरमूर्तीना ध्यानप्रकारः ]

नृसिंहभूतयः(मूर्तयः?) सर्वे ध्येयास्सर्वे चतुर्भुजाः ॥ ९ ॥
नखप्रहरणाश्चैव विश्वोपप्लवहानिदाः ।
विस्मयाख्यां स्मरेन्मुद्रां सर्वेषां च करद्वये ॥ १० ॥
करेण तु करं ध्यायेन्मर्दयन्तमतीव हि ।
अतश्चोद्रिक्त[1]रूपाणां ध्येया मुद्रा परा मुने ॥ ११ ॥
सितरक्तसुवर्णाभं नीलपूर्वाकृतिं स्मरेत् ।

[ नृसिंहस्य शक्तिमन्त्राः ]

आदायोत्फुल्ल (य फुल्ल ?) नयनमग्निरूपमतः परम् ॥ १२ ॥
दीप्तिमद्विश्वरूपौ च तेषां मूर्धनि विन्यसेत् ।
अशेषभुवनाधारं मायाव्योमेशभूषितम् ॥ १३ ॥
मायाव्योमेशरहितं तत्तेषामासनं न्यसेत् ।
युगान्तहुतभुग्ज्वाला विश्वमूर्तिर्महाप्रभा ॥ १४ ॥
जगत्संपूरणी नाम्ना चतुर्थी संप्रकीर्तिता ।

[ नृसिंहशक्तीना ध्यानप्रकारः ]

क्रमेण वर्णमासां तु यथास्वमवधारय ॥ १५ ॥
अलिहेमारुणा...द्विभुजाश्चारुकुण्डलाः ।
उन्नताङ्गा महाकायाः पिङ्गभ्रूयुग्मलोचनाः ॥ १६ ॥
चतस्रश्चापि षड्घ्राणाः प्रलम्बिजठरास्तथा ।
चक्रचामरहस्ताश्च बद्धपद्मासनस्थिताः ॥ १७ ॥
सर्वासां प्रणवं संज्ञां नमस्कारपदं न्यसेत् ।
मूलशक्तिप्रणीतेन न्यायेन न्यासमाचरेत् ॥ १८ ॥
अर्चयित्वा तु हृत्पद्मे षट्कोणे मण्डले बहिः ।
अष्टपत्रोदरे न्यस्य पूजयेत्परमेश्वरम् ॥ १९ ॥

1 वीर्याणा A

न्यसेद्धृदादिकं प्राग्वत्पत्रप्रान्तचतुष्टये ।
प्रागाद्ये मूर्तिसंघं तु आग्ने याम्येऽथ शक्तयः ।। २० ।।
इष्ट्वाऽथ मूर्तिमन्त्राणां स्वमुद्रां संप्रदर्शयेत् ।
चक्रं कीर्तिचतुष्कस्य गुग्गुलं च तिलं ततः ।। २१ ।।
हृतकिंशारुकाणां तु धान्यानामरुणात्मनाम् ।
तृणदोषविमुक्तानामाज्याक्तानां विशेषतः ।। २२ ।।
गुग्गुलुक्षौद्रमिश्राणां दद्यात्पूर्णाहुतिं ततः ।
प्रमुञ्चन्वै महानादं त्रैलोक्यजडकृन्महत् ।। २३ ।।
नृकेसरी समायाति गगनादनलान्तरात् ।
तन्मन्त्रेण महानादमुत्प्लुत्य गगनं द्रुतम् ।। २४ ।।
कुर्यात्साधकमुख्यो वै तेजसा मुदितो भवेत् ।
तदा स भगवान्देवः परितुष्टोऽनुभाषते ।। २५ ।।
वद साधकराजेन्द्र यत्ते चेतस्यवस्थितम् ।
इत्युक्त्वाऽदर्शनं याति मन्त्रमूर्तीनृकेसरी ।। २६ ।।

[ नृसिंहमन्त्रसिद्धिज सामर्थ्यम् ]

ततोऽष्टगुणमैश्वर्यं साधको यदि चेच्छति ।
आत्मनो द्विज वाऽन्यस्य वाञ्मात्रेण तु साधयेत् ।। २७ ।।
दृष्ट्वा सुलक्षणं पात्रं ब्राह्मणं क्षत्रियं तु वा ।
कृत्वा तु चेतसा न्यासं पुष्पैरर्घ्यैस्तथाऽम्बुना ।। २८ ।।
संपूज्य रङ्गमध्यस्थमाविष्टस्स वदेत्क्षणात् ।
भूतं भव्यं भविष्यच्च यस्य यत्प्रतिभाति वै ।। २९ ।।
न्यस्य तन्मूर्तिमन्त्रांश्च तन्मन्त्रैरथ पूजयेत् ।
दारकं सोऽपि चेत्सर्वमतीतानागतं वदेत् ।। ३० ।।
शक्तिमन्त्रचतुष्केण समावेश्य च कन्यकाम् ।
स्वल्पाऽपि बालभावस्था सा विवक्ति यथेप्सितम् ।। ३१ ।।
जपमानस्तु मन्त्रेशं तन्मन्त्रेणाथ संक्षिपेत् ।
सिद्धार्थकान्विशेद्ग्रामान्नगरं वा पुरं महत् ।। ३२ ।।
तत्क्षणात्क्षोभमायाति सतिर्यङ्नरदैवतम् ।
................ कृत्वा[1]र्तः सिंहविग्रहम् ।। ३३ ।।

1 तल्लिङ्गविग्रहम् A

केपनाभरणाद्यैस्तु संरक्षे [1]खलु कण्टकम् (?) ।
यायाच्छैलेन्द्रमूर्धानं जपेल्लक्षाष्टकं व्रती ॥ ३४ ॥
वाऽयुतं लक्षयुग्मं तु जपान्ते जुहुयात्ततः ।
न्यासं कृत्वा विशेन्मध्यमास्ते वाऽन्यस्य सम्मुखे ॥ ३५ ॥
क्षोभमायाति तरसा सगजाश्वायुधान्वितम् ।
प्रतिष्ठितायामल्पायां यस्यां कस्यां हि नारद ॥ ३६ ॥
जपन्मन्त्रं कृतन्यासो यद्यग्रे तिष्ठति क्षणम् ।
साऽपि च क्षोभमायाति धावेद्यत्र स साधकः ॥ ३७ ॥
मकरालयकूलं तु समासाद्य महामते ।
एवमेव हि यस्तिष्ठेत् क्षोभयत्यचिरेण तम् ॥ ३८ ॥
निरीक्षमाणो गगनं यदि मन्त्रमनुस्मरेत् ।
वियन्तं निर्मलं चैव तत्क्षणात्क्षोभमेति च ॥ ३९ ॥
जीमूतस्तनितैर्घोरैर्विद्युन्मालाशनीयुतैः ।
वनं वनस्पतियुतं सिंहव्याघ्राकुलं महत् ॥ ४० ॥
विधिनानेन विप्रेन्द्र क्षोभमायाति चाचिरात् ।
यं यं क्षोभयते मन्त्री सिंहमन्त्रेण भास्वता ॥ ४१ ॥
स स यच्छति सर्वस्वं भयभीतश्च भक्तितः ।
यं यं कृत्वा तु मनसा यक्षविद्याधरादिकम् ॥ ४२ ॥
जपेन्मन्त्रवरं मन्त्री स स आयाति शीघ्रतः ।
आज्ञां स साधयत्याशु साधकस्य महात्मनः ॥ ४३ ॥
तदाज्ञया व्रजेद्भूयः स्वस्थानं भीतमानसः ।
विलिख्य द्वादशारं तु नाभिनेमिसमन्वितम् ॥ ४४ ॥
सषट्कोणं तु नाभौ तु सपद्मं कुङ्कुमेन तु ।
तरूत्थितेन पयसा वस्त्रे रोचनया सह ॥ ४५ ॥
कर्णिकान्तर्गतां संज्ञां मन्त्राद्यन्तं निरोधिताम् ।
अमृतार्णान्तरस्थां च व्यापी चान्द्रीयुतश्च सः ॥ ४६ ॥
स्वकोऽसौ मूर्तिमन्त्रो यः प्रत्येकस्मिन्दले दले ।
रक्षामुकपदोपेताः षट्कोणे च हृदादयः ॥ ४७ ॥

---

1 लखलण्टया A

मूर्तिद्वयं तु प्रथमं संज्ञाद्यन्तगतं द्विज ।
चक्रनाभौ [1]द्विधा योज्यं द्वयमेव न (त्व ?)रान्तरे ॥ ४८ ॥
अरान्तरान्तयोगेन एकैकं षट्सु षट्सु च ।
याऽत्र वै प्रथमा शक्ती रक्षनामपदान्विता ॥ ४९ ॥
अरान्तराले सा योज्या एका द्वादशधा द्विज ।
नामयुक्तां त्रिधा चान्यां चक्रनेमौ नियोज्य च ॥ ५० ॥
त्रिरष्टधा तृतीया च तथा चक्रग्रथिष्वपि ।
वा(या?) चतुर्थी विभोश्शक्तिरेकधा चक्रबाह्यगा ॥ ५१ ॥
तन्मयी येन सूत्रेण चक्रं संवेष्ट्य सप्तधा ।
व्रतोपवासशुद्धात्मा पूजां कृत्वा तथाऽऽहुतिम् ॥ ५२ ॥
द्वादश्यां सितकृष्णायां गुरोर्वारेऽथ नारद ।
अथवा जीवनक्षत्रे मुहूर्ते शकुनान्विते ॥ ५३ ॥
विलिख्य च बहिः पक्षे सितरक्तेन वेष्टयेत् ।
त्रिलोहगर्भगं कृत्वा मन्त्रं यो धारयेद्द्विज ॥ ५४ ॥
तस्यायुः श्रीस्तथाऽऽरोग्यं सौभाग्यमुचितं बलम् ।
तृप्तिः कान्तिस्तथा कीर्तिर्विजयस्सर्वतोमुखः ॥ ५५ ॥
मेधाऽभिचारविध्वंसो मन्त्रो योगकृतोऽथ वा ।
स्थावरं जङ्गमं घोरं शङ्काख्यं कृत्रिमं तथा ॥ ५६ ॥
विषं विनाशमायाति ग्रहभूतेषु का कथा ।
कामयेद्वनितानां तु मध्ये भवति वल्लभः ॥ ५७ ॥
यं यं समीहते कामं तं तं प्राप्नोत्ययत्नतः ।
एतन्नृसिंहमन्त्रस्य वक्रभूतस्य नारद ॥ ५८ ॥

[ कपिलमन्त्रसाधनप्रकारः ]

विधानं कथितं सम्यक् कापिलस्याथ कथ्यते ।

[ कपिलस्याङ्गमन्त्रः ]

विलेख्यो दीप्तिमान्षोढा ऊर्ध्वाधोऽनलवेष्टितः ॥ ५९ ॥
तन्नृसिंहाङ्गवन्मूर्ध्ना क्रमात्कुर्याच्च योजितम् ।
एतानि कपिलाङ्गानि चेटकानस्य वै शृणु ॥ ६० ॥

1 त्रिधा A

[ कपिलस्यानुचरमन्त्राः ]

चतुष्कं वारुणान्तस्थं शाद्यं कृत्वा क्रमेण तु ।
धरेशमनलारूढं सलोकेशं चतुष्र्वधः ॥ ६१ ॥
विश्वाप्यायकरो व्यापी न्यस्यो ह्युपरि सर्वतः ।
योगेश्वरश्च तत्त्वज्ञो ब्रह्मदत्तो महामतिः ॥ ६२ ॥
सितरक्तारुणः कृष्णश्शान्तदेहश्चतुर्भुजः ।

[ कपिलानुचरमूर्तिध्यानप्रकारः ]

ब्रह्माञ्जलिकृताः सर्वे बद्धपद्मासनस्थिताः ॥ ६३ ॥
विज्ञानसंचयाकारा ह्यक्षसूत्रकरास्तु वै ।
प्रभाकरसहस्राभा दिव्यमालाम्बरान्विताः ॥ ६४ ॥
दिव्यगन्धानुलिप्ताङ्गा दिव्याभरणभूषिताः ।

[ कपिलस्य शक्तिमन्त्राः ]

आद्यवर्णचतुष्कं तु शान्तान्तं च लिखेत्क्रमात् ॥ ६५ ॥
अनलस्थं च सर्वेषामधः सोमं च विन्यसेत् ।
व्यापी चान्द्री ततो माया चतुर्थ्यन्तं नियोजयेत् ॥ ६६ ॥
विमला करुणा शक्तिर्ज्ञानाख्या चेति शक्तयः ।

[ कपिलशक्तिध्यानप्रकारः ]

पीतश्यामारुणाः शुक्लाः क्रमशो द्विभुजाः स्मृताः ॥ ६७ ॥
वरदाभयहस्ताश्च कपिलाकृतयस्तथा ।
कृत्वा न्यासं यजेत्पश्चात् वितते हृत्कुशेशये ॥ ६८ ॥
ततः पूर्णेन्दुसङ्काशमेकद्वारं तु वर्तुलम् ।
सपद्मं मण्डलं कृत्वा तन्मध्ये ह्यवतार्य च ॥ ६९ ॥
शेषमंगादिकं प्राग्वन्न्यस्य लीला(दले न्यस्य?)तदन्तरे ।
इष्ट्वा ब्रह्माञ्जलिं मुद्रां योगेशादिषु दर्शयेत् ॥ ७० ॥
वराभयौ तु शक्तीनां मुख्यस्थाङ्गेषु पूर्ववत् ।
कृत्वा होमं यथाशक्ति तिलैराज्यपरिप्लुतैः ॥ ७१ ॥
दत्वा पूर्णाहुतिं पश्चात् स्थानमासाद्य निर्जनम् ।
जपेल्लक्षचतुष्कं तु हृदादीनां तु नारद ॥ ७२ ॥
क्रमात्सहस्रमेकैकं ततो होमं समाचरेत् ।
पयसा मधुमिश्रेण जुहुयादयुतद्वयम् ॥ ७३ ॥

निरम्बुनाऽथ वै दध्ना जुहुयादयुतं ततः ।
मालतीकुसुमानां तु ततश्चायुतपञ्चकम् ॥ ७४ ॥
एकमाज्यस्य जुहुयात्केवलस्य स्रुवेण तु ।
शतं शतं च सर्वेषां सर्वमेकीकृतं जुहेत् ॥ ७५ ॥
ततः पूर्णाहुतिं दद्याद्दधिमध्वाज्यपूरिताम् ।
एत्यादित्यपथादग्रे साक्षात्तिष्ठदधोक्षजः ॥ ७६ ॥
गच्छ साधक सिद्धोऽसि मन्मन्त्रेणाखिलं कुरु ।
एवमुक्त्वा स भगवान्याति सूर्यपथादतः ॥ ७७ ॥

[ कपिलमन्त्रासिद्धिज सामर्थ्यम् ]

तन्मन्त्रेणाथ वै मन्त्री कुर्यात्कर्म यथेप्सितम् ।
जडानां योजयेन्मन्त्रं मुहूर्तं हृत्कुशेशये ॥ ७८ ॥
प्राप्नुवन्ति प्रबोधं च अष्टाक्षरपदान्वितम् ।
मन्त्रेणाद्यन्तसंरुद्धं यस्य नाम तु नारद ॥ ७९ ॥
जपेच्छतद्वयं मन्त्री स संबाधपथं व्रजेत् ।
मन्त्रेशं जपमानस्तु यदि तिष्ठेत्तपोवने ॥ ८० ॥
लब्धविज्ञानसन्तोषाः पादयोर्निपतन्ति ते ।
तपस्विनः शान्तचित्ता मन्त्रज्ञस्य महात्मनः ॥ ८१ ॥
महानृपालयाग्रे तु ध्यायेद्वै मन्त्रनायकम् ।
क्षणमास्ते यदा मन्त्री तदा नृपवरस्तु तम् ॥ ८२ ॥
समेत्य पादमूलं तु निखिलं विनिवेदयेत् ।
यान्यांश्चेतसि कृत्वा वै जपेन्मन्त्रवरं व्रती ॥ ८३ ॥
समेत्य तेन विप्रेन्द्र मन्त्रज्ञस्य महात्मनः ।
स्वं स्वं चैव तु विज्ञानं कथयन्ति प्रयत्नतः ॥ ८४ ॥
नागा विद्याधरा यक्षा ये वै गगनगामिनः ।
विज्ञानसिद्धिं वै सर्वां विशेषेण महात्मनः ॥ ८५ ॥
दत्वा साधकमुख्यस्य यान्ति यत्रागताः पुनः ।
विज्ञानविषये सिद्धौ सन्दिग्धार्थे तु नारद ॥ ८६ ॥
मन्त्रं ध्यायेज्जपेन्मन्त्री निस्सन्देहपदं व्रजेत् ।
ध्यात्वा नाभौ तु मन्त्रेशं जपेद्वययुतं प्रति ॥ ८७ ॥
भूतं भव्यं भविष्यच्च वेत्ति सर्वं न संशयः ।

साष्टं शतद्वयं जप्त्वा सर्षपान्करसंपुटे ॥ ८८ ॥
निक्षिपेद्भूमिमध्ये तु ते स्वयं संघटन्त्यधः ।
निधिस्थाने तु विप्रेन्द्र स्थाने रासायने तु वा ॥ ८९ ॥
तत्प्राणि(प्ति?)सूचनार्थं तु तत्रावर्तं ददत्यथ ।
प्राप्तिर्न विद्यते यस्मिन्निधावथ रसायने ॥ ९० ॥
दूरतश्च तदुद्देशात्प्रयान्तीतस्ततो द्विज ।
बद्धपद्मासनो मन्त्री शून्यधारणया स्थितः ॥ ९१ ॥
जपेद्दशसहस्राणि खेचरत्वमवाप्नुयात् ।
राजोपलद्युतिमुखं ध्यात्वा मन्त्रं जपेद्यदि ॥ ९२ ॥
तुर्यांशमयुतं . .... तालुरन्ध्रपथस्थितम् ।
स्वयमन्यस्य वा विप्र पलितं नाशयेद्यतः ॥ ९३ ॥
पुरन्दरपुरान्तस्थं मन्त्रं मन्त्री जपेद्यदि ।
ज्वलनाभं तु जिह्वाग्रे रक्षावानीश्वरस्य तु ॥ ९४ ॥
सोऽपि मूकत्वमाप्नोति किं पुनर्मनुजोऽल्पधीः ।
निशाम्बुना च क्षीरेण सघनेन रसेन च ॥ ९५ ॥
विलिख्य कुङ्कुमाढ्येन भूर्जे वा सितकर्पटे ।
षट्पत्रं तु महापद्मं तद्बहिर्द्वादशच्छदम् ॥ ९६ ॥
सनाभिनेमि तद्बाह्ये षोडशारश्च हेतिराट् ।
प्राग्वन्नामसमायुक्तं मन्त्रेशं कर्णिकान्तरे ॥ ९७ ॥
पत्रषट्के षडङ्गं तु नामाक्षरपदान्वितम् ।
अङ्गानि मूर्तयश्चैव शक्तयोऽथ दलत्रये ॥ ९८ ॥
तान्येवान्येषु पत्रेषु भूयो भूयो विलिख्य च ।
पद्मं समाप्यते यावन्नाभौ मूलं न्यसेत्पुनः ॥ ९९ ॥
अरान्तराले हृद्बीजमस्त्रबीजमरेषु च ।
शेषमङ्गचतुष्कं तु मूर्तयश्शक्तयस्तथा ॥ १०० ॥
चक्रनेमौ तु विन्यस्य चक्रबाह्यं तु वै ततः ।
नवधा शक्तिबीजेन वेष्टनीयं महामते ॥ १०१ ॥
आश्रमावरुणासङ्ग[1]शान्तिमन्त्रान्विनिक्षिपेत्(?) ।
अथवाऽनेन तु व्योम्नि तत्र सूत्रेण वेष्टयेत् ॥ १०२ ॥

1 सङ्ग

जाम्बूनदपुटे कृत्वा धारयेद्भक्तिमान्हि यः ।
तस्य ज्ञानं सविज्ञानमाविर्भवति नारद ॥ १०३ ॥
नदीः सन्तरतस्तस्य अथवोदधिलङ्घने ।
तोयोत्था दोषसंघाश्च ऊर्मयः प्रशमन्ति च ॥ १०४ ॥
यन्त्रसंधारको यत्र निवसत्यम्बुजन्म च ।
ज्वलितं [1]वाचकं तत्र गमयत्यचिरेण तु (?) ॥ १०५ ॥
कृत्वा स्थानं तु निर्बाधं मन्त्रस्यास्य प्रभावतः ।
प्रविशन्ति च घोराणि भौमाद्यानि सहस्रशः ॥ १०६ ॥
न तत्र दैविको बाधः कुतो राजकुलोद्यतः ।
उदेति पूर्णमतुलं धैर्यं लक्ष्मीः प्रगल्भता ॥ १०७ ॥
विपरीतमतो यद्वै तत्सर्वं नाशमेति च ।
किमस्य मन्त्रनाथस्य अप्राप्यं भुवनत्रयम् ॥ १०८ ॥
स्यात्समाराधितस्यैवं विधिदृष्टेन कर्मणा ।
यत्र यत्र च मन्त्रेशं यं यं मन्त्री नियोजयेत् ॥ १०९ ॥
तत्राङ्गशक्तिमूर्तिं चाप्यर्चयेज्जुहुयाज्जपेत् ।
इत्येतत्कापिलस्योक्तं वाराहस्याधुनोच्यते ॥ ११० ॥

[ वराहमन्त्रसाधनप्रकारः तत्र वराहस्याङ्गमन्त्रः ]

षोढाऽनन्तेशमादाय प्रधानोपरि संस्थितम् ।
धरेशं तदधो दद्यात्संयोज्याङ्गोदितस्वरैः ॥ १११ ॥

[ वराहस्यानुचरमन्त्राः ]

गोविन्दो विबुधाद्यश्च वराहश्च चतुर्गतिः ।
क्रमाच्चतुष्टयं दद्यात्तेषां चाधो नियोज्य च ॥ ११२ ॥
धरेशश्च गदध्वंसी सूक्ष्मं वरुणमेव च ।
तदूर्ध्वमनलं पश्चाच्चतुर्णां क्रमशो न्यसेत् ॥ ११३ ॥

[ वराहस्य शक्तिमन्त्राः ]

अथ शक्तिचतुष्कार्थमादायार्णचतुष्टयम् ।
ध्रुवो वराहस्त्वनलः परमात्मा महामतेः ॥ ११४ ॥

---

1 पातक A

आरूढं सोमबीजं च चतुर्णामासने न्यसेत् ।
विष्णुनाऽलंकृतास्सर्वे ततः स्वहृदयान्मुने ॥ ११५ ॥
सर्वस्मिन्मन्त्रचक्रे तु चान्द्री व्यापी तु मूर्धनि ।
न्यासं पुरोदितं कृत्वा इष्ट्वा हृदयगोचरे ॥ ११६ ॥
अष्टास्रं तु पुरं कृत्वा द्वाराद्यवयवान्वितम् ।
तन्मध्ये कमलं शुक्लमष्टपत्रं सकर्णिकम् ॥ ११७ ॥
तत्रावतार्य मन्त्रेशं पूजयेद्भक्तिपूर्वकम् ।
पूर्ववद्धृदयादीनि ततोऽनुगचतुष्टयम् ॥ ११८ ॥
ध्यात्वा पद्मदलान्तस्थं न्यसेद्ध्यानं निबोध मे ।

[ वराहानुचरध्यानप्रकारः ]

अतसीपुष्पसंकाशं प्रथमं धरणीधरम् ॥ ११९ ॥
धराधरं द्वितीयं तु नवमेघसमप्रभम् ।
प्रियङ्गुमञ्जरीश्यामं तृतीयं पृथिवीधरम् ॥ १२० ॥
चतुर्थं विश्वधृङ्नाम ध्यायेदलिकुलद्युतिम् ।
वराहवदनाः सर्वे शंखपद्मकरोद्यताः ॥ १२१ ॥
बद्धपद्मासनासीना वरदाभयकास्तु वै ।
पुष्पाभरणदिग्धाङ्गास्तुषारनिकरान्विताः ॥ १२२ ॥

[ वराहशक्तिध्यानप्रकारः ]

ततः शक्तिचतुष्कं तु ध्यात्वा ध्यात्वा निवेशयेत् ।
नवचम्पकवर्णाभां प्रथमां विश्वपूरकीम् ॥ १२३ ॥
राजोपलप्रभामन्यां विश्वसन्धारणीति या ।
ध्यायेद्बन्धूकपुष्पाभामोजाख्यां तु महाबलाम् ॥ १२४ ॥
चतुर्थी स्थितिसंज्ञां च तुहिनाचलसन्निभाम् ।
वराहवदनास्सर्वे द्विभुजाश्चारुकुण्डलाः ॥ १२५ ॥
गदाचक्रकराश्चैव नानापुष्पाम्बरान्विताः ।
पूजयित्वा ततो दद्यान्मुद्रां मन्त्रगणस्य च ॥ १२६ ॥
मूलस्य हृदयादीनां पूर्वलक्षणलक्षिताम् ।
वराभयाख्यां मूर्तीनां गदामुद्राङ्गनासु च ॥ १२७ ॥
ततस्तु जुहुयान्मन्त्री मध्वक्तानसितांस्तिलान् ।
दत्वा पूर्णाहुतिं कृत्वा वाराहं रूपमात्मनः ॥ १२८ ॥

यायाज्जलाशयोद्देशमेकान्तं विजनं महत् ।
तत्र लक्षाष्टकं जप्त्वा जुहुयाद्वै च सप्त च ॥ १२९ ॥
तिलानां त्वयुतं चापि अयुतद्वितयं तथा ।
गव्यस्याज्यस्य जुहुयात् गुल्गुलोरयुतं पुनः ॥ १३० ॥
दद्यात्पूर्णाहुतिं मन्त्री ततो दृष्टिपथं व्रजेत् ।
स्तूयमानस्सुरैः सर्वैर्वराहो वरदः प्रभुः ॥ १३१ ॥
गच्छ तुष्टोऽस्मि ते शीघ्रमभीष्टं परिसाधय ।
ततः साधकमुख्योऽसौ साधयेत्प्रभुणोदितम् ॥ १३२ ॥

[ वराहमन्त्रसिद्धिज सामर्थ्यम् ]

आरुह्य शिखराग्रे तु दक्षिणाशां निरीक्षयन् ।
जपेन्मन्त्रवरं रात्रौ निशान्ते चान्तकः स्वयम् ॥ १३३ ॥
विह्वलीभूत आयाति किं मया ते प्रयोजनम् ।
ब्रूहि वैरिगणः कस्ते यस्याद्य प्रभवाम्यहम् ॥ १३४ ॥
[1]प्रसन्नस्त्ववसन्नो वा यस्यासौ कालमृत्युना ।
न बाध्यतेऽद्यप्रभृति त्वदीयं शपथं हि मे ॥ १३५ ॥
त्वमिदानीं व्रतधरो गतमृत्युर्न संशयः ।
यास्यामि देहि चाज्ञां मे याहीत्यस्य ततो वदेत् ॥ १३६ ॥
ध्यात्वा तोयं घटान्तस्थं जप्त्वा सार्धशतं तथा ।
गर्दभाद्याश्च ये रोगाः प्रशमन्ति च तज्जलात् ॥ १३७ ॥
स्नानात्पानात्तथा सेकात् क्षणेन तु महामुने ।
निशाम्बुना चन्दनेन नाममन्त्रपुटीकृतम् ॥ १३८ ॥
परिवारयुतं पद्मे लिखित्वा शीतले जले ।
निधाय तत्क्षणाद्याति ज्वरश्चैकाह्निकादिकः ॥ १३९ ॥
प्रजप्य गुग्गुलुं धूपं सिद्धार्थकसमन्वितम् ।
ज्वरान्ते धूपितः सम्यक् सुखी भवति तत्क्षणात् ॥ १४० ॥
मृदमादाय संमन्त्र्य कृत्वा वामकरस्थिताम् ।
जलेनालोड्य तदनु लूतार्कं परिलेपयेत् ॥ १४१ ॥
नश्यत्याशु द्विजश्रेष्ठ मन्त्रस्यास्य प्रभावतः ।
शताभिमन्त्रितं कृत्वा तिलतैलं घृतान्वितम् ॥ १४२ ॥

1 प्रपन्न Y CL

सर्वव्याधिविघातं च अभ्यङ्गात्परिजायते ।
इच्छासंख्यं करे कृत्वा नीलं दर्भगणं द्विज ॥ १४३ ॥
शताभिमन्त्रितं कृत्वा निक्षिपेत्पृष्ठदेशतः ।
व्रजमानो महारण्ये चोरातङ्कभयाकुले ॥ १४४ ॥
आस्ते चानुगता तस्य पैशाची यक्षसन्ततिः ।
निपातयति दोषाणां पथि सर्वसुखप्रदा ॥ १४५ ॥
यं यं समीहते मन्त्री पथि तीर्थान्तरे स्थितः ।
तं तं यक्षादयश्शश्वत् प्रददन्ते यथेप्सितम् ॥ १४६ ॥
तृप्त्यर्थं तस्य सार्थस्य न श्रमं चाप्यसौ व्रजेत् ।
यक्षरक्षःपिशाचाश्च तिष्ठन्त्यन्येऽग्रतोऽस्य वै ॥ १४७ ॥
अनुसन्धानमात्रेण तदाज्ञासंप्रतीक्षकाः ।
यदा गगनगामित्वमिच्छत्यद्भुतकृद्व्रती ॥ १४८ ॥
तदादाय च माक्षीकं सुभगां च महौषधीम् ।
तुषारं सूतसहितं कृत्वा ताम्रपुटे त्वमून् ॥ १४९ ॥
गूहयेन्मर्दनेनाथ भूयो हेमपुटे क्षिपेत् ।
सहस्रं परिजप्याथ कृत्वा च गुलिकां च ताम् ॥ १५० ॥
निक्षिप्य मुखमध्ये तु ततो नभसि चेत्पतेत् ।
सिद्धविद्याधराः सर्वे आयान्ति भयविह्वलाः ॥ १५१ ॥
किङ्करत्वेन वर्तन्ते मन्त्रज्ञस्य महात्मनः ।
सप्तद्वीपसमुद्रान्तां यद्यगादवनिं द्विज ॥ १५२ ॥
अन्तरिक्षेण वै मन्त्री न मोहमुपगच्छति ।
भ्रमत्यविरतं मन्त्री मेरुपृष्ठे गतो यदि ॥ १५३ ॥
दिवौकसां पुराणां तु तत्र चेद्विबुधाङ्गनाः ।
पूजयन्ति च वै तस्य विबुधाः प्रणमन्ति च ॥ १५४ ॥
आदाय गुटिकां मन्त्री कृत्वा द्वादशमन्त्रिताम् ।
सप्तलोकोद्भवाः कन्याः सप्तपातालसम्भवाः ॥ १५५ ॥
संलिख्य चेतसा कृत्वा स्वपरार्थकरो यदि ।
दृश्यन्ते च तत. क्षिप्रं मदाघूर्णितलोचनाः ॥ १५६ ॥
नागाश्च महिषा दान्ता मृगास्सिंहोरगादयः ।
नरा वा[कि]न्नराश्चान्ये तान् लिखेद्यदि साधकः ॥ १५७ ॥
क्षणेन सत्यंकारास्ते प्रोत्तिष्ठन्ते न संशयः ।

मधुना तिलकं कृत्वा युक्तं मृगमदेन तु ॥ १५८ ॥
शताभिमन्त्रितं सम्यक् ललाटे मुनिसत्तम ।
सान्तःपुरयुतो राजा क्षोभमायाति तत्क्षणात् ॥ १५९ ॥
अभिमन्त्र्य गदां मन्त्री खादिरीमायसीं तु वा ।
बिलं विना तु भूभागं केवलं ताडयेद्यदि ॥ १६० ॥
सप्तानां तु तलानां वै निर्यन्त्रो(यन्त्रा ?) भूयते गतेः ।
या या चेतसि वै सिद्धिरभीष्टा साधकस्य तु ॥ १६१ ॥
सा सा मन्त्रबलात्सम्यक् सिध्यति ह्यचिरात्ततः ।
अष्टयोन्युत्थिता देवी तथा चैवाणिमादयः ॥ १६२ ॥
सामर्थ्यान्मन्त्रनाथस्य साधकानां च नारद ।
पयसा कापिलेनैव रोचनाकुङ्कुमेन च ॥ १६३ ॥
भूर्जपत्रेऽथवा वस्त्रे अष्टास्रं च लिखेत्परम् ।
तन्मध्येऽष्टदलं पद्मं षट्कोणं तद्बहिःपुरम् ॥ १६४ ॥
द्वादशारं तु तद्बाह्ये नाभिनेमि[1]प्रथीयुतम् ।
मध्ये मन्त्रयुतं ... ... नामबीजान्तरस्थितम् ॥ १६५ ॥
पूजान्यासप्रयोगेण दलानां च हृदादयः ।
भूयोऽस्त्रबीजं विप्रेन्द्र अष्टास्रास्रिषु चाष्टधा ॥ १६६ ॥
तदाशास्वष्टधा भूयो हृन्मत्रं योजयेत्ततः ।
षोढा वै षट्सु कोणेषु बहिरष्टास्रकस्य तु ॥ १६७ ॥
शिखाबीजं तु विन्यस्य तनुत्रं लोचनान्वितम् ।
प्रपूरणार्थं नाभौ तु असंख्यं बहुशो लिखेत् ॥ १६८ ॥
षट्परावर्तयोगेन चतस्रोऽरेषु मूर्तयः ।
याऽत्र वै प्रथमा शक्तिश्चतुर्विंशतिधा च ताम् ॥ १६९ ॥
दद्यादरान्तरालेषु द्वितीया नेमिमण्डले ।
नाभिस्थबीजयुक्ता तु योजनीया निरन्तरम् ॥ १७० ॥
अन्तरान्तरयोगेन शेषं शक्तिद्वयं तु तत् ।
प्रथिषु न्यसनीयं च बाह्यचक्रे ततो द्विज ॥ १७१ ॥
द्विषड्धा च शिरसा वेष्टयित्वा त्रयं नयेत् ।
विष्णुं व्योमेशवर्णेन तद्यन्त्रं परिवेष्टयेत् ॥ १७२ ॥
पञ्चरङ्गेण सूत्रेण क्षिपेत्कनकसंपुटे ।

1 प्रकाशते Y

दोर्दण्डे दक्षिणे कुर्यात् स्त्री वा स्तनयुगान्तरे ॥ १७३ ॥
प्रियत्वं सततं याति वैरिष्वपि च साधकः ।
नदीनदान्समुद्रान्वा लीलया परिलङ्घयेत् ॥ १७४ ॥
बह्वर्थं तत्प्रभावाच्च नो मज्जति जलान्तरे ।
नारण्यवनजानां तु सकाशाद्विद्यते भयम् ॥ १७५ ॥
भजन्ति सानुकूलं च विपरीतस्थिता ग्रहाः ।
न बाधते विषं घोरमनेकं चातिभीषणम् ॥ १७६ ॥
चोरादिशस्त्रसंघातो गात्रसन्धिषु नो विशेत् ।
यत्रोपलानि गगनात्पतन्ति यदि वै ततः ॥ १७७ ॥
तुल्यानि पुष्पवृष्टीनां वैध(स्युः?)न्यूनान्यथ द्विज ।
बालग्रहादयो दूरं त्यक्त्वा बालं प्रयान्ति च ॥ १७८ ॥
यत्रेदं तिष्ठते यन्त्रं किं तु तद्देहगं तु वै ।
लग्नगर्भा च या नारी सुखं सूते च धारणात् ॥ १७९ ॥
भवेत्पुत्रवती वन्ध्या मृतवत्साऽथ पुत्रिणी ।
सपत्नी गणमध्ये तु पूजामाप्नोति शाश्वतीम् ॥ १८० ॥
रणे राजकुले द्यूते विवादे चातिसंकटे ।
धारको जयमाप्नोति मन्त्रस्यास्य प्रभावतः ॥ १८१ ॥
तस्मात्संसाधिते मन्त्रे यन्त्रं वै मुनिसत्तम ।
इह तन्त्रोत्थितं वान्यत्सर्वकर्मकरं भवेत् ॥ १८२ ॥
सर्वसिद्धिप्रदं चैव सर्वसंपत्समृद्धिकृत् ।
इदं ते विप्र मन्त्राणां सरहस्यं च कीर्तितम् ॥ १८३ ॥
साधनं भोगकामानां साधकानां महात्मनाम् ।
नेदं शठानां पापानामभक्तानां प्रकाशयेत् ॥ १८४ ॥
नान्यदर्शनभक्तानां नाशिष्याणां कदाचन ।
नान्यायमार्गसंस्थानामधर्मनिरतात्मनाम् ॥ १८५ ॥
लीलया चोदकानां च मार्गे वा यत्र कुत्रचित् ।
यो धर्मं चार्थलाभेन प्रब्रूते ह्युन्नतिं विना ॥ १८६ ॥
धनाभिमानसक्तानां स सिद्धोऽपि व्रजत्यधः ।
तस्मादिदं रहस्यं च दृष्टादृष्टद्वयार्थिषु ॥ १८७ ॥
न्यायतः प्रतिपन्नेषु वक्तव्यं श्रेय इच्छता ।

इति श्रीपाचरात्रे जयाख्यसहिताया वक्रमन्त्रसाधनं नाम एकोनत्रिंशः पटलः ।

---

अथ परिकरसाधन नाम त्रिंशः पटलः ।

श्रीभगवान्—

समासात्कौस्तुभादीनां साधनं शृणु नारद ।
येन विज्ञातमात्रेण यथेष्टं साधयिष्यति ॥ १ ॥
स्वनाम्नः पूर्ववर्णं च मात्राव्यञ्जनवर्जितम् ।
आङ्गिको लांछनचयः स्वस्वसंज्ञादयस्तु षट् ॥ २ ॥
साधार(सामान्य ?) मेतत्सर्वेषां नवानामङ्गसिद्धये ।
विशेषः कौस्तुभादीनामधुनाऽत्रैव वक्ष्यते ॥ ३ ॥

[ कौस्तुभमन्त्रसाधनम् ]

मण्यक्षरस्यासने तु नियोक्तव्यौ [1]रलौ क्रमात् ।
कृत्वा न्यासं यजेद्देहे सूर्यवद्वर्तुलं बहिः ॥ ४ ॥
सपद्ममण्डलं कृत्वा इष्ट्वा तत्र महामते ।
जप्त्वा हुत्वा ततो यायाद्गिरिशृङ्गमपादपम् ॥ ५ ॥
जपेल्लक्षद्वयं पश्चान्मन्दारकुसुमायुतम् ।
जुहुयात्कुङ्कुमेनैव समध्वाज्यपरिप्लुतम् ॥ ६ ॥
ततश्चम्पकपुष्पाणां जुहुयादयुतत्रयम् ।
मन्त्रेशः सिध्यति क्षिप्रं सिद्धः सद्रत्नसञ्चयम् ॥ ७ ॥
प्रयच्छत्यचिरेणैव आयुरारोग्यवर्धनम् ।
कृत्वाऽलक्तकसूत्रेण वेष्टनाच्च यवत्रयम् ॥ ८ ॥
अङ्गुलानि चतुर्दैर्घ्यात् घृताक्तं वर्तिपञ्चकम् ।
सषडङ्गेन मन्त्रेण ज्वालयित्वा जपेन्मुने ॥ ९ ॥
शतमेकं तु वै सार्धं लोहचक्रोपरि स्थितम् ।
बिलं रसायनं वित्तं यत्राधस्तात्क्षितौ स्थितम् ॥ १० ॥
चङ्क्रमेज्जपमानस्तु चक्रात्प्लुत्य च भेकवत् ।
वर्तयो निपतन्त्याशु मन्त्रस्यास्य प्रभावतः ॥ ११ ॥
स्थानं खात्वोत्तरेद्विप्र[2] निधीन्वै सरसायनान् ।
बिलं कृतं यद्विविक्तं तिष्ठत्याचन्द्रतारकम् ॥ १२ ॥
नरेन्द्रमखिलं तत्र .... .... ... ... .... ।
रत्नानि ध्यानमात्रेण पणान्याभरणानि च ॥ १३ ॥

---

1 लरौ Y 2 रे विप्र A

ददाति मर्त्यलोकेऽस्मिन्दुर्लभानि सदैव हि ।
यश्चैवं ........माद्यैस्तु लिखितं धारयेद्दले ॥ १४ ॥
पद्म. ..सप्रयोगेण प्रजपन्मन्त्रनायकम् ।
तस्य सर्वार्थसिध्यर्थं सर्वस्मिन्निधिवस्तुनि ॥ १५ ॥
इत्येतत्कौस्तुभस्योक्तं मालामन्त्रस्य कथ्यते ।

[ मालामन्त्रसाधनम् ]

अथ स्वनामवर्णस्य क्रमाच्च लय(यरल ?) त्रयम् ॥ १६ ॥
पूर्वोपकरणेनैव युक्तमङ्गगणं तनौ ।
न्यस्य कृत्वा तु हृद्यागं बहिरर्धेन्दुमण्डले ॥ १७ ॥
षट्पत्रे पुष्करे ध्यात्वा संपूज्य जुहुयात्ततः ।
वनराजिं समासाद्य लक्षमेकं जपेत्ततः ॥ १८ ॥
जातिचम्पकपुष्पाणां कदम्बानां तु होमयेत् ।
सर्वौषधिरसाक्तानामयुतश्चायुतं क्रमात् ॥ १९ ॥
मधुना केवलेनाथ जुहुयादयुतं द्विज ।
होमान्ते मन्त्रसिद्धिस्स्याद्दैवी लोके तु मानुषे ॥ २० ॥
कृत्वाऽभिमन्त्रितां कण्ठे पुष्पमालां च साधकः ।
निधायावनिसंस्थायामर्चायामात्मनोऽथवा ॥ २१ ॥
न विम्रमानभावत्वं यात्यसौ यावदिच्छति ।
करोति चार्चनं विष्णोः स्थाने पुष्पफलोज्झिते ॥ २२ ॥
अकालकुसुमान्याशु तत्राकाशात्पतन्ति च ।
पूजां ( स्रजं ) कृत्वा तु तैः पुष्पैस्तान्येव यदि धारयेत् ॥ २३ ॥
उत्तमाङ्गे तु कण्ठे वा भूयो द्विशतमन्त्रिताम् ।
यायाददर्शनं मन्त्री खगतिर्वाऽथ वायुवत् ॥ २४ ॥
दिव्यगन्धवहो नित्यं दिव्याश्चर्यप्रदर्शकः ।
कुसुमायुधसादृश्याद्वपुषा परिदृश्यते ॥ २५ ॥
मालाधरस्तु वै मन्त्री अखिले ललनाकुले ।
मालाकारस्य वै तुष्टो यदि पुष्पवनं द्विज ॥ २६ ॥
निरीक्षते जपन्मन्त्री शुष्कं तत्पुष्पितं भवेत् ।

---

1 यश्चैवमादिमा A

क्रुद्धोऽपि कुसुमाकीर्णं वनं दृष्ट्वा करोति च ॥ २७ ॥
दावाग्निनेव निर्दग्धं भूयो वा यदि चेच्छति ।
प्रावृण्माधवकालाभ्यां तुल्यत्वमुपपादयेत् ॥ २८ ॥
ये केचिद्दुर्लभा गन्धाः स्वर्गपातालसंभवाः ।
यत्र मालाधरस्तिष्ठेन्मन्त्री तत्र [1]वहन्ति ते ॥ २९ ॥
सुभगस्सर्वभूतानां दर्शनादेव जायते ।
जयादृते न चाप्नोति कुत्रचित्स पराजयम् ॥ ३० ॥
शान्तिकं पौष्टिकं चैव अयत्नेनाचिरात्तु वै ।
मालाधरो लभेताशु मन्त्रसन्धारणादपि ॥ ३१ ॥

[ कमलमन्त्रसाधनप्रकारः ]

मालासाधनमित्येतत्कमलस्याथ कथ्यते ।
नामार्णस्यासने दद्याज्जीवं वरुणसंस्थितम् ॥ ३२ ॥
प्रागुक्तसंस्कृतं कृत्वा ह्यस्य ध्यात्वा यजेद्धृदि ।
बहिः पद्मान्तरे पद्मं द्विषट्पत्रे तु षड्दलम् ॥ ३३ ॥
कर्णिकाकेसरोपेतं कृत्वा वृत्तपुरान्तरे ।
तत्रावतार्य संपूज्य होमं कृत्वा तिलादिकैः ॥ ३४ ॥
यायात्पद्मवनोद्देशं पद्ममन्त्रं जपेत्ततः ।
लक्षमेकं मुनिश्रेष्ठ अयुतं त्रितयान्वितम् ॥ ३५ ॥
होमयेत्कमलानां तु अयुतद्वितयं द्विज ।
अयुतं स्थलपद्मानां मधुसिक्तं ततोऽयुतम् ॥ ३६ ॥
नागकेसरगन्धानां मन्त्रसिद्धिर्भवेत्ततः ।
लभेत विपुलां लक्ष्मीं व्याधिरोगविवर्जितः ॥ ३७ ॥
सौभाग्यमतुलं चैव कान्तिं परमशोभनाम् ।
वलीपलितनिर्मुक्तो धनधान्यसमन्वितः ॥ ३८ ॥
भूर्जपत्रे तु षट्पत्रं कमलं कुङ्कुमेन तु ।
विलिख्य मन्त्रं तन्मध्ये न्यासयोगेन नारद ॥ ३९ ॥
ददाति धारणात्सर्वं साधितं कमलं पुरा ।
एतद्विधानं पद्मस्य शङ्खस्याप्यधुनोच्यते ॥ ४० ॥

---

1 भवन्ति A

[ शङ्खमन्त्रसाधनप्रकारः ]

स्वाभिनद्धा (धाना ?) द्यवर्णस्य त्वधस्थौ योजयेद्धलौ ।
विग्रहं सकलीकृत्य हृद्यागे तु कृते सति ॥ ४१ ॥
बाह्ये शङ्खोदरं पद्मं षट्पत्रं मण्डलस्थितम् ।
कृत्वा तत्रार्चयेन्मन्त्रं होमं कृत्वा तु नारद ॥ ४२ ॥
निर्झराम्बुयुतं स्थानं प्रयायाद्विजनं द्विज ।
लक्षाष्टकं जपेन्मन्त्री अयुतं त्रितयोत्तरम् ॥ ४३ ॥
जुहुयात्कुमुदानां तु लक्षषट्कं समाहितः ।
होमान्ते मन्त्रराट् सम्यक् सिध्यत्यस्य महामते ॥ ४४ ॥
दूराच्छ्रवणविज्ञानं तत्प्रभावात्प्रवर्तते ।
सर्वभूतरुतं चैव ध्यानजप्यपरो लभेत् ॥ ४५ ॥
प्रभावान्मन्त्रनाथस्य शब्दांश्चाकर्णयेद्बहून् ।
देवगन्धर्वलोकोत्थान् श्रोत्रेन्द्रियमनोहरान् ॥ ४६ ॥
प्रयुक्तः पूर्वविधिना मन्त्रोऽयं यत्र कुत्रचित् ।
स साधयति तच्छीघ्रं विघ्नेशेन महामते ॥ ४७ ॥
तुषारक्षीरललितां (ते ?) सुधया चन्दनेन च ।
रक्तवस्त्रेऽथवा भूर्जे मन्त्रं यो धारयत्यपि ॥ ४८ ॥
तस्योपचयसामग्री सम्मुखत्वं प्रयाति च ।
विधानमेतच्छङ्खस्य प्रोक्तं चक्रस्य कथ्यते ॥ ४९ ॥

[ चक्रमन्त्रसाधनप्रकारः ]

कृत्वोर्ध्वं मरणानां च संज्ञा प्राक् क्षयं तु यत्(?) ।
कुर्यात्परिकराढ्यं च चक्राङ्गगणसिद्धये ॥ ५० ॥
न्यस्य पाणौ तथा देहे हृत्पद्मे पूजयेत्ततः ।
द्विषडरं लिखेच्चक्रं नाभिनेमिसमन्वितम् ॥ ५१ ॥
तदन्तरे तु षट्पत्रं कमलं रक्तपांडुरम् ।
चक्रं राजोपलाभेन सितधारं ज्वलत्प्रभम् ॥ ५२ ॥
तन्मध्ये चक्रमन्त्रं तु संपूज्य जुहुयात्ततः ।
दत्वा पूर्णाहुतिं चैव समाक्रम्य वनस्थलीम् ॥ ५३ ॥

1 कृत्वोर्ध्वमकृत्वोर्ध्वमरणाना च संज्ञया । प्रागक्षय तु यत् ... ... . ... A

विलिख्य चक्राणमन्त्र ...कं वाथ कुङ्कुमम् ।
चक्रमस्मीति वै बुद्ध्या स्थितमात्मनि नारद ॥ ५४ ॥
समाक्रम्य तु चक्राक्षं बद्धपद्मासनो विशेत् ।
जपेल्लक्षत्रयं मन्त्री चक्राङ्कां च महौषधिम् ॥ ५५ ॥
जुहुयाल्लक्षमानेन चक्रलक्षस्थितो व्रती ।
चक्राङ्के तु शुभे कुण्डे त्रितयं जुहुयाद्धृतम् ॥ ५६ ॥
होमान्ते मुनिशार्दूल चक्रमाक्रम्य साधकः ।
जपेद्ध्यानस्थितो लक्षं चक्रमुत्पतते ततः ॥ ५७ ॥
प्रयात्यर्कपदं वेगाद्गृहीत्वा साधकं तु वै ।
लोकान्तरेषु सर्वेषु नयत्यविरतं बलात् ॥ ५८ ॥
न याति यदि वै मोहं मन्त्रसत्त्वक्षयान्मुने ।
चक्रमस्मीति वै बुद्ध्या वासना यदि वर्तते ॥ ५९ ॥
मन्त्र्यस्मिन्मानुषे लोके नास्ति तद्यन्न साधयेत् ।
कर्मणा मनसा वाचा ध्यानात्संस्मरणात्तु वै ॥ ६० ॥
इत्येतच्चक्रमन्त्रस्य विधानमथ नारद ।

[ गदामन्त्रसाधनप्रकारः ]

वक्ष्ये गदाख्यमन्त्रस्य तद्वर्णस्यासने न्यसेत् ॥ ६१ ॥
[1]लरौ पूर्वोदितं सर्वमूर्ध्वेऽङ्गनिचयो भवेत् ।
न्यासं कृत्वाऽर्चनं सम्यङ्मनसाऽथ बहिर्द्विज ॥ ६२ ॥
गदाष्टकावृतं कुर्यात्स्फुरन्तं मध्यतोऽम्बुजम् ।
हेमाभं षड्दलं तत्र गदामन्त्रं तु पूजयेत् ॥ ६३ ॥
होमं कृत्वा ततो यायाद्गुहां विप्र मनोरमाम् ।
तत्रायुताष्टकं मन्त्रं जपेत्तदनु होमयेत् ॥ ६४ ॥
घृताप्लुतं समिल्लक्षं रक्तचन्दनसंभवम् ।
होमान्ते तु गदामन्त्रः सुसिद्धिं संप्रयच्छति ॥ ६५ ॥
यान्यभीष्टानि मनसो ह्यात्मनश्च परस्य वा ।
कृत्वादौ तु गदां मन्त्री द्विहस्तां चन्दनोत्थिताम् ॥ ६६ ॥
प्रपूज्य तां समादाय कृत्वाष्टशतमन्त्रिताम् ॥
घोरान्दुष्टग्रहान्हन्यान्मन्त्री शिरसि ताडनात् ॥ ६७ ॥

1 रलौ A

यत्रेन्द्रजालरोगादीन् (दि ?) स्तम्भा नानाविधाश्च ये ।
पाणिना भ्राम्यमाणायां गदायां यान्ति हस्तसात् ॥ ६८ ॥
नश्यन्ति करिणो मत्तास्तथान्ये कुक्कुरादयः ।
घोरा विषधरा क्षुद्रा येऽप्यन्ये दुष्टचेतसः ॥ ६९ ॥
प्रहारैर्भूतलं हन्याद्दशभिर्मन्त्रसंस्कृतैः ।
पातालवीथीः सर्वाश्च निर्भयः संचरेद्व्रती ॥ ७० ॥
चक्रवल्लिखितं भूर्जे गदामन्त्रं च यो वहेत् ।
त्रिलोहवेष्टितां कृत्वा स सर्वसुखभाग्भवेत् ॥ ७१ ॥
उक्तमेतद्गदाख्यस्य कर्म मन्त्रस्य नारद ।

[ गरुडमन्त्रसाधनप्रकारः ]

गरुडस्याधुना शीघ्रमेकाग्रमवधारय ॥ ७२ ॥
वर्णेऽभिधानपूर्वे तु वेदात्मानं नियोजयेत् ।
ऊर्ध्वाधो ह्यनलं भूयो युक्तं तत्पूर्ववत्स्वरैः ॥ ७३ ॥
कृत्वा न्यासं तु हृद्यागं चतुरस्रे तु मण्डले ।
षट्पत्रं वज्रमध्ये तु कुर्यात्पद्मं सुपीतलम् ॥ ७४ ॥
संपूज्य तत्र गरुडं होमं कृत्वा यथाविधि ।
यायाद्[1]द्रगिरेः शृङ्गं जपेल्लक्षचतुष्टयम् ॥ ७५ ॥
त्रिलक्षं जुहुयात्पश्चाद्घृताक्तानां महामते ।
श्यामातण्डुलयुक्तानां तिलानामेकमानसः ॥ ७६ ॥
ततोऽस्य खगराट् सम्यक् परितोषं प्रयच्छति[2] ।
अभीष्टमापादयति साधकस्य कृतात्मनः ॥ ७७ ॥
निरीक्षमाणो दिक्चक्रं प्रदक्षिणमुपक्रमन् ।
जपेन्मन्त्रं यदा मन्त्री आस्ते रात्रौ सिताष्टमीम् ॥ ७८ ॥
तदाऽष्टौ कुलनागा ये नागवृन्दायुतान्विताः ।
प्रधानान्वै मणींश्चैव प्रधानं च रसायनम् ॥ ७९ ॥
गृहीत्वा भयभीताश्च तस्य तिष्ठन्ति चाग्रतः ।
निस्सर्पः स भवेद्देशो यत्र मन्त्र्यवतिष्ठते ॥ ८० ॥
स्थावराणि विषाणां चाभ्यन्तराणां तु का कथा ।
लूताविस्फोटकानां तु गर्दभानां महामते ॥ ८१ ॥

---

1 चैव A 2 प्रयाति च A

नामनाशो भवेत्तत्र यावत्तत्सन्तते (त ?) स्थितिः ।
लीलया [1]याहि याहीति दष्टमेवस्य(?)भाषते ॥ ८२ ॥
स याति च तथा नूनमरणेषूषरेषु च ।
विषभारसहस्रं च योऽत्ति वै कालिकोदये ॥ ८३ ॥
भक्त्या स्मृत्वा मन्त्रिणं तं तत्तन्नामग्रहेण वा ।
यश्च धारयते मन्त्रं ललाटे कुंकुमेन तु ॥ ८४ ॥
स सर्वदोषनिर्मुक्तः ख आस्ते पक्षिराजवत् ।
गरुडस्य च मन्त्रस्य उक्तमुद्देशतो मया ॥ ८५ ॥

[ पाशमन्त्रसाधनप्रकारः ]

माहात्म्यमथ पाशाख्यमन्त्रस्य शृणु नारद ।
विनियोगं तदाद्यर्णे विश्वरूपानलौ त्वधः ॥ ८६ ॥
तदङ्कयेच्च शिरसि षोढा कृत्वा तु पूर्ववत् ।
न्यस्य हस्ते तथा देहे हृत्पद्मे पूजयेत्ततः ॥ ८७ ॥
कृत्वा पाशोदरे पद्मं षट्पत्रं वह्निमण्डले ।
तत्र संपूज्य तन्मन्त्रं होमं कुर्यात्तिलाक्षतैः ॥ ८८ ॥
जप्त्वा मन्त्रायुतान्यष्टौ जुहुयाद्राजसर्षपान् ।
सितसर्षपतैलाक्तान् जपार्धेन महामते ॥ ८९ ॥
तदन्ते तु घृतैः कुर्यात्तिलैर्होमं तु नारद ।
एकायुतप्रमाणेन ततः सिध्यति मन्त्रराट् ॥ ९० ॥
मर्त्यलोकस्थितो मन्त्री पातालस्थांश्च कर्षयेत् ।
पातालसंस्थितो मन्त्री स्वर्म्यान्वै निखिलान्मुने ॥ ९१ ॥
वश्याकर्षणशो[2]षांश्च प्रयुक्तश्चैव मन्त्रराट् ।
करोति नात्र संदेहो ध्यातश्च लिखितस्तु वा ॥ ९२ ॥
वरपाशयुतं मन्त्रं नियुञ्जीयान्महामते ।
विधिनाऽऽराधितं प्राग्वत्तत्तदाप्नोत्ययत्नतः ॥ ९३ ॥
रोचनाकुंकुमेनैव लिखितं च निशाम्बुना ।
संवेष्ट्य पीतसूत्रेण यो धारयति नारद ॥ ९४ ॥
यां यां निरीक्षते सौम्य तां तां(कान्तां ?)सुस्निग्धया दृशा ।
सकृच्चामरणान्तं तु सा सा तस्यानुगा भवेत् ॥ ९५ ॥

1 साहि या भीतिदुष्ट Y C L 2 शेषा A

यया दृष्टोऽथ वा मन्त्री दूराद्विप्र श्रुतोऽपि वा ।
सा स्वस्थानं परित्यज्य धावेद्यत्र स तिष्ठति ॥ ९६ ॥
अपि चेत्किन्नरी नारी यक्षिणी देवकन्यका ।
नारी विद्याधरी चैव गन्धर्वी सिद्धसंज्ञिता ॥ ९७ ॥
तां चेतसाऽनुसन्धाय रात्रौ मन्त्रवरं जपेत् ।
निशान्ते विह्वलीभूता पाशाकृष्टेव तिष्ठते ॥ ९८ ॥
एतत्पाशस्य कथितमङ्कुशस्याधुनोच्यते ।

[ अङ्कुशमन्त्रसाधनप्रकारः ]

अकरालमधश्चोर्ध्वे अनलार्णेन योजयेत् ॥ ९९ ॥
युक्तं कुर्यात्स्वरैः प्राग्वन्न्यस्य संपूज्य हृद्गतम् ।
कृत्वा शशिकलाकारं पुरं तन्मध्यतोऽम्बुजम् ॥ १०० ॥
सिन्दूरपुञ्जवर्णाभं तन्मध्ये हृदयं न्यसेत् ।
पूजयित्वा विधानेन जुहुयात्तदनन्तरम् ॥ १०१ ॥
प्रियङ्गुना यथाशक्ति श्यामाकेन तिलेन च ।
ततोऽङ्कुशोऽहं भाव्यं च व्रजेत्पर्वतमस्तकम् ॥ १०२ ॥
जपेल्लक्षत्रयं तत्र ततो लक्षं तु होमयेत् ।
रक्तानामरपुष्पाणां(?)[1]कृष्णानामपरं तु वै ॥ १०३ ॥
अयुते द्वे च समिधां खदिराणां महामते ।
कटुतैलाप्लुतानां च दद्यात्पूर्णाहुतिं ततः ॥ १०४ ॥
आज्येन च सुगन्धेन ततो मन्त्रः प्रसिध्यति ।
ततः प्रभृति कालाच्च कुर्यात्कर्माण्यशेषतः ॥ १०५ ॥
साधकोऽङ्कुशमन्त्रेण लीलया चाप्रयत्नतः ।
वश्याकर्षणविद्वेषौ मारणोच्चाटने तथा ॥ १०६ ॥
ध्यात्वाऽऽकृष्टश्च वित्तेशो मन्त्रेणानेन वै यदि ।
[2]प्रयच्छत्यखिलं वित्तमभयं चान्तकस्तु वै ॥ १०७ ॥
शक्रः प्रयच्छते राज्यं मारुतः शीघ्रगामिताम् ।
निःशेषविद्याकथनमीशस्तेजो हुताशनः ॥ १०८ ॥
वरुणः शान्तिपुष्टी च समाकृष्टः करोति च ।
यक्षेशः किन्नरत्वं च पन्नगेशो रसायनम् ॥ १०९ ॥

1 रक्ताश्वमार A 2 स यच्छत्य A

आकृष्टः खगतिं दद्याद्भुवो ब्राह्मणविग्रहम् ।
विद्याधराश्च गुलिकां सिद्धाश्चैवाञ्जनं महत् ॥ ११० ॥
प्रयच्छन्ति सदाऽऽकृष्टा मन्त्रस्यास्य प्रभावतः ।
प्रागुक्ता गुलिका कार्या राज्ञां च सपरिच्छदाः (?) ॥ १११ ॥
मन्त्री चाङ्कुशमन्त्रेण ध्यानयुक्तेन साधयेत् ।
ध्यानाज्जपात्तथालेख्याद्धवनात्पूजनान्मुने ॥ ११२ ॥
करोत्यङ्कुशमन्त्रस्तु अभीष्टमपरे तथा ।
कौस्तुभाद्याश्च वै प्रोक्तास्त्वखण्डविधिसाधिताः ॥ ११३ ॥
निखिलं संप्रयच्छन्ति भावशुद्धिसमन्विताः ।
युगशक्त्यनुसारेण सुसहायगुणेन च ॥ ११४ ॥
कृते एतच्च मन्त्राणामुक्तं संसाधनं मया ।
त्रेतायां द्विगुणं विद्धि त्रिगुणं द्वापरे स्मृतम् ॥ ११५ ॥
कलौ चतुर्गुणं चैव भावज्ञस्य च वै पुनः ।
प्रीतिभक्तिसहायस्य श्रद्धानिष्ठस्य तत्त्वतः ॥ ११६ ॥
सदा सदा .... .... विद्धि जपहोमादिकं तु यत् ।
तस्माद्भावं तथा भक्तिमेकत्र कुरु नारद ॥ ११७ ॥
साधनं सर्वमेकत्र समं तत्रापि वा न वा ।

इति श्रीपाञ्चरात्रे जयाख्यसंहितायां परिकरसाधनं नाम त्रिंशः पटलः ।

अथ उपाङ्गसाधनं नाम एकत्रिंशः पटलः ।

[ सत्यमन्त्रसाधनप्रकारः ]

श्रीभगवान्—

कदम्बगोलकाकारं नानावर्णविभूषितम् ।
सपद्मं मण्डलं कृत्वा पुरा तदनु नारद ॥ १ ॥
सत्येन सकलीकृत्य स्वमात्मानं यजेद्धृदि ।
ततोऽवतार्य हृदयान्मण्डले पूर्वकल्पिते ॥ २ ॥
चित्रैः पवित्रैः सुस्वादैरिष्ट्वा मूलफलादिकैः ।
हुत्वा तिलाद्यैर्विप्रेन्द्र ततो यायाच्छुभं वनम् ॥ ३ ॥
तत्र लक्षचतुष्कं तु स्वस्थानावस्थितं मुने ।
जप्तव्यं ध्यायमानेन द्विलक्षमथ होमयेत् ॥ ४ ॥

शर्करामधुराज्यं च क्षीरं च तिलतण्डुलान् ।
एकीकृत्य समासेन मुद्रां बध्वा मृगाननाम् ॥ ५ ॥

[ मृगीमुद्रा ]

मध्यमानामिकाङ्गुष्ठत्रयाणामग्रमेलनात् ।
प्रदेशिनी कनिष्ठा च प्रोन्नता विरला द्विज ॥ ६ ॥
कृत्वा मुद्रां मृगीं नाम्ना सर्वत्र विहिताऽऽहुतौ ।
ततः पूर्णाहुतिं दद्यान्मन्त्रेशः सिध्यति द्विज ॥ ७ ॥
ददाति सिद्धिं दिव्यां च स्वेच्छया विधियोजितः ।
विज्ञानभूमिकाः सर्वाः प्रकटीकुरुते प्रभुः ॥ ८ ॥

[ वासुदेवमन्त्रसाधनप्रकारः ]

एवमेव द्विजश्रेष्ठ सकलीकृत्य विग्रहम् ।
वासुदेवाख्यबीजेन केवलेन महात्मना ॥ ९ ॥
पूजयित्वा तु मनसा बहिः कृत्वाऽथ मण्डलम् ।
सुवृत्तं पूर्णचन्द्राभं श्वेतपत्रोदरं महत् ॥ १० ॥
तत्रावतार्य संपूज्य सितैः पुष्पानुलेपनैः ।
नैवेद्यभेदैः सुसितैः जुहुयात् क्षीरतण्डुलैः ॥ ११ ॥
ततो यायाद्वनं रम्यं सितपुष्पद्रुमाकुलम् ।
सत्योक्तं जपहोमं तु कृत्वा क्षीराज्यतण्डुलैः ॥ १२ ॥
होमान्ते वासुदेवस्तु [1]सर्वाः सिद्धीश्च शाश्वताः ।
ददाति च प्रयुक्तस्तु स्वपदं मोक्षसिद्धिदम् ॥ १३ ॥
प्रकटीकुरुते शश्वत्प्रसन्नः परमेश्वरः ।

[ सङ्कर्षणमन्त्रसाधनप्रकारः ]

न्यस्य हस्ते पुरा देहे .... नं [2]सङ्कर्षणं मुने ॥ १४ ॥
पूजयित्वा तु हृत्पद्मे बाह्ये कुर्याच्च मण्डलम् ।
रजसा सत्त्वमिश्रेण पाण्डुरेण तु नारद ॥ १५ ॥
व्यक्तं भास्वरबिंबाभं रक्ततामरसोदरम् ।
तत्रारुणैस्तु नैवेद्यैस्तथा पुष्पानुलेपनैः ॥ १६ ॥
अवतार्य यजेद्भक्त्या जुहुयात्तदनन्तरम् ।

---

1 सिद्धीः सर्वाश्च सात्वताः Y CL 2 नाद कर्षणं Y CL

तिलानाज्येन संसिक्तान् दत्वा पूर्णाहुतिं व्रजेत् ॥ १७ ॥
अशोकवनमध्यं तु तत्र लक्षचतुष्टयम् ।
जप्त्वाऽथ रक्तपुष्पाणां जुहुयाल्लक्षमेव हि ॥ १८ ॥
लक्षं कुङ्कुमपुष्पाणां दद्यात्पूर्णाहुतिं ततः ।
ततः सिध्यति मन्त्रेशः सिद्धः सिद्धिं प्रयच्छति ॥ १९ ॥
स्वयमप्यप्रयुक्तस्तु यद्यन्मनसि रोचते ।
विज्ञायते गतिर्मान्त्री सौषुप्ताख्या तु याखिला ॥ २० ॥
स्वयं स भगवान्देवः स्वपदे निष्कलात्मना ।
व्यक्तिमभ्येति भक्तानां मोक्षमार्गे नियोजयेत् ॥ २१ ॥

[ प्रद्युम्नमन्त्रसाधनप्रकारः ]

अथ प्रद्युम्नमन्त्रेण कृत्वा स्वं मन्त्रविग्रहम् ।
हृत्तामरसमध्ये तु कृत्वा यागं तु चेतसि ॥ २२ ॥
बहिः कदम्बपुष्पाभं रजसा हेमरूपिणम् ।
सपद्ममण्डलं कृत्वा तत्राहूय जगत्पतिम् ॥ २३ ॥
उपचारेण पीतेन यजेत्पुष्पादिना तु वै ।
रजनीपूर्णसंमिश्रं सातिलं जुहुयाद्घृतम् ॥ २४ ॥
दत्वा पूर्णाहुतिं यायात्कदलीकाननान्तरम् ।
जपं पूर्वोक्तसंख्यातं तत्र कृत्वा तु नारद ॥ २५ ॥
मिश्रितं कुङ्कुमेनैव प्राक्कृत्वा निस्तुषं तिलम् ।
सुगन्धिशालिसंमिश्रं लक्षमानेन होमयेत् ॥ २६ ॥
भावितं कुंकुमेनाथ कथितं च पुरा मुने ।
अयुतत्रयमानेन पयो गव्यं तु होमयेत् ॥ २७ ॥
बदराण्डप्रमाणानां घृताक्तानामनन्तरम् ।
अयुतं गुलिकानां तु गुग्गुलोरथ होमयेत् ॥ २८ ॥
ततस्त्वाज्यस्य जुहुयादयुतं केवलस्य च ।
दद्यात्पूर्णाहुतिं पश्चान्मन्त्रेशस्सिध्यते ततः ॥ २९ ॥
सप्तलोकगतान्भावानप्रयुक्तो ददाति च ।
योजयेत्सिद्धिमार्गे तु ततो मोक्षपथेन वै ॥ ३० ॥

[ अनिरुद्धमन्त्रसाधनप्रकारः ]

पुराऽनिरुद्धमन्त्रेण सकलीकृत्य विग्रहम् ।

हृद्यागं विधिवत्कृत्वा मण्डलं निर्वपेद्बहिः ॥ ३१ ॥
अतसीपुष्पसंकाशं वर्णेन रजसा शुभम् ।
वृत्तं कदम्बगोलाभं पद्मगं मधुशोभनम् ॥ ३२ ॥
तत्राहूय जगन्नाथमुद्यत्सूर्यसमप्रभम् ।
पुष्पोपलेपनाद्यैस्तु सुसितैः पावनैर्यजेत् ॥ ३३ ॥
होमं कृष्णतिलैः कृत्वा होमान्ते विजनं वनम् ।
यायात्तत्र जपं कुर्यात् प्राक्प्रमाणेन नारद ॥ ३४ ॥
होमं कुर्यात्तदर्धेन अतसीपुष्पसन्निभैः ।
तिलैरप्यसितैर्विप्र कृष्णागरुसमन्वितैः ॥ ३५ ॥
दद्यात्पूर्णाहुतिं पश्चात्ततः स परमेश्वरः ।
तोषमायाति विप्रेन्द्र तुष्टः सर्वं ददाति च ॥ ३६ ॥
स्वयमेवानिरुद्धात्मा योजयेच्छाश्वते पदे ।
स बाह्याभ्यन्तरं सर्वं दर्शयेत्साधकस्य च ॥ ३७ ॥
येनासौ कृतकृत्यः स्यादनन्तफलभागपि ।
बहुनाऽत्र किमुक्तेन पञ्चकृत्यकसंयुतम् ॥ ३८ ॥

[ सप्ताक्षरमन्त्रसाधनप्रकारः ]

कृत्वा सप्ताक्षरं मन्त्रं विप्रहस्तेन वै पुरा ।
सकलीकृत्य विप्रेन्द्र प्राग्वद्ध्यात्वा च निष्कलम् ॥ ३९ ॥
हृत्पुण्डरीकमध्ये तु पूजयित्वा जपेत्ततः ।
एकान्ते निर्जने रम्ये वने पादपसंकुले ॥ ४० ॥
सप्तलक्षाणि विप्रेन्द्र आयामत्रितयान्वितः ।
विना बाह्योपचारेण होमपूजादिकेन तु ॥ ४१ ॥
जपान्ते मुनिशार्दूल सर्वकामानवाप्नुयात् ।
अणिमाद्यास्तथा सिद्धीर्गुणषट्कं बलादिकम् ॥ ४२ ॥
वाचा ददाति सर्वं च यस्य यन्मनसेप्सितम् ।
तुष्टः साधकमुख्योऽसौ क्रुद्धो लोकत्रयं दहेत् ॥ ४३ ॥
देवासुरास्तथा नागाः सिद्धाश्चेन्मुक्तिभाजनाः ।
किङ्करत्वेन वर्तन्ते योगसिद्धाश्च देवताः ॥ ४४ ॥
सप्ताक्षराभियुक्त.........सत्यस्य महात्मनः ।
आचन्द्रतारकं कालं वलीपलितवर्जितः ॥ ४५ ॥

मन्त्री तिष्ठति देहे स्वे स्वयमन्ते कलेवरम् ।
त्यक्त्वा तु मुनिशार्दूल यायाद्विष्णोः परं पदम् ॥ ४६ ॥
यद्गत्वा न निवर्तन्ते पुनरस्मिन्भवार्णवे ।
सत्यादिपंचकं विप्र पिण्डस्सप्ताक्षरस्तथा ॥ ४७ ॥
आराधितस्तदर्धेन जपहोमादिकैः शुभैः ।
न हि सामान्यसिद्धीनां योक्तव्यं मन्त्रवादिना ॥ ४८ ॥
आराधितस्तु विधिना स्वयमेव ददाति च ।
अभीप्सितं साधकानामन्ते मोक्षं च शाश्वतम् ॥ ४९ ॥

इति श्रीपांचरात्रे जयाख्यसंहितायां उपाङ्गसाधनं नाम एकत्रिंशः पटलः ।

---

अथ साधनविधिर्नाम द्वात्रिंशः पटलः ।

[ विघ्नेशमन्त्रसाधनप्रकारः ]

यः पुरा कथितश्चैव मन्त्रो वैनायको मया ।
तस्येदानीं समासेन साधनं शृणु नारद ॥ १ ॥
कृत्वा न्यासं षडङ्गं तु इष्ट्वा हृत्कमलान्तरे ।
ततः कोणत्रयेणैव युक्तं कुर्याच्च मण्डलम् ॥ २ ॥
द्वारत्रयान्वितं चैव तन्मध्ये त्रिदलं लिखेत् ।
कमलं तत्र तन्मध्ये पूर्वोक्तविधिना द्विज ॥ ३ ॥
इष्ट्वा हुत्वा ततः कुर्याद्रूपं सम्यक्तयाऽऽत्मनः ।
यायाद्वनप्रदेशं तु जपेल्लक्षद्वयं मुने ॥ ४ ॥
लक्षमेकं तु जुहुयात्पुष्पाणां मुनिसत्तम ।
अयुतं द्वे च समिधां सितार्कस्य विशेषतः ॥ ५ ॥
घृतस्यायुतमेकं तु दद्यात्पूर्णाहुतिं मुने ।
ततः प्रत्यक्षतामेति साक्षाद्देवो विनायकः ॥ ६ ॥
सिद्धोऽस्मीति च वै ब्रूते कुरु कर्म यथेप्सितम् ।
तदा च साधकवरस्सर्वं साधयते क्षणात् ॥ ७ ॥

[ विघ्नेशमन्त्रसिद्धिज सामर्थ्यम् ]

राजार्कमूलमादाय कृत्वा च शतमन्त्रितम् ।
गणेशमन्त्रेण ततो मन्त्रयित्वा समापयेत् ॥ ८ ॥

अर्धाङ्गुलप्रमाणेन विघ्नेशं पद्मसंस्थितम् ।
तस्मिन्मन्त्रं सकृद्न्यस्य वेष्टयेन्मदनेन तु ॥ ९ ॥
कृत्वा ताम्रपुटे चैव धारयेच्छिरसा तु तत् ।
रणे राजकुले द्यूते विवादेऽपि महामते ॥ १० ॥
जयमाप्नोति मन्त्रज्ञो निर्विघ्नेन यथेप्सितम् ।
न्यासं कृत्वा गणेशेन..... [1]लाग्यस्यकस्यचित् ॥ ११ ॥
तिष्ठत्यग्रे तु मन्त्रज्ञो निर्विघ्नेन तदाप्नुयात् ।
शताभिमन्त्रितं कृत्वा फलं पुष्पं च वै रिपोः ॥ १२ ॥
दद्यात्पाणौ तु सर्वत्र विघ्नो भवति तस्य वै ।
घृष्ट्वा मनश्शिलां मन्त्री भावयेच्च निशाम्बुना ॥ १३ ॥
विमृज्य कापिलेनैव पयसा पीतकर्पटे ।
लिखेद्वैघ्नेश्वरीं मूर्तिं तत्र हृत्पद्ममध्यगाम् ॥ १४ ॥
दद्याद्विघ्नेशमन्त्रं तु सर्वं यच्छत्य...न्वि(भीप्सि ?)तम् ।
यत्रावतिष्ठते गेहे दिशि प्रागुत्तरे तु वै ॥ १५ ॥
यावन्न चालितो भूयो दृष्टो नान्येन केनचित् ।
तावत्तत्र गृहे लक्ष्मीर्धनधान्यसमाकुला ॥ १६ ॥
कृषिगोरक्षवाणिज्यं फलत्यविरतं तु वा ।
[2]कोष्ठागारस्तु कोशो वा न चेत्संख्यायते पुनः ॥ १७ ॥
व्ययं करोति दानं वा तदक्षय्यं व्यये सति ।
देशप्राप्तिं तु वा लाभमुत्तमं यदि मन्यते ॥ १८ ॥
मोदकानि घृताक्तानि मन्त्रितानि विधाय यः ।
हुत्वाऽऽतङ्कविनिर्मुक्तो यत्र यत्र प्रयाति च ॥ १९ ॥
रात्रौ वा वासरे वाऽपि चोरान्तकभयाकुले ।
वस्त्राभरणयुक्तोऽपि धनवान्क्रमते हि सः ॥ २० ॥
योजनानां सहस्राणि एकाकी विघ्नवर्जितः ।
मन्त्राभिमन्त्रितं सम्यक् सितं सिद्धार्थकं करे ॥ २१ ॥
प्रीतियुक्तेन मनसा ददाति स वशं व्रजेत् ।
यदि विघ्नेशमन्त्रेण होमयेद्राजसर्षपान् ॥ २२ ॥

1 लावण्य च कस्यचित् Y 2 गोष्ठा Y CL

कटुतैलसमायुक्तान्विद्वेषं कुरुते क्षणात् ।
परस्परं च प्रीतानामप्रीतानां तु का कथा ॥ २३ ॥
जुहुयाद्यस्य नाम्ना वै वायव्याभिमुखस्थितः ।
सहस्रं काकपक्षाणां सोच्चाटत्यचिरेण तु ॥ २४ ॥
प्रजप्य महिषाक्षं तु सितसिद्धार्थकान्वितम् ।
जुहुयादयुतार्धं तु नाम्ना यस्य महामते ॥ २५ ॥
आकृष्टो दूरतोऽभ्येति होमान्तेऽपि च देवराट् ।
लाक्षालक्तकसंयुक्तं करवीरायुतद्वयम् ॥ २६ ॥
जुहुयाद्यस्य नाम्ना तु भवेद्वश्यो हि सोऽवशः ।
मध्वाज्यं जुहुयान्मन्त्री यद्येकं च तिलायुतम् ॥ २७ ॥
प्रीतिमुत्पादयत्याशु विद्विष्टानां परस्परम् ।
निम्बपत्रकृतं चूर्णं छागासृग्विषभावितम् ॥ २८ ॥
जुहुयाद्यस्य नाम्ना तु रात्रौ भूतदिनेऽसिते ।
स याति पञ्चतामाशु होमान्ते तु महामते ॥ २९ ॥
तदर्धं यदि वै कुर्याद्धोमं तु मधुसर्पिषा ।
एकायुतप्रमाणेन होमे तं जीवयेत्पुनः ॥ ३० ॥
शान्तिं पुष्टिं तथाऽऽरोग्यं घृतक्षीरतिलैः क्रमात् ।
ददाति होमान्मन्त्रेशो निर्विघ्नेन महामते ॥ ३१ ॥
रोचनालिखितं भूर्जे साङ्गमष्टदलाम्बुजे ।
यो धारयति रक्षार्थं स दुःखैर्मुक्तिमाप्नुयात् ॥ ३२ ॥
नश्यन्ति हिंसकास्तस्य ब्रह्मरक्षोमुखा मुने ।
[1]हन्यादपस्मृतिमयं मन्त्रसन्धारतो भवेत् (?) ॥ ३३ ॥
येऽन्ये अतिग्रहाद्याश्च तथा स्कन्दग्रहादयः ।
विघ्नेशमन्त्रो हन्त्येतान् जपाद्ध्यानाच्च पूजनात् ॥ ३४ ॥
तस्मात्सन्धारणीयं च सर्वविघ्नोपशान्तये ।
मन्त्रस्समस्तभूत्यर्थं साधकैः सिद्धिलालसैः ॥ ३५ ॥
वैनायकस्य मन्त्रस्य संविधानमिदं मया ।
उक्तं वागीश्वरीयस्य शृणुष्वावहितो मुने ॥ ३६ ॥

---

1 दुपस्पृशति यं A ( पाठान्तरत्वेन दृश्यते )

[ वागीश्वरीमन्त्रसाधनप्रकारः ]

न्यासं षडङ्गकं कृत्वा मूलमन्त्रादितः क्रमात् ।
इष्ट्वा हृत्कमले त्वादौ बाह्ये चन्द्रार्करूपधृक् ॥ ३७ ॥
सपद्मं मण्डलं कृत्वा देवीं तत्रावतार्य च ।
इष्ट्वा सितादिकैः सर्वैर्नैवेद्यैः कुसुमादिकैः ॥ ३८ ॥
होमं कृत्वा तिलैः शुक्लैर्नवनीतेन नारद ।
दत्वा पूर्णाहुतिं पश्चात्कुर्याद्देहं तदाकृतिम् ॥ ३९ ॥
कदम्बवनमध्ये तु यायादश्चितलोचनः ।
जपेल्लक्षचतुष्कं तु होमं तदनु चाचरेत् ॥ ४० ॥
लक्षसंख्याप्रमाणेन सितशर्करया मुने ।
शालिभिश्च सुगन्धाभिर्नवनीतेन चैव हि ॥ ४१ ॥
घृतक्षीरविमिश्रेण तथा गुग्गुलुना मुने ।
एकैकमयुतं मन्त्री एकैकस्य क्रमान्मने ॥ ४२ ॥
जुहुयाद्वितरेत्पूर्णां ततो वागीश्वरी स्वयम् ।
समेत्य वदने तस्य प्रविशत्यचिरेण तु ॥ ४३ ॥
अशीतोदकधारेव वेद्यते त्वंगना त्वसौ ।

[ वागीश्वरीमन्त्रसिद्धिजं सामर्थ्यम् ]

तदा शीघ्रतरेणैव कालेन तु महाकविः ॥ ४४ ॥
जायते साधकेन्द्रस्तु शास्त्रार्थे वेत्ययत्नितः ।
संस्कृतं प्राकृतं वाऽपि अपभ्रंशानुनासिकम् ॥ ४५ ॥
नानादेशविभागोत्थं त ........ ........बलात् ।
अतीतानागतं वेत्ति सकृद्गृह्णाति चाश्रुतम् ॥ ४६ ॥
ऋग्यजुस्सामशब्दांश्च निस्सृतांश्च द्विजाननात् ।
तुल्यकालत्रयाणां च पृथग्भेदे तु का कथा ॥ ४७ ॥
बहूनां वा यथायोगं वागीशेष्वधिकात्मनाम्[1] ।
विपक्षपदसंस्थानामुद्ग्राहयति लीलया ॥ ४८ ॥
एकैकस्य पृथग्रूपं यदि वर्षशतं मुने ।
क्षयं न वाक्प्रमेयाभ्यां स संयाति द्विजोत्तम ॥ ४९ ॥
अथवा प्रतिपक्षोत्थभूतानां भावितात्मनाम् ।

1 मताम् CL नया A

ध्यायेज्जिह्वादिसंस्थां च वागीशीं रक्तभास्वराम् ॥ ५० ॥
वज्रपंजरमध्यस्थां वाक्स्तम्भमुपपादयेत् ।
ध्यायेत्संप्रतिपन्नस्य जिह्वामध्यगतां यदा ॥ ५१ ॥
चन्द्रमण्डलमध्यस्थां तुषारनिचयप्रभाम् ।
स्रवन्तीममृतं वक्त्रात्तेन तस्य च विग्रहम् ॥ ५२ ॥
संसिक्तं तु स्मरेद्विप्र तत्क्षणात्स कविर्भवेत् ।
पुष्पमण्डलमध्ये तु कृत्वा कुंभं तु राजतम् ॥ ५३ ॥
मध्वम्भःपयसा पूर्णं तन्मध्ये परमेश्वरीम् ।
पूजयित्वा तु सप्ताहं सितपुष्पानुलेपनैः ॥ ५४ ॥
अष्टमेऽहनि वै यस्य दद्यात्तोयाञ्जलित्रयम् ।
स्वहस्तेन तु पानार्थं पीत्वाऽसौ बुद्धिमान्भवात् ॥ ५५ ॥
शान्तिकं पौष्टिकं वाऽ पि तत्स्नानादवगाहनात् ।
जायते जडबुद्धीनामस्वस्थानां विशेषतः ॥ ५६ ॥
शताभिमन्त्रितं कृत्वा वचां यः प्रत्यहं द्विज ।
भक्षयेत्तत्र सप्ताहं स वाग्मी मतिमान्भवेत् ॥ ५७ ॥
इष्ट्वा देवीं त्रिसप्ताहं सिततामरसोदरे ।
निवेद्य सघृतं भक्त्या परमान्नं चरुस्थितम् ॥ ५८ ॥
तच्चोष्मणा युतं तृप्तं भुङ्क्ते निश्शेषतस्तु यः ।
बालो बालाऽथवा कन्या नानाशास्त्रार्थविद्भवेत् ॥ ५९ ॥
वक्त्रादविरतं चापि शास्त्राण्युद्गिरते [1]महत् ।
भवत्योजः क्षयो दूरात्पण्डितानां महामते ॥ ६० ॥
कृत्वाऽभ्यासं तु मनसा सबाह्याभ्यन्तरं तु वै ।
उदासीनस्य मूर्खस्य अपूर्वस्य च संसदि ॥ ६१ ॥
सोऽपि वेदाहरेच्छास्तां तदाज्ञापरिचोदितः ।
सर्वार्थसिद्धिदा देवी सि[2]द्धा वागीश्वरी भवेत् ॥ ६२ ॥
धनकामस्य धनदा पुत्रकामस्य पुत्रदा ।
राज्यदा राज्यकामस्य भोगकामस्य भोगदा ॥ ६३ ॥
जयदा जयकामस्य शान्तिकामस्य शान्तिदा ।
पुष्टिदा पुष्टिकामस्य तुष्टिकामस्य तुष्टिदा ॥ ६४ ॥

---

1 महान् A   2 सद्यो A

ज्ञानदा ज्ञानकामस्य मोक्षकामस्य मोक्षदा ।
..............स कामानां च कामदा ॥ ६५ ॥

[ वागीश्वरीयन्त्रविधानम् ]

पद्ममष्टदलं कृत्वा तदन्ते नामसंयुता ।
देवीषडङ्गषट्कं तु बहिस्संस्थं यदा पुरा ॥ ६६ ॥
तद्बहिश्चापरं पद्मं द्विरष्टदळभूषितम् ।
दळे दळे त्रिधा दद्यात् हृद्बीजं केसरावधौ ॥ ६७ ॥
तदस्त्रबीजं पत्राणां षोडशानां नियोजयेत् ।
लिखेत्षोडशपत्रस्य बाह्येऽब्जं द्वादशच्छदम् ॥ ६८ ॥
शिरश्शिखा च कवचं केसरार्धदले दले ।
नेत्रमन्त्रदलान्तस्थं दद्याद्द्वादशधा मुने ॥ ६९ ॥
अकारादिक्षकारान्तं पद्मबाह्ये तु मातृकाम् ।
लिखेत्कुण्डलयोगेन शिरसा चाथ वेष्टयेत् ॥ ७० ॥
सप्तधा मुनिशार्दूल परमात्माऽथ तद्बहिः ।
व्योमेशाह्लादसंयुक्तो ह्यष्टदिक्षु महामते ॥ ७१ ॥
ततो वायव्यभवनं [1]यकाराष्टकभूषितम् ।
परस्परं यकाराभ्यामन्तरं परिपूरयेत् ॥ ७२ ॥
त्रैलोक्यैश्वर्यदेनैव संख्याहीनेन नारद ।
ततस्त्रिकोणभवने शिखामन्त्रेण दीपितम् ॥ ७३ ॥
कुर्यात्कोणद्वायाद्विम दिक्त्रयात्स्वस्तिकान्वितम् ।
अशेषभुवनाधारं व्योमेशेन समन्वितम् ॥ ७४ ॥
मरीचिपदसंख्यं तु त्रिकोणस्य बहिर्लिखेत् ।
तद्बाह्ये वारुणं दद्यान्मण्डलं चार्धचन्द्रवत् ॥ ७५ ॥
चतुष्पत्रैश्चतुष्पद्मैस्संयुतं तेषु संलिखेत् ।
कर्णिकामध्यसंस्थं तु कवचं पत्रगं शिखा ॥ ७६ ॥
अन्तरालानि पद्मानां वराहार्णेन पूरयेत् ।
चान्द्री व्योमेशयुक्तेन तद्बहिः पार्थिवं पुरम् ॥ ७७ ॥
युक्तं वज्राष्टकेनैव चतुरङ्गुलभूषितम् ।
वज्रोदरगतं चास्त्रं भूयश्चास्त्रेण रश्मियत्(?) ॥ ७८ ॥

---

1 शकारा A

पूरयेत्सकलं बाह्याच्चतुरस्रं पुरं तु तत् ।
रजनीरसमादाय पद्मषण्डमथोदकम् ॥ ७९ ॥
रोचनारसकर्पूरैर्नैशं चोदकमेव च ।
सुदिने पूजयित्वाऽऽदौ वागीशं विलिखेत्ततः ॥ ८० ॥
भूर्जे नेत्रेऽथ वा वस्त्रे सौवर्णोत्थशलाकया ।
त्रिलोहवेष्टितं कृत्वा यन्त्रं यो धारयेद्द्विज ॥ ८१ ॥
तस्याशु वाचि भूतिश्च धनमानौ रिपुक्षयः ।
अक्षयश्च महाघोरे संग्रामे स भवेद्द्विज ॥ ८२ ॥
न भयं विद्यते तस्य विषाहिज्वलनादितः ।
पूरयेदखिलान्कामान् धारणस्मरणादिभिः ॥ ८३ ॥
तस्मादेतत्प्रयत्नेन कुर्याद्बाहोर्गलेऽथ वा ।
सर्वकालजयार्थी वै पुमान्सद्वैष्णवः सदा ॥ ८४ ॥

इति श्रीपाञ्चरात्रे जयाख्यसंहितायां साधनविधिर्नाम द्वात्रिंशः पटलः ।

---

अथ योगाख्यान नाम त्रयस्त्रिंशः पटलः ।

श्रीभगवान्—

अथ योगविभूत्यर्थं योगं युञ्जीत वैष्णवः ।
सुगुप्ते विजने देशे निर्द्वन्द्वे शुभलक्षणे ॥ १ ॥
जितदर्पां मतिं कृत्वा सर्वभूतहिते स्थितः ।
देवाग्निगुरुभक्तश्च सच्छास्त्राभिरतस्सदा ॥ २ ॥
भूतद्रोहपरित्यागी आस्ते यः संयतेन्द्रियः ।
आसने चोपविष्टस्तु सुशुभे लक्षणान्विते ॥ ३ ॥
शुभदारुसमुत्थे तु चतुर्विंशाङ्गुलायते ।
द्वादशाङ्गुलकोत्सेधे सुधौतेनापि वाससा ॥ ४ ॥
कुशैश्च मृदुभिश्छन्ने पवित्रेणाथ चर्मणा ।
तत्रोपविष्टः सततं योगाङ्गानि समभ्यसेत् ॥ ५ ॥

[ प्राणायामस्य त्रैविध्यम् ]

रेचकादिचतुर्भिस्तु मात्राभेदकृतैस्तु सः ।
कनीयान्मध्यमो ज्येष्ठः प्राणायामः प्रकीर्तितः ॥ ६ ॥
प्रत्याहारं ततः कुर्याच्चित्तसंयमनं तु सः ।
बुद्धिर्मनस्त्वहङ्कारस्त्रिभिश्चित्तं प्रकीर्तितम् ॥ ७ ॥

तथापि मनसः कुर्यात्प्रत्याहारं प्रयत्नतः ।
मनश्चतुर्विधं प्रोक्तं प्रत्याहारेण निर्जितम् ॥ ८ ॥
तिष्ठते लक्ष्यमार्गे तु अ(ना?)न्यथा तु कदाचन ।
ध्यानं लक्ष्यस्य निष्पत्तिश्चिन्तनं तत्प्रकीर्तितम् ॥ ९ ॥
धारणा तु ततो धार्या शीतदाहापनुत्तये ।
पञ्चधा पूर्ववत्सा तु प्रतिमन्त्रव्यवस्थया ॥ १० ॥
जपं निमीलिताक्षेण कुर्यान्मन्त्रं तु वाचकम् ।
वाच्यस्य प्रतिपत्त्यर्थं पिण्डबीजपदात्मकम् ॥ ११ ॥
त्रिविधं वै समुद्दिष्टं प्रागुक्तविधिभावितम् ।
योगोऽपि त्रिविधः प्रोक्तस्तं च कार्त्स्न्येन मे शृणु ॥ १२ ॥
प्राकृतं पौरुषं चैव ऐश्वर्यं च तृतीयकम् ।
ऊहस्तु कीर्त्यते तर्कस्तच्च सिद्धिविचारकम् ॥ १३ ॥
समाधिस्त्वात्मलाभः स्यादात्मजः परिकीर्तितः
स तु लक्ष्यं परित्यज्य मन्त्रोच्चारणवर्जितम् ॥ १४ ॥
सदा विभज्यते ब्रह्मन् कलांशविधिवर्जितम् ।
समाधौ परिनिष्पन्ने परमाप्नोति पूरुषम् ॥ १५ ॥
प्राणायामादितो यावत्समाध्यन्तं प्रकीर्तितम् ।
द्विगुणं त्रिगुणं चैव मात्राभेदेन संस्थितम् ॥ १६ ॥
योगासनस्थः कुर्वीत विधिमेव यथोदितम् ।
योगासनानि चत्वारि योगपट्टेन बन्धयेत् ॥ १७ ॥
पर्यङ्कं कमलं वाऽपि भद्रं वा स्वस्तिकं दृढम् ।
एषामेकतमे स्थित्वा ऋजुकायोर्ध्वतः क्रमात् ॥ १८ ॥
स्पष्टाङ्गसन्धिः कुर्वीत विस्तीर्णोरुः स(सु?)कन्धरः ।
बाहू परिसमौ कृत्वा किञ्चिदाकुञ्चयेच्छिरः ॥ १९ ॥
नाभौ जघनमध्ये वा हस्तौ कच्छपसंस्थितौ ।
सव्यस्य चोपरिस्थं तु वामे सव्यमथापि वा ॥ २० ॥
उत्तानौ तु करौ कृत्वा कच्छपीतां (?) नियोजयेत् ।
ग्रीवां तु बिभृयाद्यत्नान्नातिस्तब्धां न कुंचिताम् ॥ २१ ॥
किञ्चिन्निमीलयेन्नेत्रे नासाग्रमवलोकयेत् ।
समुद्गवत्पिधायास्यं दन्तैर्दन्तानसंस्पृशन् ॥ २२ ॥

सगर्भं योगमातिष्ठेन्निर्गर्भं वा सुयन्त्रितः ।
ततः प्रमथयेद्वायुं प्राणाख्यं चित्तसंयुतम् ॥ २३ ॥
रेचकादिचतुर्भेदैः प्राणायामः प्रकीर्तितः ।
चित्तं जयेत्सदा यत्नाद्दुर्जयं देवदानवैः ॥ २४ ॥
यद्यप्यभ्यासवैराग्यैश्चित्तं संयम्यते बलात् ।
तथापि यत्नादातिष्ठेत्पूर्वाधीनं तु वर्जयेत् ॥ २५ ॥
द्विविधास्ते तु विज्ञेयास्सन्निकृष्टा मनोगताः ।
सन्निकृष्टाः स्थानगताश्चित्तोपा(श्चैत्ता वा ?)सनया कृताः ॥ २६ ॥
न दंशमशकाकीर्णे निश्शब्दे गन्धवर्जिते ।
निमीलिताक्षस्सन्तिष्ठेत्सर्वेन्द्रियविवर्जितः ॥ २७ ॥
एवं परित्यजेत्सर्वानुपाधीन्सन्निकर्षजान् ।
वासनोत्थांश्च विविधान्सम्यग्लक्ष्यं समास्थितः ॥ २८ ॥
प्रत्याहरेत् सदा चित्तं विक्षिप्तं सर्ववस्तुषु ।
तामसं तत्तु बोद्धव्यं चित्तं सर्वत्रगं सदा ॥ २९ ॥
गतं रागादितो ज्ञेयमभ्यासाद्राजसं तु तत् ।
सात्विकं कथ्यते चित्तं संश्लिष्टं लक्ष्यगोचरे ॥ ३० ॥
संलीनं च ततो ज्ञेयं गुणातीतं तपोधन ।
ध्यानमेवंविधं कुर्यात्सगर्भं प्राणनिग्रहे ॥ ३१ ॥
उच्यते च ततो भूयस्त्रिविधं योगिनां हितम् ।
सकलं निष्कलं विष्णुं तृतीयं पररूपिणम् ॥ ३२ ॥
अन्यत्र त्रिविधं ज्ञेयं शब्दं व्योम सविग्रहम् ।
विग्रहं देवरूपस्य लक्ष्यरूपं विचिन्तयेत् ॥ ३३ ॥
ध्यानमेवं समुद्दिष्टं यावद्व्योमान्तिमं भवेत् ।
तावच्च भावयेल्लक्ष्यं यावल्लक्ष्यं न भावयेत् ॥ ३४ ॥
भावे ह्यभावमापन्ने स्वस्वभावः परः स्मृतः ।
स्थूलं पूर्वं समभ्यस्येत्ततः सूक्ष्मं ततः परम् ॥ ३५ ॥
एवं विलीयते चित्तं लक्ष्यं चोपाधिभिस्सह ।
विग्रहं देवदेवस्य ध्यायेद्धृत्पद्मगोचरे ॥ ३६ ॥
ततोऽन्यच्चिन्तयेल्लक्ष्यं स्थूलं सूक्ष्मं ततः परम् ।
एवमभ्यस्यमानस्य गुणोत्कर्षः प्रजायते ॥ ३७ ॥

चन्द्रार्काग्निमयं बिम्बं रविमण्डलसन्निभम् ।
शुक्लरूपधरश्चापि गुणोत्कर्षप्रदायकम् ॥ ३८ ॥
ततः सूक्ष्मतरं बिन्दुं राजमुद्गसमप्रभम् ।
तं विद्यात्सर्वमन्त्राणामूर्ध्वमाक्रम्य तिष्ठति ॥ ३९ ॥
ततस्तु राजकाबीजप्रमाणं चिन्तयेत्क्रमात् ।
उत्पादकमथास्यापि यस्यान्ते नादमाश्रितः ॥ ४० ॥
तं विलीय समुत्पन्नमश्ववालप्रमाणकम् ।
यस्सदा गच्छति व्योम्नि मनश्चागच्छते हृदि ॥ ४१ ॥
ततो विचिन्तयेत्सूक्ष्मं शिरोवालप्रमाणकम् ।
ब्रह्मनाडीमनेनाशु पश्यन्ति ध्यानसेचनात् ॥ ४२ ॥
ततोऽङ्गरोमप्रमात्रं तु बिसवालसमं ततः ।
ध्यायेन्नियममास्थाय ब्रह्मनाडीप्रकाशकम् ॥ ४३ ॥
तदा सा दृश्यते नाडी सादृश्यरहिता परा ।
तया यायात्परं स्थानं ब्रह्मरन्ध्रपथेन तु ॥ ४४ ॥
एवं तु निष्कलं ध्यायेत्सोऽपि लीनः परे पदे ।
परं त्वभ्यसमानस्य उन्मनस्त्वं प्रजायते ॥ ४५ ॥
ततस्तु व्यज्यते सत्ता स्वकीया ब्रह्मरूपिणी ।
शब्दरूपं [1]तु वा ध्यायेदेवं सकलनिष्कलम् ॥ ४६ ॥
नारायणात्मकं मन्त्रं प्रणवादिनमोन्तकम् ।
ध्यायेच्छब्दमयो ह्येष सकलः परमेश्वरः ॥ ४७ ॥
निष्कलं वर्णमेकं तु क्षौं ह्रीं(?)वाऽपि चिन्तयेत् ।
ततोऽपि निष्कलं बिन्दुं तन्मूर्धस्थं त्रिदैवतम् ॥ ४८ ॥
सा शक्तिस्तत उत्पन्ना प्रमाणार्धप्रमाणका ।
सा शक्तिर्लीयते नादे नादो याति लयं परे ॥ ४९ ॥
एवं हि ध्यानयोगेन परं पश्यन्ति शाश्वतम् ।
अथ वाऽऽलोकशब्दौ हि प्रथयित्वा विचिन्तयेत् ॥ ५० ॥
स्वयं विलीनो यत्रैव तत्रैव परमं पदम् ।

1 नवा C L नवा S

अथवा व्योमरूपं तु ध्येयं तत्त्वं सनातनम् ॥ ५१ ॥
बाह्यान्तस्थं शिखातीतं त्रिव्योमं चिन्तयेत्सदा ।
मुख्येऽन्तस्थं परं ध्यात्वा न भूयो भवभाक्भवेत् ॥ ५२ ॥
एवं ध्यात्वा भवेन्मुक्तिर्मुक्तिस्तु सकले स्थिता ।
सकलो देवदेवस्य विग्रहो विष्णुरूपिणः ॥ ५३ ॥
शङ्खपद्मधरो देवो गदापद्मविभूषितः ।
चतुर्भुजश्चतुर्मूर्तिश्चतुर्वक्त्रः सुलोचनः ॥ ५४ ॥
लक्ष्मीवक्षाः खगारूढः सर्वरत्नोपशोभितः ।
कृष्णस्सुरोत्तमो विष्णुर्जिष्णुस्सर्वत्रगो हरिः ॥ ५५ ॥
हलहेतिर्हयग्रीवो [1]हरिरूपधरः प्रभुः ।
नृहरी क्रोडरूपी च शक्त्यङ्गश्च महेश्वरः ॥ ५६ ॥
एवमास्थाय[2] नियमं पिण्डतत्त्वं परित्यजेत् ।
परिज्ञाय पुरा पिण्डं(ण्ड?)पाक(त ?)लक्षणमुत्तमम् ॥ ५७ ॥
निरुद्धं सन्धिमार्गं तु कृत्वा देहसमीरणम् ।
मुक्त्वा सद्ब्रह्मरन्ध्रेणोत्क्रान्तिकरणेन तु ॥ ५८ ॥
ध्यात्वा परित्यजेद्देहं नित्याभ्यासरतो यदि ।
स ब्रह्मपरमभ्येति वासुदेवाख्यमव्ययम् ॥ ५९ ॥

नारदः—

भगवन् श्रोतुमिच्छामि एतत्संक्षेपतस्त्वहम् ।
लक्षणं देहपातस्य वायोर्गतिनिरोधनम् ॥ ६० ॥

श्रीभगवान्—

युक्ताहारविहारस्य क्रियासक्तस्य नारद ।
युक्तस्वप्नावबोधस्य समधातोः सदैव हि ॥ ६१ ॥
निर्वर्तते सदाशब्दो हृद्गतो दुन्दुभिस्स्वनः ।
[3]सृजच्छीतातपे काले न जानात्युष्णशीतलौ ॥ ६२ ॥
ध्यात्वा ज्योतिर्भ्रुवोर्मध्ये द्वादशान्तेऽथ नारद ।
प्रत्य (स्त)मेति वै [4]शब्दो न चोदेत्यथवा मुने ॥ ६३ ॥

---

1 हर V CL बल A 2 ध्याय A 3 स्पर्शोऽग्निनाऽतपे A 4 शीघ्र A

न जानाति समाधिस्थो ह्लादमाब्जं यदान्तरे ।
परिशुष्यति गात्रस्थं शोणितं श्लेष्मलक्षणम् ॥ ६४ ॥
न वेत्ति पार्थिवं गन्धं स बाह्याभ्यन्तरे यदा ।
पिण्डपातस्तदा विप्र बोद्धव्यो न चिरेण तु ॥ ६५ ॥
पार्थिव्यां संस्थितश्चैव धारणायां समाहितः ।
न वेत्ति शब्दं प्रागुक्तं पश्चाहात्पञ्चमे क्षणे ॥ ६६ ॥
स्थितस्समाधौ वाऽप्येतौ शीतोष्णौ नानुविन्दति ।
पतेद्दिनचतुष्केण पिण्डस्तत्कलिते क्षणे ॥ ६७ ॥
रूपध्यानं समासाद्य पूर्वोक्तविधिना यदि ।
न भाति हृदयाकाशे बहिर्वा ज्योतिषां पतिः ॥ ६८ ॥
पिण्डपातो ह्यवश्यं स्यात्तृतीयेऽह्नि तथा क्षणे ।
समाधौ यदि वायव्ये योगी नारद वर्तते ॥ ६९ ॥
न वेत्ति परमाह्लादं तृषितः परिकम्पते ।
दिनद्वयेन पिण्डस्य पातः स्याद्वितये क्षणे ॥ ७० ॥
स्थितो [1]गगनभावे तु प्रागुक्तविधिना यदि ।
न वेत्ति विविधं गन्धमन्तर्बाह्ये शुभाशुभम् ॥ ७१ ॥
तत्रैवास्य दिने पातः क्षणे प्रथमलक्षणे ।
ध्यात्वैवं मुनिशार्दूल योगी ध्यानैकमानसः ॥ ७२ ॥
स्वयमुत्क्रमते पिण्डाद्यायाद्ब्रह्मनिकेतनम् ।
प्रविशेत्पिण्डमन्यं वा प्राग्वत्सन्धानयोजितः ॥ ७३ ॥
कालो यद्देहपातस्य लक्षणेन समासतः ।
कथितः सारभूतस्य वायोस्संरोध उच्यते ॥ ७४ ॥
सगर्भं हृदयावासादुद्धृत्य कतलावधि ।
अप्रमेयविहीनं तु विकरालं नियोजयेत् ॥ ७५ ॥
प्रधानं कण्ठकूपे तु न याति हृदयं पुनः ।
स्मरेद्द्विजन्मपुटके(?)प्रधानं व्यापकोज्झितम् ॥ ७६ ॥
पन्धानं [2]नन्द्............येत्प्रन थमवर्जितम् ।
रोधमार्गद्वयस्यैवं दद्यात्सव्येतरस्य तु ॥ ७७ ॥

---

1 भगन A 2 दन्तकोटिस्थं A

नेत्रनासाननाख्यस्य ततश्चाव्यक्तभास्वरम् ।
मन्त्रान्ते केवलं वाऽथ वषड् ध्यायेत्खरन्ध्रगम् ॥ ७८ ॥
प्राक्रमेत्परमात्मानं त्यक्त्वा पिण्डमिमं मुने ।
परिपक्कसमानं च आश्रयेच्छाश्वतं पदम् ॥ ७९ ॥
इत्येतत्कथितं सर्वं पंचरात्रार्थमुत्तमम् ।
सर्वस्वमिव विप्रेन्द्र रक्षणीयं प्रयत्नतः ॥ ८० ॥
सर्वोत्तमा संहितैषा सर्वविज्ञानदीपिका ।
नाख्येया दुष्टबुद्धीनां नराणां कलुषात्मनाम् ॥ ८१ ॥
मत्सराणामभक्तानां शठानां छद्मचारिणाम् ।
गर्वान्मे शास्त्रसद्वस्तुनिन्दकानां विशेषतः ॥ ८२ ॥
मद्भक्तदूषकाणां च शुष्कतर्करतात्मनाम् ।
शास्त्रापकर्तॄणामन्यदर्शने भावितात्मनाम् ॥ ८३ ॥
देयं विविक्तबुद्धीनां स्वधर्मनिरतात्मनाम् ।
संसारभयभीतानां मद्भक्तिनिरतात्मनाम् ॥ ८४ ॥
मच्छासनप्रपन्नानां ये पश्यन्ति सदा मुने ।
मद्भाविनो मत्समयाद्दृष्ट्या चातिविशुद्धया ॥ ८५ ॥
तेषां वाच्यमिदं शास्त्रं दीक्षां कृत्वा यथाविधि ।
प्रदर्श्य मन्त्रसंघं वा पूजितं मण्डलं पुरा ॥ ८६ ॥
शास्त्रार्थमनुवक्तव्यं शास्त्रमादौ प्रपूज्य च ।
येनाशु विविधा सिद्धिर्द्वयोर्भवति शाश्वती ॥ ८७ ॥

इति श्रीपाञ्चरात्रे जयाख्यसहितायां योगाख्यानं नाम त्रयस्त्रिंशः पटलः ।

समाप्तेयं जयाख्यसहिता ।

# वर्णसंज्ञानुक्रमणी.

| | |
|---|---|
| ताललक्ष्मा | त |
| तृप्तिः | स |
| तेजस्वी | घ |
| त्रैलोक्यैश्वर्यदः | — |
| त्र्यश्रः | ए |
| दण्डधारः | ङ |
| दत्तावकाशः | द |
| दमनः | द |
| दीप्तिमान् | घ |
| दीर्घघोणः | ॡ |
| देवदत्तः | ॡ |
| धन्वी | थ |
| धरेशः | ळ |
| धर्ता | ध |
| धाराधरः | ठ |
| ध्रुवः | भ |
| नरः | न |
| नारायणः | न |
| नृसिंहः | ष |
| नेमिः | ठ |
| पञ्चबिन्दुः | ई |
| पद्मनाभः | प |
| पन्थाः | न |
| परमात्मा | ह |
| परमेश्वरः | : |
| पवित्रः | प |
| पश्चिमाननः | प |
| पुण्डरीकः | श |
| पुरुषेश्वरः | ळ |
| पूर्णाङ्गः | ब |
| प्रकृतिः (परा) | क |
| प्रज्ञाधारः | ऊ |
| प्रतर्दनः | ढ |
| प्रथमः (प्रभवः) | अ |
| प्रधानः | म |
| प्रसारणम् | ऋ |
| प्राणः | ह |
| फुल्लनयनः | फ |
| भगवान् | ळ |
| भल्लायुधः | भ |
| भास्करः | ष |
| भुवनपालः | थ |
| भुवनः (भुवनेशः) | उ |
| भूतात्मा | ङ |
| भूधरः | औ |
| मर्द(द)नः | म |
| माधवः | ध |
| माया | ई |
| मौसलः | ङ |
| योगविधाता | ऐ |
| रामः | इ |
| लाङ्गली | फ |
| लिङ्गात्मा | ळ |
| लोकेशः | ऊ |
| वरुणः | व |
| वर्गान्तः | क्ष |
| वामनः | ब |
| वाराहः | व |
| विक्रमी | ओ |
| विबुधः | ळ |

# GENERAL INDEX.

# संज्ञाशब्दादीनामनुक्रमणिका.

म



म

## स

# शुद्धिपत्रम्

| | |
|---|---|
| प्रभविष्णुना | ४–२४ |
| जयाख्यं | ७–१२ |
| अर्धमण्डप | १६–२२ |
| मानर्चंतु | १८–२० |
| अमेयमहिमा | २१–२२ |
| विद्यामया | २४—५ |
| ईदृक्प्रकाराः | २४–३० |
| सत्यजा | २८–१८ |
| मन्त्ररूपाया मूर्तेर्भोगमोक्षहेतुत्वो-पपादनम् | ३०—५ |
| तपोमयाभ्यां | ३०–११ |
| दोषाणां | ३०–११ |
| जीवात्मनो निरू | ३२–२२ |
| मातृकाचक्रोद्धार | ४३—९ |
| विष्णुर्माया | ४३–२८ |
| स ऐरावण | ४४—७ |
| अःकारः प | ४४–११ |
| द्विरक्षरं पद | ४८–१२ |
| ह्रीं क्रीं स्वाहा | ४८–२१ |
| श्रिताये | ४९—५ |
| तदनु जगद्योन्या | ४९–२० |
| परं तस्यावसान | ४९–२९ |
| मर्दनेनो | ५०—२ |
| वषडन्तश्च | ५०–१३ |
| वच्म्यस्य मूर्तिमन्त्रं तु | ५०–१८ |
| अजितं चामृताधारसंस्थितं | ५१—२ |
| क्षरसमन्वितं | ५१–१७ |
| अथ वक्त्रेषु ये मन्त्रा देवदेवस्य नारद । स्थिता नृसिंह | ५१–१९ |
| विश्वाप्यायियुताद्विप्र | ५१–२२ |
| तथाह्लादो | ५१–२७ |
| चान्द्री व्योम | ५२—६ |
| औंकारा | ५२–२० |
| अंकारे | ५३—३ |
| युतमूर्जे | ५३—३ |
| क्रमात्कुर्या | ५३–२६ |
| त्रैलोक्यैश्वर्यदायेन | ५४–२१ |
| पञ्चदशाक्षरः | ५५—५ |
| मान्त्रं पर | ५७—९ |
| यत्र सर्वं | ५७–१६ |
| ब्रह्मप्राप्तौ | ५९–२६ |
| व्योम तदूर्ध्वतः | ६०–१६ |
| व्योमानन्द | ६१—४ |
| यच्छक्त्यन्त | ६१–२३ |
| ख्यश्च नारद | ६१–२७ |
| सत्यज्वाला | ६१–२९ |
| क्षेत्रावनौ | ६२–१९ |
| भुवनाधारे | ६२–२४ |
| मायामस्यो | ६२–२५ |
| दशाक्षरो | ६३–१८ |
| हुं वषट् | ६३–२३ |
| पूर्वाद्या | ६४–१२ |
| सास्त्राणां | ६५–१६ |
| बीजोऽय | ६५–२४ |
| द्वाभ्यामधो | ६५–२५ |
| व्यापिना च तथा | ६६—२ |
| वेदान्मानमधो | ६६—६ |
| शान्ताख्य वरुण | ६६–१६ |
| काम्यया | ६७–१६ |
| विक्रमि | ६७–२६ |
| प्रथमं विश्व | ६८—९ |
| आस्तिकानां च | ६९—७ |
| देवस्य | ७०–२२ |
| संलग्नौ | ७१–१७ |
| कापिली | ७२—३ |
| नामिका | ७६–३० |
| विघ्नकर्म | ७८–२८ |
| समाकारौ | ७९—६ |

| | | | |
|---|---|---|---|
| नियोजयेत्त | ८०—७ | वीथिविस्तारात् | १०९—२० |
| तिलानस्त्रा | ८०—२३ | विभुः | ११०—१३ |
| तीरमासाद्य | ८३—१३ | लक्ष्म्याद्याः | १११—३ |
| तदन्तगः | ८६—२५ | ततस्तनुत्र | ११५—२५ |
| लापनप्रकारा. | ८७—८ | विभुं | ११७—१६ |
| विलापनम् | ८७—१५ | यत्किञ्चिन्मा | १२०—१८ |
| विलापनम् | ८७—२४ | भगवद्ध | १२४—२६ |
| विलापनम् | ८८—७ | मोक्षकामार्थ | १२५—१७ |
| तन्मान्त्रं | ८८—१३ | पुष्पैर्दोष | १२६—१३ |
| विलापनम् | ८८—२० | सन्धये | १२८—१ |
| विलापनम् | ८९—६ | तीव्र | १२८—५ |
| शब्दमात्रम | ८९—१४ | गृहीत्वा | १२८—२८ |
| व्योमाख्यविम | ८९—१७ | यदैक्य तज्जपो | १३०—२४ |
| विलयास्पद | ८९—२१ | ग्रन्थिरूप | १३१—४ |
| मारूपं नाडि | ९०—१६ | तर्पितो | १३३—११ |
| व्योम तस्यो | ९१—७ | मेखलामाना | १३४—२५ |
| दीप्रकद्वित | ९१—१८ | योन्योष्ठनिःसृत | १३५—१ |
| क्षीरार्णवाकार | ९१—१९ | प्रोक्षित परि | १३६—१३ |
| तदूर्ध्वं | ९१—२३ | मध ऊर्ध्वे॰ | १३८—१२ |
| स्वपिण्डं | ९२—५ | समिधो | १३८—२५ |
| यावद्धौतं | ९२—२२ | विष्णुं मूलेन | १३९—९ |
| ततस्स्वमन्त्रं | ९२—२५ | शतप्रभम् | १४२—१६ |
| क्रमेणैवा | ९५—२७ | नमस्कारावसा | १४४—२३ |
| शीर्षे च | ९५—२८ | ततोऽस्त्रकलशं | १४५—२७ |
| विकाराश्च | ९९—२४ | वर्णेन | १४९—१५ |
| प्रभाविशेषः | १००—२ | लेलिहानेऽग्नौ | १४९—२३ |
| विदिक्ष्वङ्गानि | १०३—१८ | मार्गेण | १५१—२९ |
| हृत्पद्म | १०४—२२ | दिग्विदिक्षु | १६१—२२ |
| प्रक्जलौ | १०५—९ | सकलं निष्कलं परम् | १६४—४ |
| च्छब्द | १०५—२५ | साकार. सकलः | १६४—६ |
| त्परिवृतम् | १०५—२७ | मन्त्रमूर्ते | १६४—१७ |
| प्रापौघ | १०६—२० | भगवानेवं | १६४—२१ |
| वर्णरसा | १०८—६ | निर्मूल का | १६६—२ |
| द्विदलस्थेन | १०८—२८ | त्पृथग्रूप | १६६—२७ |
| विदिक्ष्वन्या | १०९—५ | सुवं | १६७—२६ |
| कमलक्षेत्रं | १०९—७ | बस्तिदेशे | १६८—१७ |
| ज्वालार्घ्यो | १०९—१५ | तत्त्वसंज्ञ | १६८—२५ |
| वीथिकाः | १०९—१९ | त्रेधा नवधा | १६९—३ |

| | | | |
|---|---|---|---|
| यदा मन्तार | १७३–१३ | सकृज्जपन् | २३५–१९ |
| च्छमं | १७५–२३ | नयेच्छीघ्रं | २३६—७ |
| लक्ष्म्याख्येन | १७६–२१ | सन्धारका | २३६–१५ |
| त्र्यक्षरेण तु | १७७–१७ | वहुशो वहुभोजनम् | २३६–२४ |
| निष्कलं तथा | १७७–१८ | तारसमन्वितम् | २३८–२४ |
| देशः | १७९—३ | श्चाभिषेकाद्यैः | २४८—७ |
| प्रक्षाल्य | १८२–२२ | बैखानसा | २४९—९ |
| साधये | १८५–२९ | त्रयाणा यः | २४९–१० |
| तद्व्याप्ति | १८७–१४ | तापम् | २५१–१३ |
| मन्त्रविद्वीरो | १८७–१६ | शास्त्रपीठ | २५२—६ |
| एकेना | १९०–१९ | भक्ताना | २५२—८ |
| व्यजनं | १९२—३ | मासक्ताः | २५२–१७ |
| मन्त्रेश्वरं | १९२–२७ | नाम्नाऽभिगमनं | २५३–२८ |
| ध्यात्वा | १९३–११ | भगवद्भक्तैः | २५४–१५ |
| लक्ष्य | १९३–२९ | नस्रवारिणा | २५५–२० |
| प्रोच्छ्रायं | १९९–१४ | हृदय | २५६–२५ |
| चतुरश्राय | २०४—६ | मन्त्रं तु | २७४–१६ |
| विततच्छदं | २०५–१४ | शिखाबन्ध | २८९–२५ |
| कमलोच्छ्रितम् | २०५–१५ | द्रोमयेन | २९०—६ |
| स्योर्ध्वभागे | २०८—६ | प्राप्नुया | २९१—१ |
| द्वारोच्छ्राय | २०८–१५ | शङ्खस्याधो | २९७—६ |
| हेमतोयेन | २१०–१४ | हृदयेनैवोप | २९९–१६ |
| पद्मे | २१५—८ | तन्मन्त्र हृद | २९९–१८ |
| पानकैर्हृद्यै | २१८–१४ | अनन्तासन | ३०३–२० |
| द्रुरुः | २२०–१० | कीर्ते· | ३०३–२७ |
| मधोक्षज | २२०–१३ | आग्नेयाद्ये | ३२९—२ |
| गृहीत्वा | २२६—७ | सबोध | ३३३–१४ |
| गर्भितेषु | २२८–११ | क्रमान्मुने | ३५६–१३ |
| वीथीनां | २२९–१७ | च श्रुतम् | ३५६–२२ |
| घण्टाया | २३२—१ | मत्समया दृष्ट्या | ३६५–१६ |
| कुटुम्बि | २३२—५ | | |

५८ पत्रे ८ पङ्क्तौ 'मन्त्रसृष्टिक्रमविवेचन' मित्येतत् । १४४ पत्रे १९ पङ्क्तौ 'प्राशन'-मित्येतत् । १४४ पत्रे ३१ पङ्क्तौ हिरण्येत्यस्यार्थस्येत्यादि टिपणवाक्यं च प्रामादिकम् । ९१ पत्रे १६ पङ्क्तौ वर्तमानस्य 'अथापूर्वतेजोमयशरीरसृष्टिभावनाक्रमः' इत्यस्य ७९ श्लोकतः पश्चात्पाठः कार्यः। १३० पत्रे २३ पङ्क्तौ वर्तमानस्य 'जपसङ्ख्याविधान' मित्यस्य ६९ श्लोकतः पश्चात्पाठ· कार्य २३ ।

# जयाख्यसंहितास्थश्लोकानां अकाराद्यनुक्रमणिका.

त

## म

य

शा

ष

## 1931

# GAEKWAD'S ORIENTAL SERIES



**Critical editions of unprinted and original works of Oriental Literature, edited by competent scholars, and published by the Oriental Institute, Baroda**

I BOOKS PUBLISHED.

| | | Rs A |
|---|---|---|
| 1 | **Kāvyamīmāmsā** a work on poetics, by Rājaśekhara (880–920 A D ) edited by C D Dalal and R Anantakrishna Sastry, 1916 Reissue, 1924 | 2–4 |

*This book has been set as a text-book by several Universities including Benares, Bombay, and Patna Universities*

| | | |
|---|---|---|
| 2 | **Naranārāyanānanda:** a poem on the Paurānic story of Arjuna and Kṛṣna's rambles on Mount Girnar, by Vastupāla, Minister of King Vīradhavala of Dholka, composed between Samvat 1277 and 1287, i e , A D 1221 and 1231 edited by C D Dalal and R Anantakrishna Sastry, 1916 | *Out of print* |
| 3 | **Tarkasangraha.** a work on Philosophy (refutation of Vaiśesika theory of atomic creation) by Ānandajñāna or Ānandagiri, the famous commentators on Sankarācārya's Bhāṣyas, who flourished in the latter half of the 13th century edited by T M Tripathi, 1917 | *Out of print* |
| 4 | **Pārthaparākrama:** a drama describing Arjuna's recovery of the cows of King Virāta, by Prahlādanadeva, the founder of Palanpur and the younger brother of the Paramāra king of Chandrāvatī (a state in Mārwār), and a feudatory of the kings of Guzerat, who was a Yuvarāja in Samvat 1220 or A D 1164 edited by C D Dalal, 1917 | 0–6 |
| 5 | **Rāstraudhavamsa.** an historical poem (Mahākāvya) describing the history of the Bāgulas of Mayūragiri, from Rāstraudha, king of Kanauj and the originator of the dynasty, to Nārāyana Shāh of Mayūragiri by Rudra Kavi, composed in S'aka 1518 or A D 1596 edited by Pandit Embar Krishnamacharya with Introduction by C D Dalal, 1917 | 1–12 |
| 6 | **Lingānusāsana:** on Grammar, by Vāmana, who lived between the last quarter of the 8th century and the first quarter of the 9th century edited by C D Dalal, 1918 | 0–8 |
| 7 | **Vasantavilāsa·** an historical poem (Mahākāvya) describing the life of Vastupāla and the history of | |

Rs A

Guzerat, by Bālachandrasūri (from Modheraka or Modhera in Kadi Prant, Baroda State), contemporary of Vastupāla, composed after his death for his son in Samvat 1296 (A D 1240) edited by C D Dalal, 1917 — 1–8

8 **Rūpakasatkam** six dramas by Vatsarāja, minister of Paramardideva of Kalinjara, who lived between the 2nd half of the 12th and the 1st quarter of 13th century edited by C D Dalal, 1918 — 2–4

9 **Mohaparājaya** an allegorical drama describing the overcoming of King Moha (Temptation), or the conversion of Kumārapāla, the Chalukya King of Guzerat, to Jainism, by Yaśahpāla, an officer of King Ajayadeva, son of Kumārapāla, who reigned from A D 1229 to 1232 edited by Muni Chaturvijayaji with Introduction and Appendices by C D Dalal, 1918 — 2–0

10 **Hammīramadamardana** . a drama glorifying the two brothers, Vastupāla and Tejahpāla, and their King Viradhavala of Dholka, by Jayasimhasūri, pupil of Vīrasūri, and an Ācārya of the temple of Munisuvrata at Broach, composed between Samvat 1276 and 1286 or A D 1220 and 1239 edited by C D Dalal, 1920 — 2–0

11 **Udayasundarīkathā** . a romance (Campū, in prose and poetry) by Soddhala, a contemporary of and patronised by the three brothers, Chchittarāja, Nāgārjuna, and Mummunirāja, successive rulers of Konkan, composed between A D 1026 and 1050 edited by C D Dalal and Pandit Embar Krishnamacharya, 1920 — 2–4

12 **Mahāvidyāvidambana** : a work on Nyāya Philosophy, by Bhatta Vādīndra who lived about A D 1210 to 1274 edited by M R Telang, 1920 — 2–8

13 **Prācīnagurjarakāvysangraha** : a collecton of old Guzerati poems dating from 12th to 15th centuries A D edited by C D Dalal, 1920 . — 2–4

14 **Kumārapālapratibodha** . a biographical work in Prākrta, by Somaprabhāchārya, composed in Samvat 1241 or A D 1195 edited by Muni Jinavijayaji, 1920 — 7–8

15 **Ganakārikā** . a work on Philosophy (Pāśupata School) by Bhāsarvajña who lived in the 2nd half of the 10th century edited by C D Dalal, 1921 — 1–4

16 **Sangītamakaranda** : a work on Music by Nārada edited by M R Telang, 1920 — 2–0

17 **Kavīndrācārya List** list of Sanskrit works in the collection of Kavīndrācārya, a Benares Pandit (1656 A D ) edited by R Anantakrishna Shastry, with a foreword by Dr Ganganatha Jha, 1921 — 0–12

18 **Vārāhagrhyasūtra** Vedic ritual (domestic) of the Yajurveda edited by Dr R Shamasastry, 1920 — 0–10

19 **Lekhapaddhati** : a collection of models of state and private documents, dating from 8th to 15th centuries A D..

Rs A.

edited by C D Dalal and G K Shrigondekar, 1925 . 2–0

20 **Bhavisayattakahā or Pañcamīkahā :** a romance in Apabhramśa language by Dhanapāla (*circa* 12th century) edited by C D Dalal and Dr P D Gune, 1923 6–0

21 **A Descriptive Catalogue of the Palm-leaf and Important Paper MSS. in the Bhandars at Jessalmere,** compiled by C D Dalal and edited by Pandit L B Gandhi, 1923 3–4

22 **Paraśurāmakalpasūtra** · a work on Tantra, with commentary by Rāmeśvara edited by A Mahadeva Sastry, B A , 1923 *Out of print*

23 **Nityotsava** a supplement to the Paraśurāmakalpasūtra by Umānandanātha edited by A Mahadeva Sastry, B A , 1923 Second revised edition by Swami Tirvikrama Tirtha, 1930 . 5–0

24 **Tantrarahasya** a work on the Prābhākara School of Pūrvamīmāmsā by Rāmānujācārya edited by Dr R Shamasastry, 1923 1–8

25, 32 **Samarāngana** a work on architecture, town-planning, and engineering, by king Bhoja of Dhara (11th century) edited by Mahamahopadhyaya T Ganapati Shastri, Ph D Illustrated 2 vols , 1924–1925 10–0

26, 41 **Sādhanamālā** a Buddhist Tāntric text of rituals, dated 1165 A D , consisting of 312 small works, composed by distinguished writers edited by Benoytosh Bhattacharyya, M A , Ph D Illustrated 2 vols , 1925–1928 . 14–0

27 **A Descriptive Catalogue of MSS in the Central Library, Baroda** Vol 1 (Veda, Vedalaksana, and Upanisads), compiled by G K Shrigondekar, M A , and K S Ramaswami Shastri, with a Preface by B Bhattacharyya, Ph D , 1925 6–0

28 **Mānasollāsa or Abhilasitārthacintāmani :** an encyclopædic work treating of one hundred different topics connected with the Royal household and the Royal court by Someśvaradeva, a Chalukya king of the 12th century edited by G K Shrigondekar, M A , 3 vols , vol 1, 1925 2–12

29 **Nalavilāsa** . a drama by Rāmachandrasūri, pupil of Hemachandrasūri, describing the Paurānika story of Nala and Damayantī edited by G K Shrigondekar, M A , and L B Gandhi, 1926 2–4

30, 31 **Tattvasangraha** · a Buddhist philosophical work of the 8th century by Sāntaraksita, a Professor at Nālandā with Pañjikā (commentary) by his disciple Kamalaśīla, also a Professor at Nālandā edited by Pandit Embar Krishnamāchārya with a Foreword in English by B Bhattacharyya, M A , Ph D , 2 vols , 1926 24–0

Rs A

33, 34 **Mirat-i-Ahmadi**: By Ali Mahammad Khan the last Moghul Dewan of Gujarat edited in the original Persian by Syed Nawabali, M A, Professor of Persian, Baroda College, 2 vols, illustrated, 1926–1928 — 19–8

35 **Mānavagṛhyasūtra**. a work on Vedic ritual (domestic) of the Yajurveda with the Bhāṣya of Aṣṭāvakra edited with an introduction in Sanskrit by Pandit Rāmakrishna Harshaji Śāstri, with a Preface by Prof B C Lele, 1926 — 5–0

36 **Nāṭyaśāstra**: of Bharata with the commentary of Abhinavagupta of Kashmir edited by M Ramakrishna Kavi, M A, 4 vols, vol I, illustrated, 1926 — 6–0

37 **Apabhraṁśakāvyatrayī**: consisting of three works, the Carcarī, Upadeśarasāyana, and Kālasvarūpakulaka, by Jinadatta Sūri (12th century) with commentaries edited with an elaborate introduction in Sanskrit by L B Gandhi, 1927 — 4–0

38 **Nyāyapraveśa**, Part I (Sanskrit Text) on Buddhist Logic of Dinnāga, with commentaries of Haribhadra Sūri and Pārśvadeva edited by Principal A B Dhruva, M A, LL B, Pro-Vice-Chancellor, Hindu University, Benares, 1930 — 4–0

39 **Nyāyapraveśa**, Part II (Tibetan Text) edited with introduction, notes, appendices, etc, by Pandit Vidhusekhara Bhattacharyya, Principal, Vidyabhavana, Visvabharati, 1927 — 1–8

40 **Advayavajrasangraha** consisting of twenty short works on Buddhist philosophy by Advayavajra, a Buddhist savant belonging to the 11th century A D, edited by Mahāmahopādhyāya Dr Haraprasad Sastri, M A, C I E, Hon D Litt, 1927 — 2–0

42 **Kalpadrukosa**: standard work on Sanskrit Lexicography by Keśava edited with an elaborate introduction and indexes by Pandit Ramavatara Sarma, Sahityacharya, M A, of Patna In two volumes, vol I, 1928 — 10–0

43 **Mirat-i-Ahmadi Supplement**: by Ali Muhammad Khan Translated into English from the original Persian by Mr C N Seddon, I C S (*retired*), and Prof Syed Nawab Ali, M A Illustrated Corrected reissue, 1928 — 6–8

44 **Two Vajrayāna Works**: comprising Prajñopāyaviniścayasiddhi of Anangavajra and Jñānasiddhi of Indrabhūti—two important works belonging to the little known Tantra school of Buddhism (8th century A D) edited by B Bhattacharyya, Ph D, 1929 — 3–0

45 **Bhāvaprakāśana** of Sāradātanaya, a comprehensive work on Dramaturgy and Rasa, belonging to A D 1175–1250, edited by His Holiness Yadugiri Yatiraja Swami, Melkot, and K S Ramaswami Sastri, Oriental Institute, Baroda, 1929 — 7–0

Rs A

46 **Rāmacarita** · of Abhinanda, Court poet of Hāravarsa (cir 9th century A D ) edited by K S Ramaswami Sastri, 1929 — 7–8

47 **Nañjarājayaśobhūsana** , by Nrsimhakavi *alias* Abhinava Kalidāsa, a work on Sanskrit Poetics and relates to the glorification of Nañjarāja, son of Vīrabhūpa of Mysore edited by Pandit E Krishnamacharya, 1930 — 5-0

48 **Nātyadarpana** . on dramaturgy by Rāmacandra Sūri with his own commentary edited by Pandit L B Gandhi and G K Shrigondekar, M A 2 vols , vol I, 1929 — 4–8

49 **Pre-Dinnāga Buddhist Texts on Logic from Chinese Sources** . containing the English translation of *Śatáśāstra* of Āryadeva, Tibetan text and English translation of *Vigraha-vyāvartanī* of Nāgārjuna and the re-translation into Sanskrit from Chinese of *Upāyahrdaya* and *Tarkaśāstra* edited by Prof Giuseppe Tucci, 1930 — 9–0

50 **Mirat-i-Ahmadi Supplement** . Persian text giving an account of Guzerat by Ali Muhammad Khan edited by Syed Nawab Ali, M A , Principal, Bahauddin College, Junagadh, 1930 — 6-0

51 **Trisastiśalākāpurusacaritra** · of Hemacandra, translated into English with copious notes by Dr Helen M Johnson of Pennsylvania University, U S A Vol I (Ādiśvaracaritra), illustrated, 1931 .. — 15–0

52 **Dandaviveka** a comprehensive Penal Code of the ancient Hindus by Vardhamāna of the 15th century A D edited by Mahamahopadhyaya Kamala Krsna Smrtitirtha 1931 — 8–8

53 **Tathāgataguhyaka or Guhyasamāja** : the earliest and the most authoritative work of the Tantra School of the Buddhists edited by B Bhattacharyya, Ph D — 4–4

54 **Jayākhyasamhitā** an authoritative Pāñcarātra work of the 5th century A D highly respected by the South Indian Vaisnavas edited by Pandit E Krishnamacharyya of Vadtal, with one illustration in nine colours and a Foreword in English by B Bhattacharyya, Ph D , 1931 — 12–0

55 **Kāvyālankārasārasamgraha** . of Udbhata with the commentary, probably the same as Udbhata viveka of Rājanaka Tilaka (11th century A D ) edited by K S Ramaswami Sastri — 2–0

56 **Pārānanda Sūtra** an ancient Tāntric work of the Hindus in Sūtra form giving details of many practices and rites of a new School of Tantra edited by Swami Trivikrama Tirtha with a Foreword by B Bhattacharyya, Ph D , 1931 — 3–8

57 **Ahsan-ut-Tawarikh** · history of the Safvi Period of Persian History, 15th and 16th centuries, by Hasan-

Rs A

ı-Rumlu edited by C N Seddon, I C S (*retired*), Reader in Persian and Marathi, University of Oxford, 1931 *Shortly*

58 **Padmānanda Mahākāvya** · giving the life history of Rsabhadeva, the first Tirthankara of the Jainas, by Amarachandra Kavi of the 13th century edited by H R Kapadia, M A *Shortly*

## II BOOKS IN THE PRESS

1 **Nātyasāstra** Vol II edited by M Ramakrishna Kavi

2 **Mānasollāsa** or Abhilasitārthacintāmani, vol II, edited by G K Shrigondekar, M A

3 **A Descriptive Catalogue of MSS. in the Oriental Institute, Baroda,** vol II (S'rauta, Dharma, and Grhya Sūtras) compiled by the Library staff

4 **A Descriptive Catalogue of MSS. in the Jain Bhandars at Pattan** edited from the notes of the late Mr C D Dalal, M A , by L B Gandhi, 2 vols

5 **Siddhāntabindu .** on Vedānta philosophy by Madhusūdana Sarasvatī with commentary of Purusottama edited by P C Divanji, M A , LL M

6 **Portuguese Vocables in Asiatic Languages** translated into English from Portuguese by Prof A. X Soares, M A , Baroda College, Baroda

7 **Abhisamayālankārāloka :** a lucid commentary on the Prañjāpāramitā, a Buddhist philosophical work, by Simhabhadra edited by Prof Giuseppe Tucci

8 **Kalpadrukosa, Vol II** indexes and vocabulary prepared by the late Mahamahopadhyaya Pandit Ramavatara Sarma Sahityācārya, M A , of Patna edited by Pandit Shrikant Sarma of Monghyr

9 **Śaktisangama Tantra** a voluminous compendium of the Hindu Tantra comprising four books on Tārā, Kālī, Sundarī, and Chhinnamastā edited by B Bhattacharyya, Ph D

10 **Nātyadarpana, Vol II** introduction in Sanskrit giving an account of the antiquity and usefulness of the Indian drama, the different theories of Rasa, and an examination of the problems raised by the text by L B Gandhi

11 **Śabdaratnasamuccaya .** an interesting lexicon in Sanskrit by an anonymous author, compiled during the reign of the Mahratta King Sahaji of Tanjore edited by Pandit Vitthala Sāstrī, Sanskrit Pathaśāla, Baroda

12 **Iṣtasiddhi :** on Vedānta philosophy by Vimuktātmā, disciple of Avyayātmā, with the author's own commentary edited by M Hiriyanna, M A , Retired Professor of Sanskrit, Maharaja's College Mysore

13 **Alamkāramahodadhi** a famous work on Sanskrit Poetics composed by Narendraprabha Sūri at the

